॥ शास्त्रविशारदजैनाचार्ययोगनिष्ठाऽध्यात्मज्ञानदिवाकरपरमपूज्यसद्गुरुश्रीमद्–
बुद्धिसागरसूरीश्वरपादपद्मेभ्यो नमः ॥

॥ तपोगणगगनदिनमणिप्रसिद्धवक्ताश्रीमद्–अजितसागरसूरिप्रणीतम् ॥

# ॥ श्रीचन्द्रराजचरित्रम् ॥

प्रकाशकः—श्रीअजितसागरसूरिशास्त्रसंग्रहस्यकार्यवाहक–
श्रेष्ठिवर्य तुलजारामाऽऽत्मजः शामलदासः—मु० प्रांतिज।

वीर सं० २५५३.
विक्रम स० १९८३.
बुद्धि सं० २

ईस्विसन् १९२७.
प्रतयः ५००.

मूल्यं—पञ्चरूप्यकम्।

भावनगरे—आनन्दाख्ये मुद्रणयन्त्रे गुलाबचन्द्र लल्लुभाईत्यनेन मुद्रयित्वा प्रकाशितम् ।

☞ पुस्तकप्राप्तिस्थानं—

अजितसागरसूरिशास्त्रसंग्रहकार्यवाहक शा. शामलदास तुलजाराम.

मु० प्रांतीज. जील्ला अमदावाद—( गुजरात )

॥ ॐ अर्हम् ॥

# ॥ प्रस्तावना ॥

" नमः सुरासुरेन्द्रपूजिताय विगतमोहाय श्रीवीराय "

सुविदितमेतदखिलविद्वज्जनानांहिताऽहितार्थोपदेशकानि विविधानि पूज्यपादारविन्दपूर्वाचार्यप्रणीतानि बहूनि प्राकृतसंस्कृतगद्यपद्यात्मकानि मधुरवचनमकरन्दरसभृतानि हृदयंगमानि विशुद्धार्थबोधकानि सद्वर्त्मदर्शकानि महाचरित्राणि प्रथितानि सन्ति । आर्हत दर्शनग्रन्थानां सम्पदोऽनुयोगचतुष्टयेन पल्लविता वरिवर्त्तन्ते, तत्र चरिताऽनुयोगः सर्वेषां सुधियां सुगमत्वाद्बोधकत्वाच्च लोकेषु मुख्यतां दधाति, यतः विभिन्नप्रवृत्तीनां जनानां नैसर्गिकाणि विचित्राणि चरित्राणि चरिताऽनुयोगादेव ज्ञायन्ते, सुखदुःखफलभूतानि पुण्यपापानीति धर्माऽधर्मौ चरित्रकथानकाद्विशदीभवतः, अन्यच्च सुकृतदुष्कृतभाजोदेहिनो मिष्टकटुफलानि भजन्ति, पृथिव्याविभूषणंधर्माऽधर्मविवेकज्ञः पुरुषः, तस्य विभूषणं न्यायाऽर्जिता लक्ष्मीः, साऽपि दानविभूषणा, दानस्य विभूषणं पात्राऽपात्रविवेकः, शरीरस्यविभूषणं निःपक्षपातं शास्त्रं, तस्य विभूषणं प्रशमः, तद्विभूषणंशीलमित्यादि तत्त्वजिज्ञासा चरिताऽनुयोगादेवसिद्ध्यति, दुरन्तदुःखौघनिदाने भवोदधौ निसज्जतांदेहिनामुद्धरणशीलः सर्वज्ञोदितोधर्मः खल्वेकः, सचदानशीलतपोभावनाख्यभेदेनचतुर्धाप्ररूपितः प्राचीनैः सूरिपादैः । तदतिदार्ढ्याय संस्कृताः प्राकृताश्च ग्रन्था यथामति निर्मातव्या मतिमद्भिः, यतः पुरातनपद्धतिर्नव्याहन्येत । विशेषतोविज्ञापनीयञ्चैतद्—प्रखरपाण्डित्यधा-

रकाऽसाधारणगुणगणसेवधिजगज्जनोद्धारकजैनशासनोद्भावक मुनिश्रीमोहनविजयविनिर्मितश्चन्द्रराजरासः (चन्दरास) गूर्जरभाषाऽनुबद्धः, सचदेशभाषाविभूषितोऽपिविविधरसकलितत्त्वादधुनापर्वदिवसेषुप्रायोऽभिगीयते, प्राचीनानांचिरंतनोऽयंलेखोमहते उपकाराय सञ्जातोऽस्ति। आधुनिकाः केचित्संस्कृतोक्तिषु रसवत्तां मन्यमानाः बह्वर्थबोधकानपितादृशान्रासकादिप्रबन्धान्नबहुमन्यन्ते, नापितथाविधानांमुद्रापणे प्रमोदमादधते, "यतोभिन्नरुचिर्लोकः" आबालवृद्धानामपिश्रोत्रपुटयोःसुखावहान्यपि देशभाषयारचितानिपुस्तकानिमनोहराण्यप्यनेकच्छन्दोलङ्कृतिमण्डितानि कोविदानांमनांसि बहुधा न रञ्जयन्ति, विद्यमानेह्युपायेसर्वेषांचित्तरञ्जनं विधातव्यमितिनिर्विवादं प्रतीयते, अतस्तदनुरोधेन चन्द्ररासस्यचरित्ररूपेयंसंस्कृतकृतिर्विहिता, अस्यचन्द्रराजचरित्रस्यनिर्माता कः ? सचजन्मना कं देशं कदा व्यभूषयत् ? एतद्ग्रन्थनिर्मातुर्गुरुश्चकः ? इति जिज्ञासायां प्रस्तावगतं तदपि कथनीयं नाऽस्थाने गण्यते। सुविदिताऽध्यात्मतत्त्वनिकराणां निखिलजनसंशयद्रुमविदारणैककुञ्जराणां महामिथ्यात्वमोहान्धकारदिनकराणां दुर्वादिवादमत्तेभकुम्भतटविदलनकेसरीणामष्टोत्तरशत (१०८) ग्रन्थनिर्मातॄणां तपागच्छतिलकानां शास्त्रविशारदजैनाचार्ययोगनिष्ठाध्यात्मज्ञानदिवाकरश्रीमद्—बुद्धिसागरसूरीश्वराणां पादपङ्कजेषु चञ्चरीकायमाणः प्रसिद्धवक्ताश्रीमान्अजितसागरसूरिर्जन्मनागूर्जरदेशस्थचारुतर (चरोतर) प्रदेशविभूषणे नारग्रामेख्यातिभाक्जातः, अस्यग्रन्थनिर्मातुर्जन्म वि. संवत् १९४२ पौषशुक्लपञ्चम्याम्, ढुण्ढकमतदीक्षा संवत् १९५६ श्रावण शुक्लपञ्चम्यां स्तम्भनतीर्थे, संवेगिदीक्षा—संवत् १९६५ ज्येष्ठकृष्णैकादश्यां श्रीराजनगरे, गणिपदंपन्यासपदञ्च संवत् १९७२ मार्गशीर्षशुक्लपञ्चम्यां सानन्दपुरे, आचार्यपदं संवत् १९८० माघशुक्लदशम्यांप्रांतिजनगरे, अथास्यचरित्रस्यप्रधानविषयः सर्वगुणशिरोमणिः शीलगुणः समस्ति, परमवान्तरवर्त्तिनोऽन्येबहवोविषयभेदाःसन्ति, किञ्च सर्वतीर्थाधिराजस्यमहातीर्थस्यशत्रुञ्जयगिरेः द्रव्यतोनिषेवणमपिबहुतर-

मुपकारकमित्यस्माच्चरित्रात्प्रतीयते—“ चतुर्थोल्लासेद्वितीयसर्गे–सूर्यकुण्डपयः स्पृष्टं, सर्वथादुरिताऽपहम् । प्रसिद्धिरितिसर्वत्र, जनकौतुककारिणी ॥१३॥ स्फटीकोज्ज्वलजलराशि–स्तीर्थमणिरिवात्रसूर्यकुण्डोऽयम्। स्पृष्टंयदीयपाथो–जनयतिहृदिचिन्तितंशर्म ॥१॥ दृष्टेप्यस्मिन्प्रलयं,प्रयान्तिपापानितत्त्तणान्नृणाम् । यथामृगेशेदृष्टे, नश्यन्ति मृगाःसहस्रशोऽरण्ये ॥२॥” उक्तंचश्रीमद्पण्डितहंसरत्नसूरिभिः–तद्दानंतच्चरित्रं च, तच्छीलंतत्तपस्त्रिधा । एकवेलंत्रिशुद्ध्याय–द्धाशत्रुञ्जयसेवनम् ॥१॥ स्वर्लोकेयानिविम्बानि, यानिशक्रमहीतले । तान्यर्चितानिसर्वाणि, शत्रुञ्जयजिनार्चनात् ॥२॥ तावद्गर्जन्तिहत्यादि–पातकानिसमंततः । यावच्छत्रुञ्जयेत्याख्या, श्रूयते नगुरोर्मुखात् ॥३॥” तथैववनितानांभूयान्प्रबोधोऽस्माच्चरित्रादुपलब्धव्योविद्यते, गुणावल्याराज्ञ्याश्चरित्रंसकलंस्त्रीजातेर्महोपयोगितांव्रजति, निजश्वश्रूवशीभूतयाययास्वभर्तुः स्वल्पामप्याज्ञामवधीरयन्त्यामहद्दुःखमवेदि, तदुत्तरशश्चिन्तनीयमखिलयोषिताम् । निजपितरिदिवंगतेश्रीमाँश्चन्द्रराजः कुटिलमत्याऽपरमात्रावीरमत्या कुक्कुटयोनिं प्रापितः पश्चान्मानवयोनिंप्रतिपन्नःसप्रभावः सूर्यकुण्डस्य केषांविबुधानांचित्तं नचमत्करोति । तदनुचन्द्रराजेनरहसिपत्रंविलिख्य निजाप्तदूतेनसमंगुणावल्यैनिजपत्न्यैस्वस्वरूपनिवेदनाय प्रेषितम् । ततोनिजभर्तृकरकमलोल्लेखितं पत्रं दूतसमर्पितं भूरिप्रेम्णा स्वयं वाचयित्वा परमार्थंचविज्ञायतयातदुत्तरभूतंपत्रंपुनः तस्मैदूतायप्रत्यर्पितम् । तत्पत्रद्वयंच सर्वासांयोषितांमननीयंहितदंच विभाव्यते,अतस्तत्पत्रद्वयंग्रन्थकर्त्रा ग्रन्थमध्येग्रथितम् । “ स्वपित्राभृशंविडम्बिताऽपिपरप्रणीतप्रवादेनसाऽपवादिताऽपिप्रेमलालक्ष्मीः सत्यवादपरायणाधैर्यंनात्याक्षीत्, अतः सतीमतल्लिकेयंकेषां प्रशंसनीयानस्यात् ? तथैवचन्द्रराजोनिजकर्मानुसारेणकुक्कुटयोनित्वंप्राप्तोऽपिनिजोदारतांप्रख्यापयन्स्वकीयंयशः सर्वत्र प्रथयामास, एतदपितत्त्वंसुकृतिनांविशेषतः परिशीलनीयमविस्मरणीयंच । चन्द्रराजंप्रतितद्विमात्रावीरमत्या ये क्रूरभावाः प्रकटीकृतास्ते सर्वथाधर्मोद्यतानांमानवानांत्रिधाहेयास्तथैवाऽचन्तनीयाविशेषतोविद्यन्ते, यतः––दुष्टस्वभावास्त्रीजातिःकिमकृत्यंनकुरुते ? इत्येतदप्यस्मादुल्ले-

खस्यवाचनात्स्पष्टंप्रतीयते, " निजसभायांसंस्थितेनदेवेन्द्रेणशीलमहिमानंवर्णयितुंचन्द्रराजस्यप्रशंसाविहिता, तामश्रद्दधानः कश्चिद्देवोद्रुतं स्वर्गादवतीर्यकृतविद्याधरीस्वरूपः पोतनपुरनगरस्यपरिसरेसमासीनंचन्द्रराजंविज्ञायतत्समीपस्थायांकस्यांचिद्वाटिकायामस्थात् । निशीथिन्यां तत्कृतंकरुणस्वरंरोदनंनिशम्यनृपतिः सत्त्वरमेकाकीरोदनाऽनुसारेणतत्रगत्वारुदन्तींदीव्यरूपांवनितांविलोक्यतत्कारणंचतेनपृष्टम् , पतिहीना-या मे त्वमेवशरणमधुनामांनस्वीकरिष्यसिचेन्ममप्राणा नक्ष्यन्ति, इतिनिगद्यबहुविधैर्हावभावादिविचेष्टनैर्विलोभितोऽपिसभूपतिर्निजशीलगु-णदाढ्यान्मनागपिनचचाल, तदातस्यशीलगुणमाहात्म्यात्संतुष्टः सत्रिदशः स्वकीयंस्वरूपंप्रकटीकृत्यतंनरेशंनत्वास्तुत्वाचस्वधाम्नि ययौ । इत्ये तदपिशीलवृत्तान्तंसर्वसुखनिदानंसर्वदासर्वेषांसंस्मरणीयमनुकरणीयंच; एवंविधान्यन्यान्यपिसम्यक्त्वादिबोधप्रदानिविविधरसमयानिस्वर्गाऽ-पवर्गमार्गप्रदर्शकानिदानमाहात्म्यबोधकानिधैर्यगुणसाधकानिकथानकानिश्रुतमात्राणिरमणीयानिसंगृहीतानि सन्ति; अस्यचन्द्रराजचरित्रस-मुख्यतश्चत्वारोविभागाउल्लासभेदेनानिबद्धाः,प्रत्युल्लासं च सर्गविभागैः कथानकानिप्रदर्शितानि, चतुर्षूल्लासेषुचप्रत्युल्लासंचतस्रः कलाः प्रदर्शिताः, इत्येतदपिग्रन्थकर्तुरप्रतिमप्रतिभाविशेषोऽनुमीयते, सर्वरसकलितोऽयंप्रबन्धःश्रोतृवक्तॄणामतीवप्रमोदजनकइतिसाद्यन्तनिरीक्षणात्स्पष्टंविज्ञास्यते विबुधानाम् । इदंचरित्रंनकेवलंगद्यात्मकंकुत्रचिन्नूतनानिपद्यान्यपिविविधवृत्तैर्लिखितानि, तथैवप्रासंगिकदृष्टान्तवशात्प्राचीनंसुभाषितमपिसं-गृहीतमस्ति, एतदीयंगद्यपद्यंनकेवलंश्रवणसुखदं किन्तु सहृदयानां चेतोहार्यपि विद्यते, एतदीयोऽर्थो न केवलमपूर्वतयाचित्ताह्लादकः किन्तु-स्वानुभवसंवेद्यसमतयास्वाभाविकतयाचहृदयाऽऽनन्दकारी;एतच्चरित्रान्तःपातिन आनुषङ्गिकाउपदेशा नकेवलंमनोरञ्जयन्ति,किन्तुतत्त्वज्ञानवि-धायका अपिवर्तन्ते, एतत्सकलमपितत्त्वंप्रेक्षावन्तोग्रन्थावलोकनेनैवस्वयमेवानुभविष्यन्तीतिसूतंविस्तरेण, एतद्ग्रन्थकर्तुरन्येऽपि—प्रकरणसु-खसिन्धुः सुभाषितमुक्तावलिश्चतुर्विंशतिजिनस्तुतिर्विविधानिजिनाष्टकानिगुरुपदपूजाकाव्यसुधाकरगीतरत्नाकरौसंवेधषट्त्रिंशिकादयः सं-

स्कृता:प्राकृताश्चग्रन्थाजनतोपकारिणः सर्वत्रविलसन्ति, एतद्ग्रन्थरचनागद्यपद्यात्मिकासर्वजनहितावहाश्रीमदाचार्यवर्येणविनिरमायि, तद्रहस्यंत्वत्रविलेखनेननातीवोपयुज्यते—यदेतच्चरित्रसमवलोकनेनैव स्वयमेवविज्ञास्तदीयंगौरवंमाधुर्यञ्चविज्ञास्यन्ति, किञ्च गुर्जरभाषानुबद्धा ये केचन रासादिप्रबन्धास्ते सर्वे प्राय:संस्कृतप्राकृतग्रन्थानामनुसारेण प्राचीनसूरिभिर्निबद्धाः सन्ति, अयं चन्द्ररासः संस्कृताद्वाप्राकृतात्प्रबन्धादुद्धृतइति न निर्णीयते, यतस्तन्मूलः कश्चित्कुत्राऽपि तादृशः संस्कृत:प्राकृतोवाप्रबन्धोऽधुनानोपलभ्यते, अतोऽयं संस्कृतगिराविरचितः प्रबन्धः संस्कृतसाहित्यवेदिनां हिताय भविष्यति। एतद्ग्रन्थविशोधनेमहताप्रयासेनदत्तदृष्टिर्महाशयवैयाकरणाचार्यश्रीमान् भाईशङ्करशास्त्री पण्डितदलिचन्द्रगान्धिकश्चप्रुफशोधनेसाहाय्यमदात्, अतस्तयोरुपकृतिश्चिरंस्मरणीया, छद्मस्थमतिप्रमादवशात्क्वाऽपिग्रन्थनिर्मातृशोधकाक्षरनियोजकानां दोषःप्रेक्षावतांदृष्टिपथमवतरेत्तदासनिराकरणीयस्तैः। यतः— गच्छतः स्खलनंक्काऽपि, भवत्येव प्रमादतः। हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः॥ १ ॥ इत्याशास्ते—एतद्ग्रन्थनिर्मातृजैनशासनरसिकाचार्यश्रीमद्अजितसागरसूरीश्वरपादपङ्कजचञ्चरीकायमाणोमुनिहेमेन्द्रसागरः ॐ शान्तिः ३.

मधुपुर्यां विक्रमाब्द १९८३ फाल्गुन शु. ८ शुक्रवासरे वी. सं. २४५३. बुद्धि सं. २

## कलिकालसर्वज्ञश्रीमद्-हेमचन्द्राचार्यगुणाऽष्टकम् ॥

### मन्दाक्रान्तावृत्तम्

नित्यानन्दं परमसुखदं ध्येयमूर्त्तिप्रभावं, ज्ञानागारं भवभयहरं सौम्यतापन्नभावम् ।
शुद्धस्वान्तं सकरुणमतं वन्दकानां सुनावं, सूरिं ध्याया-म्यहमनुदिनं हेमचन्द्रं मुनीन्द्रम् ॥ १ ॥
कृत्याकृत्यं जिनमतवता-माततानाऽति शुद्ध्यै, लोकालोकप्रथितसुमति-र्योऽनवद्यप्रतापः ।
वैरिव्रातं विमतिसदनं दूरतः संजहार, सूरीशं तं हृदयकुहरे हेमचन्द्रं स्मरामि ॥ २ ॥
निर्विघ्नानां परमशरणं संसृतौ क्लेशराशौ, भव्यारामं कलिवनदवोत्तापितानां नराणाम् ।
तं देवर्द्धं श्रुतिपथगतं चोणिपानामचिन्त्यं, सूरिं ध्याया-म्यहमनुदिनं हेमचन्द्रं मुनीन्द्रम् ॥ ३ ॥
क्षोणीपालं जिनमतविदं चक्रिवान्धर्मचक्री, शुद्धज्ञानाऽक्षुभितमनसं वीरकौमारपालम् ।
योविद्यानां सकलभुवने सिद्धिदानां प्रणेता, तं सूरीशं प्रमुदितमना हेमचन्द्रं स्मरामि ॥ ४ ॥
शास्त्रश्रेणीं विविधविषयां यो वितेने विशालां, सच्चारित्रा-ण्यतिरसमया-न्यद्वितीयानि चक्रे ।
सिद्धान्तानां जिनततिकृतां, पारदृश्वाऽवनीय-स्तं सूरीशं प्रमदमनसा हेमचन्द्रं भजामि ॥ ५ ॥

नक्षत्रेशप्रमितवदनं वन्दनीयक्रमाब्जं, विघ्नव्रातप्रमथनपटुं स्वच्छमुद्रास्वरूपम् ।
शान्ताशान्तं मनुजपदवीं पूर्णतायै प्रयातं, वन्देभूयस्तमतुलगुणं हेमचन्द्रं यतीन्द्रम् ॥ ६ ॥

सिद्धक्षोणीपतिमतिदयादाक्षिणं यश्चकार, योगाङ्गानि क्षतमलचया-न्याततानाऽतिशुद्धः ।
पीठारूढोऽम्बरतलगतोऽबोधयत्सभ्यलोकान्, तं सूरीशं सकलहितदं हेमचन्द्रं भजेऽहम् ॥ ७ ॥

वन्द्यैर्वन्द्यः प्रचुरदयया, वासितान्तःस्वभावो, योऽनन्तानामतिशयजुषां, संपदां मुख्यभूमिः ।
आविश्चक्रे जनसुखकृते, सिद्धिमूलश्च सौख्यं, तं सूरीन्द्रं मननविषयं, हेमचन्द्रं प्रकुर्वे ॥ ८ ॥

हेमचन्द्राष्टकं नित्य-मिदं यो मनुजः स्मरेत् । सप्रभातप्रभाराशि-रिवोदयमवाप्नुयात् ॥ ९ ॥

# शुद्धिपत्रम्.

| पत्रम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ८ | २ | ३ | शुश्रुषा | शुश्रूषा |
| ९ | १ | ११ | ,, | ,, |
| १० | १ | ६ | मङ्गल | मङ्गल |
| ११ | १ | १४ | जला | जडा |
| १२ | २ | १० | प्ररा | परा |
| १७ | १ | ७ | पुस्क | पुष्क |
| ,, | २ | १३ | विद्यारेण | विद्याधरेण |
| १८ | १ | १० | प्रारेमे | प्रारेभे |
| ,, | २ | १२ | भिन्नि | भिन्न |
| २४ | २ | ६ | मभिर्व | मभिव |
| २७ | १ | ,, | स्थानाना | स्थानानां |
| २९ | १ | ११ | स्तस्म | स्तस्मा |
| ३० | ,, | १ | लैङ्गि | लैङ्गि |
| ३८ | २ | १४ | इद्दशी | ईदृशी |
| ४४ | ,, | २ | चंत | चेत |
| ,, | ,, | ४ | नमो | नभो |
| ४६ | ,, | ८ | जाननी | जांनी |
| ४८ | ,, | ४ | स्वंमा | स्वभा |
| ५८ | १ | ८ | ऽचिं। | ऽचिरा |
| ६० | २ | २ | ताद्व | तादृ |

| पत्रम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पत्रम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|---|---|
| ६२ | ,, | ७ | दृक्ष्यते | द्रक्ष्यते | १०२ | ,, | ,, | लप्स्यसे | लप्स्यते |
| ६८ | ,, | ,, | विजय | विजया | ,, | ,, | २ | दर्शन | दर्शना |
| ७२ | ,, | ८ | जनंक | जनकं | १०६ | ,, | ५ | आमत्य | आगत्य |
| ७७ | १ | ११ | अन्नात्व | अमन्नात्व | ११० | १ | ३ | मुरचा | मुखा |
| ८० | ,, | ९ | पम्तन्तं | पतन्तं | ११८ | २ | १३ | शीली | शिली |
| ८६ | ,, | ५ | सत्त्वेम्यो | सत्त्वेम्यो | ११९ | २ | १ | नान्द | नन्दं |
| ८७ | ,, | १२ | क्रिय | किय | ,, | ,, | २ | विनीता | विनीताना |
| ९३ | ,, | १३ | खङ्गः | खङ्ग | १२७ | १ | १२ | प्रयत्ननः | प्रयत्नतः |
| ९६ | २ | ८ | सुबुद्धि | सुबुद्धिः | १२९ | ,, | ७ | बन्धुः | बन्धु |
| ,, | ,, | ९ | अरिक्षि | अरक्षि | ,, | २ | २ | सत्व | सत्वे |
| ९९ | १ | ४ | मघि | मवि | १३१ | १ | ५ | दत्वा | दत्त्वा |
| १०० | ,, | ९ | काञ्चि | काचि | ,, | २ | १ | भवाध्वां | भवाध्वा |
| ,, | २ | १ | निरमात् | निरगात | १३३ | १ | ,, | वसज्जि | वसञ्जि |

| पत्रम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १३४ | २ | १० | वन्द्र | चन्द्र |
| ,, | ,, | १४ | तथै | तथैव |
| १३५ | १ | १० | पत्न | यत्र |
| ,, | ,, | १४ | कृतिज्ञ | कृतिजन |
| ,, | ,, | ,, | धर्मं | धर्मं |
| ,, | २ | ८ | भुञ्जमानर्यो | भुञ्जानयो |
| १३६ | ,, | ११ | वर्ती | वती |
| १३७ | १ | ७ | दम्मती | दम्पती |
| १३९ | २ | १० | वृत्तात्तं | वृत्तान्तं |
| १४९ | २ | १ | विराजत | विराजते |

| पत्रम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १५३ | १ | ३ | पराङ्ग | पराङ् |
| १६२ | १ | १० | गोष्टीं | गोष्ठीं |
| १६५ | ,, | १ | निजाङ्ग | निजाङ्ग |
| १६८ | ,, | १४ | आयुषा | आयुषो |
| १६९ | २ | १३ | सर्वथैतै | सर्वथैते |
| १७१ | १ | ५ | तरङ्ग | तरङ्ग |
| ,, | २ | १४ | दुखत | दुःखत |
| १७४ | ,, | ७ | चिन्त | चिन्ता |
| ,, | ,, | १४ | स्वान्तभवि | स्वान्तर्भाव |

॥ ॐ ॥

॥ श्रीमदर्हद्भ्यो नमः ॥

॥ परमपूज्यसद्गुरुश्रीमद्बुद्धिसागरसूरीश्वराय नमः ॥

प्रसिद्धवक्ता-श्रीमद् अजितसागरसूरिविरचित—

# ॥ चन्द्रराजचरित्रम् ॥

धरणीन्द्र आदिमोऽभू-द्यश्चाद्यस्तीर्थनायको जज्ञे। प्रथमं जिनेश्वरं तं, नाभेयं भानुभं शुभं नौमि ॥ १ ॥ अमेयकान्तिः सुशिखाकलापो-मूर्ध्नि स्थितो यद्वृषभध्वजस्य। अगाधपद्मद्रहनिर्गतः किं, सुनिर्मलः सिन्धुजलप्रवाहः ॥२॥ क्षुधां सहित्वाशु जगाम केवलं, ददौ स्वमात्रे प्रथमं तदेव यः। स्वकीयमातुर्हितदायकोऽभव-त्तज्जन्मनैवावनिरुत्कटोन्नतिः ॥ ३ ॥ अतिविभव-भोगभाजो-मुकुरालयसंस्थिता नृमूर्द्धन्याः। यद्वंशजा हि वव्रु-र्मुक्तिवधूं निर्मलेन भावेन ॥ ४ ॥ इक्ष्वभिलाषी योऽभूद्, बाल्ये-तद्रसमियाय पारणके। स एव मङ्गलं द्रा-क्तनोतु मिष्टं विशिष्टशिष्टानाम् ॥ ५ ॥ यो द्वादशाङ्गधारी, सूत्राणि समानि सूत्रया-

मास । ज्ञानसुधोदन्वन्तं, नमामि तं पुण्डरीकगणनाथम् ॥ ६ ॥ जाड्यान्धकारहारिणि ?, सचराऽचरबोधदायिनी त्वमिह । शीलकथावक्तुर्मे, वाग्देवि ? सदाननालये तिष्ठ ॥ ७ ॥ गुरुवारिनिधिस्तरितुं, गुणरत्नभृतोऽनिशं कथं शक्यः । यस्योपकृतिरनल्पा, तं गुरुदेवं स्तवीम्यहं भूयः ॥ ८ ॥ श्रीचन्द्रनरेन्द्रस्य, चरितं सच्छीलवृत्तितो रम्यम् । श्रवणाऽलङ्कृतिभूतं, तनोमि धर्मार्थसिद्धिसन्तानम् ॥ ६ ॥ यस्मिन् श्रुतेऽनवद्ये, सुधां मुधा मन्वते विबुधवाराः । तं कविकृतं विलास-माकर्णयतैकमानसा रसिकाः ? ॥१०॥ हृद्यः कथाप्रबन्धो-व्याख्याता मिष्टवाग्विलासोऽपि । श्रोता चार्थविदग्ध-स्तदैव माधुर्यमाप्यते शस्यम् ॥११॥

समस्ति श्रीमाँश्चतुर्दशराजलोकप्रमाणलोकत्रयमध्यवर्त्ती पृथ्व्यायतैकैकराजप्रमाणऊर्द्धाऽधोभागेऽष्टादशशतयोजनमानस्तिरश्चीनोभूलोकः। तत्रैकलक्षयोजनप्रमितः पार्वणरजनीकरवर्त्तुलाकृतिरस्ति जम्बूद्वीपनामद्वीपः। तस्योत्तरकुरुपूर्वार्द्धे जाम्बूनदमयो निभृतोद्दामभूरिरसो जम्बूतरुर्विलसति, यस्य परितः चतसृषु दिक्षु मणिरत्नविभूषिता पद्मवेदी विराजते, तस्या मध्यपीठेऽष्टयोजनविस्तृतश्चतुर्योजनोन्नतो वज्ररत्नमयमूलसन्ततिररिष्टरत्नमयकन्दो वैडूर्यमयद्वियोजन (षड्योजन इति पाठान्तरम्) प्रमितस्कन्धः क्रोशद्वयविस्तृतचतुःसुशाखः स जम्बूतरुर्विभ्राजते, ताश्चशाखाः प्रत्येकमुच्चायामत्वे पञ्चदशक्रोशप्रमाणास्तन्मध्यशाखाग्रेऽमेयविक्रमाकलितानाढ्याभिधेयसुररचितं सिद्धायतनं द्योतते, पुनः स जम्बूतरुः सौवर्णशाखाप्रशाखाप्रचयो, वैडूर्यमयरमणीयपलाशराशिर्यशोविवृद्धहाटकमयसत्पल्लवो, राजतफलकुसुमसंभारः, शाश्वतभावं परिधत्ते । अपरेऽपि तन्निकटवर्त्तिनोऽनेकजम्बूपादपाः सन्त्यतस्तन्नाम्ना जम्बूद्वीप इतिप्रसिद्धिर्जज्ञे, तत्र षडखण्डखण्डमण्डिताष्टमीशशधरप्रकाशं श्रेयोभरभरितं भरतक्षेत्रं सकलक्षेत्रमूर्द्धन्यतामावहति,-यतो यत्र विशेषतया तीर्थराट्सिद्धाचलतीर्थं पावनतरं विराजते ।

तद्यथा—यस्मिन्दृष्टे क्षीयतेऽघराशि–र्यस्मिन्प्राप्ते लभ्यते ज्ञानराशिः । यस्मिन्गीते तीर्यते वारिराशि–र्यस्मिँस्तुष्टे चात्तयः पुण्यराशिः ॥ १ ॥

किञ्च संमिलच्चतुर्दशसहस्रापगे गङ्गासिन्धू सरिद्वरे, यं द्वीपं–सततं पावयतः। यस्मिँश्चार्यदेशानां सार्द्धपञ्चविंशतिस्तन्मध्येऽखण्डविलासी लक्ष्मीवान् विधुदीधितिप्रकाशैरुद्दण्डैः पयोजखण्डैर्निजैश्चिन्हैरिव परितो विराजमानः सकलविषयाणामधिपतिः पूर्वदेशोऽतिरमणीयतां बिभर्त्ति । भानुमाल्यपि यमासाद्य प्राप्नोत्युदयताम् । जिनेन्द्राश्च तत्र लब्धकेवला विशेषतो विराजन्ते, निशाकरोऽपि तमेव देशमासाद्य पूर्णकलो भवति, स्वर्धुन्यपि क्षोणीपृष्ठे लुठन्ती दुरितचयचमूं निर्भरं भर्त्सयन्ती कनकगिरिगुहाखण्डगण्डशैलात्प्रस्खलन्ती पाथोधिं पूरयन्ती तत्र प्रवहति, यस्मिन्नतिपीवरस्तनकलशद्वयभारार्दिता मुहुरुत्थातुमशक्ता विदग्धशालिगोप्यो निजगीतरवेण स्फुटकलमाग्रमञ्जरीणां भक्षकं हरिणनिकुरम्बं विमोहयन्ति. यत्र चीत्कारनिनदबधिरीकृताऽखिलदिगन्तरैरतएवाह्वानं कुर्वद्भिरिवेक्षुयन्त्रैः समाकृष्टाः पथिकवृन्दाः सरसरसामृतं पिबन्तोऽध्वपरिश्रमं न विदन्ति, यत्र समाश्रितानां सन्तापवितानपरिमोपकास्तुङ्गतामादधानाः फलसम्पद्भिर्नमन्तः सच्छाया भूमिरुहाः सदैव सरसतया महद्भिस्तुल्यतां बिभ्रति, अविरलैरकृष्टपच्यैर्विपुलफलशालिभिरशेषधान्यैः सम्पन्नं यं दुर्जनाऽवर्णवादा दोषातीतं पुमांसमिव ग्रहोद्भूता अवग्रहाः स्प्रष्टुमप्रभवः । तद्भूभामिनीभालतिलकायमानाऽखिलाऽमानवस्तुविभूषिता, नीलगिरिप्रतिमविलोलकल्लोलमालयाऽपरिमितकुक्षिणा स्वकीयेन वारिखातेन तद्रत्नान्यभीप्सुना पयोराशिनेव समन्ततो वेष्टिता, शशाङ्कबिम्बचुम्बनोत्सुकैः संगीतध्वनिमुखरैः प्रासादनिकरैर्विराजमाना समस्त्याभापुरी प्रथीयसी, महाविभवसम्पन्नां यामवलोक्य लङ्काऽलकेऽपि जिह्रीतः ।

यत्प्रासादशृङ्गसंलग्नरत्नोपलमरीचिभिः सततमन्तरिता ज्योतिश्चक्रप्रभा विभाति, यत्र हर्म्यशिरोलग्नपद्मरागरश्मिचयै-र्विभिन्नमम्बरतलमकाण्डेऽपि सन्ध्याशङ्कां जनयति, यस्यां नभोमणिस्तुङ्गतरप्रतोलीशिखरमधिरुह्य मध्याह्ने प्रपूर्णकलशवदाभाति । विमानमहार्घमणिमौक्तिकमृगमदघुसृणप्रमुखप्रधानवस्तुनिभृतचतुरशितिविपणिकां यां प्राप्य कश्चिदर्थिजनोऽलब्धमनोरथो न निवर्त्तते । यत्र पादपोपचयः केवलं वियोगी[३], नागादिको विलापी परं समजनि, केवलमतिपीडितेक्षुदण्डे वैरस्यं, संग्रामभूमावेव गदाभिघातोऽभवत् । तीक्ष्णत्वं केवलं बोधे न मानवानां वचसि, काठिन्यं कामिनीजनानां कुचद्वन्द्वे, न मानसे, प्रमदानां पयोधरेष्वेव भङ्गो न तपोभृतां व्रतेषु, विरसत्वं कुकाव्येषु न कामिनां मिथुनेषु, विरोधः पञ्जरेष्वेव, महात्मनां मानसेषु नास्ति, नाभिष्वेव नीचत्वं[६], नाचारेषु कुटुम्बिनाम् । अतुलसुमेधातुलितवाक्पतिमतिविभवविभवशालिविबुधाधिष्ठिता, मणिगणनिबद्धकुट्टिमविराजमानराजवर्त्मा, प्रतिपदवितीर्यमाणानर्गलकार्त्तस्वरसंप्रीणितार्थिगणा, या, प्रथितदानप्रभावमर्थिजनदौःस्थ्यं दलयन्तं भानुतनुमपि लज्जावहं विदधाति. प्रसिद्धेनाऽविरुद्धेनाऽव्यभिचारिणा मानेन महर्द्धिका वणिजस्तार्किका अपि प्रमीमते. यदग्रे धनाध्यक्षःसुमेरुरप्यमार्दवत्वात्तृणायेते । तर्जितरतिरूपानेकरमणीयरमणीनिरुछद्मानचन्द्रा, या, सकलङ्कशशधरामुपहसति दिवं नितराम् । निजोपचितसुकृतभरप्रेरितनिर्जरशिल्पिविनिर्मिताऽनेकादिव्याजिनालयां, या—मभिनन्दितस्वकीयनिखिलबन्धुपद्मो न्यायांशुजालनिहततमोवृन्दः, संकोचितपरन्तपवनिताननिशाकरकमलोदिनकरप्रभो वीरसेनरसेशः प्रशास्ति । यस्य प्रतपत्प्रतापज्वलनेन विलङ्घ्यमानमूर्च्छि—रखिलोऽरातिगणोऽनिशं चकितो दिशो

१ मानरहित. २ पक्षि. ३ अन्यत्र विलापी. ४—अन्यत्र गदा—गदस्याभिघातो न. ५—पक्षिरोधः ६ निम्नत्वं. ७—कर्णम्.

विदिशश्च विलोकितुमप्रभविष्णुर्घूकवार इव गिरिगह्वराणि सिषेव, ।

तथा च—यस्य स्फुरद्यशोभिर्विभासमाने दिगङ्गनावृन्दे । तन्मात्रकार्यकारक-शीतद्युतिनिःस्पृहोऽभवल्लोकः ॥ १ ॥ किञ्च—तुङ्गत्वमद्रिपतिना, सुभगत्वमनुष्णरश्मिना तुलितम् । हरिणेश्वरत्वमनघं, वशित्वमनवद्यसंयतेन्द्रैः ॥ २ ॥ शौर्यं मृगाधिपतिना, वाचस्पतिना समं मनीषित्वम् । गाम्भीर्यमम्बुनिधिना, बलिना च यदीयमौदार्यम् ॥ ३ ॥ युग्मम् ॥

इतिन्यायोर्जितविक्रमेण मानवीं पदवीं लब्धवतस्तस्य क्षोणीनायकस्य सरसिजाऽऽकरसंनिवासिरमारुचिरच्छविः स्फुटतरभोगविलासनिवासवसतिः शरद्विशदरजनीपतिगौरतरस्तनमण्डललक्षितवक्षस्थला कम्बुकण्ठी वीरमती नाम महिषी बभूव ।

अथान्यदा संगृहीतवाजिरत्नाः केचिन्नैगमिकास्तत्र समीयुः, पुरीपरिसरे गृहीतवासा अस्थुः, तदन्तिकाध्वगामिमानवगतिं स्खलयन्ती वाजिराजिर्हेषारवेण पौरजनं प्रेक्षणकौतुकिनमाह्वयतीव । तेषु केचिद्वनायुदेश्याः केऽपि तुर्कदेशिकाः केऽपि हंसजातीयताम्रचूडस्कन्धलघुकर्णविपरीतनयनाश्वासन्, पुनस्ते विजितप्रभञ्जनजवा विद्युद्विलासाऽस्थिरगतिक्रमाः प्रमाणापन्नभूघनघनसम्पदः लक्षितसल्लक्षणवपुषः प्रचण्डजङ्घौजस्काः प्रखरतरखुरोद्घातैर्भूतलं तरलितं कुर्वन्तो निजनिजाश्ववारैः खुरलिकायां बम्भ्रम्यमाणा अश्वपाटिकायां विनिर्गतेन नरवरेन्द्रेण व्यलोकयन्त । नृपतिस्तु मनस्तत्रैव मुक्त्वा सत्वरं निजावासमाजगाम, यद्रम्यं कस्य मनो न हरति, ? तानेव विचिन्तयन्नरनाथः सद्यस्तानर्वाधिपानाकार्य मुखमार्गितं मूल्यं वितीर्य समग्रान्वाजिनः स्वीचकार, यतो महीपतीनां प्रधानं पत्रं[1] स एव प्रचक्ष्यते । तेष्वेकमनुत्तराकृतिं कृत्रिमेतरचारुलक्षणानि कलयन्तं वाजिविद्याविदां

---

१.—वाहनम्.

मनोवृत्तिं रञ्जयन्तं सुकान्तिकलितं अवरमर्वन्तं निरीक्ष्य भूपतिः प्रमुदितो जज्ञे । परन्त्वयं वक्रशिक्षितोऽभूदित्यजानानो भूपतिरन्यदा मृगयाऽभिरतिस्तमेवसप्तिमारुह्य सारसेनापरिवृतो वकुलचम्पकशाल्मलीप्रमुखविटपिवल्लीवितानविरलभानुप्रभं नानाजातीयप्रचुरश्वापदाकीर्णमरण्यं जगाहे । पुरन्दरप्रार्थितश्रीरपि विरतधर्मश्रीः पार्थिवः परप्राणव्यपरोपणव्यसनो मिथुनीभूय रतोत्सवनिरतानि तृणग्रासकलितदीनाननानि वराहव्रातमजादिकुलानि व्याकुलीचकार । प्रथितधनुष्टङ्कारभयत्रस्ता इतस्ततः परिभ्रमद्भिः सादिभिर्निशातशरासिकुन्तप्रमुखप्रहरणैर्जर्जरीकृतदेहा ग्रस्तानपि ग्रासानुद्वमन्तो वराहप्रभृतयः केचित् कुण्डलीकृतवपुषः स्वप्राणरिरक्षया क्षणात्क्वाऽपि निलीयादृश्यतां प्रापुः । जीवितं कस्याभीष्टं न भवेत् ? मृगशशप्रमुखा वराकाः कांदिशिकाः परमाधामिकधामवासिनो नारकचारकवेदनामनुभवन्त इव दुर्धरदुःखार्णवनिमग्नाः स्वकीयोद्धृतिं न लेभिरे,

यतः—मृगमीनसज्जनानां, तृणजलसन्तोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना—निष्कारणवैरिणो जगति ॥ १ ॥

यूथात्तस्मात्कथमपि पलाय्यैको मृगोऽजरठो बलिष्ठपादसञ्चारो दिगन्तदिदृक्षुरिव व्यचीक्रमत् । कूर्दमानं तं निरीक्ष्य नृपतिस्तत्पृष्ठानुसारी झटिति तुरगं मुमोच, बद्धलक्ष्यैकदृष्टिर्निजपृष्ठानुगामिसैनिकानपि स व्यस्मार्षीत् । निर्जितमारुतवेगो हरिणोऽप्यतीतजगतीपतिदृष्टिरभूत् । यावदायुस्तावदन्तकोऽपि वक्रबुद्ध्या तं त्रिलोकितुमप्रभुः ।

उक्तञ्च—अरक्षितं तिष्ठति दैवरक्षितं, सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथोऽपि वने विसर्जितः, कृतप्रयत्नोऽपि गृहे विनश्यति ॥ १ ॥ तथा च—यादृशी भावना येषां, यादृशी भवितव्यता । तादृशं जायते कार्यं, दैवाधीना हि जन्तवः ॥ २ ॥

कुरङ्गं जिहीर्षुरत्यायतकृष्टकोदण्डदण्डो लङ्घितमपि दवीयांसमध्वानं नरेन्द्रो न विवेद, व्यसनासक्तचेतसः सुलभः कुतो

विवेकलाभः! गृहीतनरेन्द्रपृष्ठास्त्वरमाणा अपि तत्पार्श्वानुगास्तमप्रेक्षमाणा अनुसृततत्पदवर्त्मानो महौजसो मध्येऽरण्यमनुययुः। अथ च्युतलक्ष्योद्विपीव नृपो विलक्ष्यीभूतो जातश्रमातिरेको वक्रशिक्षिततुरगगतिमविदँस्तं स्तम्भयितुं यथा यथा खलीनमाकर्षति तथा तथा प्रवृद्धगतिः स तु प्रालेयपयोराशिविलोलतरङ्गराशिरिव चित्रगतिर्जज्ञे। ततो नृपो व्यचिन्तयत्, अहो दैवगतिर्विचित्रा! येनाहमियतीमरण्यभूमिमानीतः स पापो मृगस्तु काऽपि नंष्ट्वा विद्युदिव गतोऽलक्ष्यताम्, मन्येऽहमतो नायं तिरश्चीनः कोऽप्यसुरो वा विकुर्वितरूपो देवो विभाव्यतेऽन्यथा प्रजविनोऽस्य वाजिनः पुरस्तात्कथं व्रजेत्? सैनिका अपि भ्रममाणाः क्वापि भविष्यन्ति, अश्वोऽपि गतिभङ्गं न तनोति,हा!किं विधेयमधुना?निर्जने गहने घोरकष्टाभिभूतस्य मे का गतिः!इत्थंकर्तव्यमूढमानसस्तुरगापहृतो व्रजति स तावत्तत्र निखिलजननिकायप्रमोदसरणीं सुरभिसरोजमकरन्दपिञ्जरितनीरामेकां पुष्करिणीं ददर्श, तदुपकण्ठं मण्डयन् परितो द्राघिष्ठजटामण्डलमण्डितोऽखण्डशाखाषण्डपरम्परो न्यग्रोधतरुस्तेन व्यलोकि, चिन्तितञ्च यदि कथञ्चिदेतच्छाखामासादयामि तदा हेयमिमं हयाधमं विमुच्य स्वस्थो भवाम्येवं विचिन्तयति तस्मिन्नर्वा विज्ञाततदभिज्ञान इव तदभीष्टप्रदेशमभिययौ, राज्ञाऽञ्जसा निजलाघवेन न्यग्रोधशाखा बाहुना विधृता, श्लथत्खलीनस्तुरगोऽपि तत्क्षणं स्खलद्गतिस्तत्रैव तस्थौ। तदानीं जातविस्मयः पार्थिवोऽचिन्तयत्, आकृष्टकविकः प्रबलगतिं निरूपयति, अनाकृष्टायां तस्यां मन्दगतिर्वक्राशिक्षितोऽयमश्व इतिजातनिर्णयस्तस्मिन्भृशं तुतोष,अनुकूले कार्ये कः खलु न रज्येत?"सर्वः स्वार्थं समीहते"। अथ नृपतिः पुनश्चिन्तयति अज्ञाततद्गतिरहं मुधैव वल्गाकर्षणश्रमं व्यधां, नायं दोषो वाजिरत्नस्य, इतिकृपाङ्कुरितमानसो नरेश्वरो झटित्यश्वादुत्तीर्य तं न्यग्रोधतरुच्छायायां निबद्ध्य वारिपिपासया स्वच्छस्फटिकनिर्मलाम्बुपूरायां भूभामिनीभालभूषायां चन्द्रोपलघटितसोपानश्रेणिकायां

सुरभितदिगन्तरालसरोजवृन्दमकरन्दलोलुपमधुपमधुरध्वनिध्वनितायां भूयःपाठीनपरावर्त्तनोच्छलद्वारिसेकैर्व्यपनीतपथिकपरिश्रमायां तद्रामणीयकं निरीक्षितुमिव मन्दमन्दप्रसारिणा मारुतेन प्रकटितानङ्गजनककल्लोलमालायां तस्यां पुष्करिण्यामवततार. अनुत्तरं तद्रम्यत्वं निरीक्ष्य कलितप्रभूतप्रमोदो महीनाथो यथेच्छं जलपानेन निवृत्ततर्षो—विहितमज्जनक्रियो—वीतव्रीडं प्रेमपाशवशीभूतो वारिक्रीडां निर्वर्त्तयामास, ततोऽतिप्रमुदितमानसो नृपतिर्यथातोषं मकरन्दरसं पपौ, विविधक्रीडामिषेण पुष्करिणीं भूषयित्वा बहिर्निर्गत्यापराणि वसनानि परिहितवान्, ततो समाहितमतिः स्वस्थीभूतस्तच्छोभानिरीक्षणप्रहितेक्षणः क्ष्मापतिस्तत्र रहःस्थितामेकां विशालां जालिकामद्राक्षीत्, ततः सूक्ष्मेक्षिकया दत्तदृष्टिस्तत्रातिरमणीयसोपानश्रेणीमवलोक्य तत्रावततार.

इतिश्रीचन्द्रराजचरित्रे प्रथमोल्लासे प्रथमः सर्गः ॥ १ ॥

अथ विकरालविलसदसिसहायो वीराग्रणीर्नृपतिः सोपानवर्त्मनाऽवतरन्कौतुकप्रियोऽग्रे व्रजन्नेकं महारण्यं ददर्श, निजसत्त्वसहचरो निर्भयचेतास्तत्र गच्छन् कस्याश्चिद्बालिकायाः करुणस्वरं रुदितं निशम्य जातविस्मयो व्यचिन्तयत्, अहो ? अस्मिन् पातालविवरे काननं कुतः ? अस्मिन्निर्जनेऽरण्ये दीनानना बाला च करुणस्वरं कथं रोदिति ? असंभाव्यमेतदिति वितर्कयन् यमजिह्वाभं लोलखड्गं नर्त्तयन् परोपकारैकरसिको निबद्धकक्षस्तत्कालं तच्छब्दानुसारी प्रयातुं लग्नस्तावदग्रे मुद्रितलोचनयुगलो विधिविहितपद्मासनासीन ऋजुकायो ध्यानास्थित इव जपमालाकलितकरकमलः कश्चिद्योगी लक्ष्यीचक्रे. तदन्तिके विविधकुसुमधूपालीप्रमुखोपचारवस्तुसंभारः विकोषखड्गलतिका चैका संस्थापिता, तदग्रे च विनिर्मिते कुण्डे प्रचण्डज्वालाजटिलोऽनलो जगज्जिघत्सन्निव प्रज्वलति, इत्थमसमञ्जसप्रयोगदर्शनेन विवेकाविकलं तं विभाव्य नृपस्तस्मै

भृशं चुकोप. अपरस्मिन्भागे निविडवन्धनिवद्धाऽश्रुधाराक्लिन्नलोचनयुगला प्ररुदन्त्येका वालेति जगाद, आभापुरीपते ? शरणागतवत्सल ! शरणहीनां दीनामिमां वालां रक्ष रक्ष, अन्यथाऽयं निर्दयो जटिलो मामस्मिन्प्रज्वलदग्निकुण्डे प्रक्षेप्स्यति. इत्थं श्रुतवनितावचनो जाताऽनुकम्पो नृपोऽञ्जसा तत्पुरोभूय भ्रूसंज्ञया तां सङ्केतं विज्ञाप्य निजलाघवेन तन्निकटस्थितं खड्गं प्रागादाय तं निजगाद, रे ? निर्लज्ज ! निर्घृण ! निष्ठुरमानस ? पापक्रियारत ! हीनमते ? त्वं भुजोच्छिन्नवैरिवारेऽधर्मचक्रनिवारके मयि विद्यमानेऽवलाजनमिमं कथं वलये प्रकल्पिष्यसि ! रे ? भिक्षुकाधम ! सत्त्वरमिमां वालां निर्बन्धनीकुरु, मत्तः प्राणभिक्षां याचस्व, अथवा योध्धुं सज्जीभव, अधुना त्वां न विमोक्ष्यामि; एवं नरेन्द्रवचनं श्रोत्रयोस्तप्तत्रपुसमानं निशम्य ध्यानाडम्बरं परित्यज्य निजजीवितत्राणविहस्तः कौपीनमात्रपरिग्रहः स योगी झटिति प्रणश्य क्वाऽपि वनवीथिकायामदृश्यतां ययौ. नरेन्द्रस्तत्पृष्ठं न जगाम, विद्यासाधनसकलसामग्रीं च स्वयं गृहीतवान्. यतश्चोक्तम्–

सत्त्वेन भ्राजते प्राणी, सत्त्वशाली नरोत्तमः। सर्वलोकनतो लोके, समग्रसंपदाश्रयः ॥ १ ॥ सत्त्ववान् पूज्यते लोके, परोपकृतिमान् स च। स एव रक्षणे दक्षो–विपक्षो विपदां सदा ॥२॥ दीनरक्षापरो राजा, पराक्रमविभूषितः। इहैव लभते भोगान्, परत्र सुखमाप्नुयात् ॥ ३ ॥ तथाच–सुसतीनां वलं शीलं, तस्करस्यानृतं बलम्। अनाथानां वलं राजा, वालस्य रुदितं बलम् ॥ ४ ॥ सेनापरिच्छदो राज्ञां, विक्रमोर्जितचेतसाम्। केवलं सत्त्वमुत्कृष्टं, जगत्त्राणविधायकम् ॥ ५ ॥

ततो जगतीपतिस्तां वालां विबन्धनां विधायादृतः पृच्छति स्म, सुदति ! निरुपमलावण्यशाले ! त्वमस्य पापात्मनो वशे कथं पतिता ! आभापतिस्तव प्रियतमः कथं संजातः ! तच्च विज्ञानं तव कुतः सञ्जातम् !

त्वद्वृत्ता कामभिख्यां बिभर्ति ? अधुना निर्भयमानसा स्वास्थ्यमाधाय सकलोदन्तं निवेदय, त्वां सत्कुलोत्पन्नां वेद्मि, मत्तः किञ्चिदपि त्वया न भेतव्यम्. ततो नैसर्गिकाधरपल्लवाधरीकृतप्रवालश्रीर्दाडिमकलिकाकलितद्विजराजिद्युतिद्योतितदिग्वलया, सौकुमार्येण मारवनितामपहसन्ती, कलरवेण परभृतामवधीरयन्ती सा मृगाक्षी तमेव निजेष्टं भर्त्तारं विज्ञाय लज्जावनतमुखीति वक्तुमारेभे, राजन् ! आभापुर्याः पञ्चविंशतियोजनं सुविशालशाला पद्मपुरी नाम पुरी विद्यते, प्रतापाक्रान्तरिपुचक्रः पद्म-शेखरभूपतिस्तां प्रशास्ति, शारदेन्दुवदना विजितपञ्चेषुरमणीरूपा सारदशारदासममतिवैभवा रतिरूपाभिधेया तन्महिषी समस्ति, तत्कुक्षिसंभवां चन्द्रावतीनामधेयां मामवेहि, विज्ञातजिनतत्त्वरहस्यामतीताऽऽद्यवयसं कामिजनचेतोहारियौवनारूढां मामवेक्ष्य शास्त्रनीतिनिरीक्षिता मे पिताऽनुरूपवरचिन्तामकार्षीत् ।

यदुक्तम्—जातेति पूर्वं महती हि चिन्ता, कस्य प्रदेयेति ततः प्रवृद्धा। दत्ता सुखं स्थास्यति वा न वेति, कन्यापितृत्वं किल हन्त कष्टम् ॥ १ ॥ कीदृग्गुणो वरो विलोक्यः ?॥ कुलञ्च शीलञ्च सनाथता च, विद्या च वित्तञ्च वपुर्वयश्च। वरे गुणाः सप्त विलोकनीया—स्ततः परं भाग्यवशा हि कन्या ॥ २ ॥ मूर्खनिर्धनदूरस्थ—शूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणां, चापि देया न कन्यका ॥ ३ ॥

इत्थं विचिन्तयति तस्मिन्गणकशास्त्रपारदृश्वा नैमित्तिकः कश्चिद्राजद्वारमागतः, निटिलनियोजितकरयुगलेन दौवारिकेण प्रवेशितो विहितप्रणामः स उचितासनभाक् चिन्ताचान्तचेतसं भूधवं निजज्ञानेन व्यजिज्ञपत्, राजन्! चिन्तां मा कुरु, प्रधा-नगुणरत्नखानिराभापुरीनरेशस्तव कन्यकायाः पाणिग्रहं विधाय त्वन्मनोरथपादपं सफलयिष्यति, इत्थं तद्वचःसुधासिक्तो

मत्पितरौ प्रमोदमेदुरमानसौ नैमित्तिकं वसनाभरणैः सन्मान्य व्यसृजताम्, तद्वार्ता प्रसृता सर्वत्र—उक्तञ्च—

वार्ता च कौतुकवती विशदा च विद्या, लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य विन्दुरिव वारिणि वार्यमाण,–मेतत्त्रयं प्रसरतीति किमत्र चित्रम् ॥ १ ॥

तदपूर्ववार्त्तां निशम्य बिभ्रती रोमाञ्चकञ्चुकं विज्ञातभर्त्तृनामाहं वचोऽतीतप्रमोदमचीकलम्, अथान्यदा जलकेलिचिकीर्षया सखीजनपरिकरिता नगरोपकण्ठं पुष्करिणीमगमम्, तत्रास्थितेनानेन दुरात्मना जटिलेनैन्द्रजालिकविद्यया तथाहं प्रतारिता, यथा तमन्तरा कञ्चिदन्यं नापश्यम् । मत्सखीनां दृष्टिबन्धं विधाय माञ्चापहृत्य पुष्करिण्यां गवाक्षमार्गेणोत्तीर्यास्यां वनाटव्यामसावानीतवान् ? अहो ! दुष्टानां किमकार्यम् ! उक्तञ्च—

चारुता परदारार्थे, धनं लोकोपतृप्तये । प्रभुत्वं साधुनाशाय, खले खलतरा गुणाः ॥ १ ॥ कोऽतिभारः समर्थानां, किं दूरं व्यवसायिनाम् । को विदेशः सुविद्यानां, किमकार्यं कुमेधसाम् ॥ २ ॥ अन्यस्माल्लब्धोष्मा, नीचः प्रायेण दुःसहो भवति । न तपति रविरिह तादृग्, यादृगयं वालुकानिकरः ॥ ३ ॥ तथाच–कवयः किं न जानन्ति, किं न पश्यन्ति योगिनः । विरुद्धाः किं न जल्पन्ति, किं न कुर्वन्ति दूर्जनाः ॥ ४ ॥

दुःखाब्धिमग्नाया मे सहायावसरे वीराग्रणीरत्रभवानत्र समागत्य विषमतरादस्माद्व्यसनग्रहान्मामभोचयत्, गुणरत्ननिकराकर ? त्रिभुवनख्यातकीर्त्ते ! यशस्विन् ! दयानिधे ? अमरगणस्तवनीयव्रतस्य पुण्यमूर्त्तेस्तव यशोरेखां स्प्रष्टुं कः प्रभवति ! इदमेव सच्चरितम्–तद्यथा—

विपदि परेषां सन्तः, समधिकतरमेव दधति सौजन्यम् । ग्रीष्मे भवन्ति तरवो–घनकोमलपल्लवच्छन्नाः ॥ १ ॥ तुष्यन्ति भोजनैर्विप्रा–मयूरा घनगर्जितैः । साधवः परसम्पत्त्या, खलाः परविपत्तिभिः ॥ २ ॥ सुजनो न याति विकृतिं, परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः, सुरभयति मुखं कुठारस्य ॥ ३ ॥ सन्तापितोऽपि सुजनः, शुभस्वभावं विशेषतो भजति । क्वथितं किं न चीरं, मधुररसमनोहरं भवति ? ॥ ४ ॥ स्वस्त्यस्तु सज्जनेभ्यो–येषां हृदयानि दर्पणनिभानि । दुर्वचनभस्मसङ्गा–दधिकतरं यान्ति निर्मलताम् ॥ ५ ॥ सहते कटुं न जल्पति, लाति न दोषान् गुणान् प्रकाशयति । रुष्यति न रोषवत्स्वपि, दाक्षिण्यमहोदधिः सुजनः ॥ ६ ।

साम्प्रतमार्यपुत्रेण योपकृतिर्विहिता तदानृण्यं जन्मशतैरपि गन्तुमशक्तास्मि, अथवा निजप्राणप्रियात्राणकृते यत्किमपि विधीयते तत्रोपकृतिः कथं मन्यते ? निजपत्नीपालनं स्वामिनो धर्म एव, यद्येनाङ्गीकृतं तत्तेन यावज्जीवं पालनीयम्—

उक्तञ्च—अद्यापि नोज्झति हरः किल कालकूटं, कूर्मो बिभर्त्ति धरणीं किल पृष्ठभागे ।
अम्भोनिधिर्वहति दुर्वहवाडवाग्नि–मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १ ॥

प्राणप्रिय ? नाहं याचकान्वयसंभूता, यतस्त्वद्यशोराशिं वर्णयामि ? इदानीमीदृगाचारविशेषेण भवन्तमेव प्राणपतिं जानाम्यन्यथाऽस्मिन्दुरन्तदुःखौघे कोऽपरः समायाति ? इत्थंश्रुतचन्द्रावतीभारतीविलासो वीरसेननरेशस्तत्प्रशंसां तन्वानः ससत्कारं तां पुरस्कृत्य त्वरितगत्या निर्जनवनमतिक्रम्य तामेव सोपानश्रेणीमारुह्य तेनैव मार्गेण गवाक्षद्वारमासाद्य पुष्करिण्या बहिर्निश्चक्राम. पुनस्तत्र मज्जनं विधाय सभार्यस्तदुपकण्ठं स्थितस्तावन्निजपृष्ठानुसारिणः समस्तसैनिकास्तत्र समायाताः, विहितनृप-

दर्शना लब्धजीविता इव सर्वे भूमिचुम्बितभालस्थलाः निवेदयन्ति स्म, स्वामिन् ! सुभटवृन्दं परित्यज्य खड्गसहायो भवानत्र निर्मानुषे घोरगहने हिंस्रश्वापदाकीर्णे हरिणजिघांसयाऽनपेक्षितजीवितव्य इव समायातस्तदसाम्प्रतं साम्प्रतं मन्यामहे, यतोऽनर्घ्यरत्नानि भूरिप्रयत्नेन लभ्यन्ते, नरमूर्द्धन्यास्तु प्रतिपदं न लभ्यन्ते.

यदुक्तम्—शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे । साधवो न हि सर्वत्र, चन्दनं न वने वने ॥ १ ॥

स्वामिन् ! यद्यपि महतामापद्विधायका दुर्जना बहवो दृश्यन्ते, तथापि जीवराशयो निजप्रकृत्यनुसारेण फलशालिनो भवन्ति, यो हि यादृक्स्वभावस्तस्य तादृशी मतिः स्फुरति.

उक्तञ्च—यादृशी भावना यस्य, यादृशी भवितव्यता । यादृशी सङ्गतिर्यस्य, तादृशी कार्यसङ्गतिः ॥ १ ॥

सृतसंसृतीनां देहिनां सुखासुखवेदनं दैवायत्तमेव, नात्र परकृतत्राणमुपयुज्यते.

उक्तञ्च—नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः, स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वाहनम् ।
इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः सङ्गरे, तद्युक्तं ननु दैवमेव शरणं धिग् धिग् वृथा पौरुषम् ॥ १ ॥

तथा च—यन्मनोरथशतैरगोचरं, यत्स्पृशन्ति न गिरः कवेरपि । स्वप्नवृत्तिरपि यत्र दुर्लभा, लीलयैव विदधाति तद्विधिः ॥२॥

सुकृतिनः सर्वत्र विजयन्ते, पञ्चाननमिव भवन्तममङ्गलमृगाः कथं निरीक्षन्ते ? युष्मद्भुजाश्रिता वयमप्यशर्मवेदनां न विदामः, देव ? निर्जितनिर्जररमणीरूपा केयं कन्यामतल्लिका ? भवच्छरणं कुतो लब्धमनया ? तद्वृत्तान्तमगोपनीयञ्चेन्निवेदयतु नाथः, भूपालेन मृगानुसारितुरगापसरणादारभ्यासमागममखिलमुदन्तं निवेदितम्, तदुदितमलौकिकमुदन्तं निशम्य

जातकौतुकाः समस्तसामन्तास्तं प्रशशंसुः, ततो दानशौण्डः क्षत्रकुलावतंसो धैर्यकुलभवनं स्थिरतरवाक्प्रचारः समारूढवाजिरत्नो नृपतिः कुमारिकासामन्तादिपरिवृतो महता महेन निजपुरीं प्रविवेश, प्रतिपदं प्रमोदमादधानैर्निर्व्याजैः पौरजनैरभिनन्द्यमानो नृपतिर्निजप्रासादमलञ्चकार· अथ वीरसेननरेशो वाक्कुशलं निजदूतं संप्रेष्य पद्मशेखरनराधिपं व्यजिज्ञपदिति, भवदङ्गजा सप्रमोदाऽत्र विराजते, तां मिलितुं त्वया सत्वरं समागन्तव्यम्, त्वदेकध्याना चन्द्रावती त्वद्दर्शनेऽतीवोत्कण्ठायते, तस्मात्परिहृतसकलव्यापारेण त्वया सद्यो दर्शनदानेन विषादह्रासो विधातव्यः, किं बहुनोक्तेन ? अदृष्टनिशाकरा चकोरी कियत्कालं नन्दति ? अथ विदितपुत्रीवृत्तान्तः पद्मपुरीशः सपरिवारस्तत्क्षणोत्पन्नरोमाञ्चराजिर्लब्धनिधिर्द्रमक इव हृष्टहृदयोऽजनि, कालात्ययमसहमानः सोऽपि निजाङ्गलग्नाभरणैर्मुकुटवर्जं तं दूतं सत्कृत्याभापुरीं जग्मिवान्. अथ विज्ञाततदागमनवार्तातिमुदितो वीरसेनो महीयसा महेन तं स्वागतीचक्रे, परस्परविहितदृढालिङ्गनौ तौ निःसीमप्रमोदरसमन्वभूताम्, ततो वीरसेनमुखाच्चन्द्रावतीवृत्तान्तं निशम्य पद्मशेखरः सकम्पं प्राह, आः ? दैवगतिर्विचित्रा, क्वेयं सुकुमाराङ्गी ? क्व च दुर्हृदयः स जटिलः ? क्व पुनः साहसशिरोमणेस्तत्रभवतस्तत्र प्रयाणम् ? इदं दुर्घटमपि दैवेन सुघटितं कृतं तन्महतां कृपैव.

उक्तञ्च—सन्तप्तायसि संस्थितस्य पयसो नामाऽपि न ज्ञायते, मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसम्पुटगतं तन्मौक्तिकं जायते, प्रायेणाधममध्यमोत्तमगतिः संवासतो जायते ॥ १ ॥

राजन्नीदृशं समाचरता त्वया मे किं नोपकृतम् ? इत्थं श्लाघमानो निजतनयामुत्सङ्गवर्त्तिनीं विधाय रोमाञ्चदन्तुरितगात्रो हृष्यमान्तं प्रमोदभरमुद्वमन्निव दन्तज्योत्स्नाभिर्धवलयन्दिग्देशान्विहिताञ्जलिर्नरेशः सविनयं तं जगाद, परत्राणगृहीतव्रत !

साहसैकशिरोमणे ! जन्मान्तरं लब्ध्वाऽपि तव प्रत्युपकर्त्तुमशक्तोस्मि, उदध्युदकमानं सिकतागणनाञ्च कोऽपि कश्चिद्विद्ध्यात्तथाऽपि निरवधींस्तव गुणान्विनिर्मातुं कः प्रभुः ! मतिमन् ? इमां कन्यां परिणीय मां कृतार्थय, पुरा नैमित्तिकवचनेन त्वमेवास्याः पतिर्मया निश्चितोऽसि, नरेन्द्र ! मदीयामिमामभ्यर्थनां परिहर्त्तुं नार्हसि, इत्थं तद्वचनं श्रुत्वा वीरसेनरसेशस्तुष्णीं तस्थौ, अप्रतिषिद्धमनुमतमिति विज्ञाय तेन गणकप्रवरान्समाहूय तूर्णं लग्नदिनं निर्धारयाञ्चक्रे, ततो निजं धन्यंमन्यः पद्मशेखरो निजविभवानुसारेण वीरसेनाय स्वसुतां चन्द्रावतीं प्रदाय विवाहमहोत्सवं निर्वर्त्तयामास. अनुरूपवरवधूयोगं मत्वा समस्ता शस्तभावा पौरजनता जज्ञे, योग्यं योगं निरीक्षमाणो धीमान् को न रज्यति !

यतः—विधिरचितमुदारं योग्ययोगं निरीक्ष्य, सकलकलितसारं सर्वदानन्ददक्षम् ।
अगणितगुणधारं धर्मकर्मैकलक्ष्यं, नयनविषयसारं को न रज्येत दक्षः ॥ १ ॥

किन्त्वेका वीरपत्नी वीरमती तत्सपत्नीभावभग्नभावाऽभाव्यत, स्नेहिसज्जनमानसमानसन्त्वदभ्रसुधासारेण क्षणतः क्षणप्रदं जज्ञे, प्रतिगृहाट्टं मङ्गलमालाः प्रावर्त्तन्त, अथैवं पञ्चधा विषयसुखमनुभवतो रथाङ्गनाम्नोरिव प्रतिपदं प्रवृद्धभावबन्धनयोश्चन्द्रावतीवीरसेनयोर्दिनान्यानन्दमयानि क्षणसमानि व्यतिचक्रमुः ।

इति श्रीचन्द्रराजचरित्रे प्रथमोल्लासे द्वितीयः सर्गः ॥ २ ॥

ततोऽसूयैकभाजनं वीरमती तयोस्तादृक्स्नेहग्रन्थिं विभाव्य विभावतो रोषारुणलोचनयुगला तदपकारपरायणा नितरां वासरान्निर्गमयामास. निर्मानमानसा चन्द्रावती तु तां सततं पूज्यबुद्ध्योपचरति, सदैव पर्याप्ततोपपोषा सा विशेषतो विषादापन्ना-

दावकिञ्चित्करौ मनुते.

उक्तञ्च—सदा तुष्टिजुषो जन्तो–र्यत्सुखं शान्तचेतसः। तत्कुतो निन्द्यभावानां, छिद्रान्वेषणकर्मणाम् ॥ १ ॥

अतिदक्षस्वभावा चन्द्रावती पतिशुश्रुषामेव प्रधानशीलानां प्रधानधर्मं मन्वाना प्रत्यहं निजभर्तारमुपाचरत्, मधुरस्वरेण प्रियतमगुणानुवादं प्रकुर्वन्ती सा वीरसेनमानसं भृशं निजानुरक्तं चक्रे. अथान्यदा तयोर्विलसतोश्चन्द्रावतीकुक्षिसरसि कश्चित्पुण्यवान् जीवो निशाकरस्वप्नसूचितो गर्भत्वेन समुत्पेदे, तदनु गर्भानुभावतः प्रादुर्भूताः सकला अपि दोहदाः कलावता राज्ञा क्षणेनाऽपूर्यन्त, सत्त्ववतां किमु दुर्घटम्?

तद्यथा—घटो जन्मस्थानं, मृगपरिजनो भूर्जवसनम्, वने वासः कन्दा–दिकमशनमेवंविधगुणः।
अगस्त्यः पाथोधिं, यदकृतकराम्भोजकुहरे, क्रियासिद्धिः सत्त्वे, भवति महतां नोपकरणे ॥ १ ॥
धनुः पौष्पं मौर्वी, मधुकरमयी चञ्चलदृशां, दृशां कोणो बाणः, सुहृदपि जडात्मा हिमकरः।
तथाप्येकोऽनङ्गः, सकलजगतीं व्याकुलयति, क्रियासिद्धिः सत्त्वे, भवति महतां नोपकरणे ॥ २ ॥

क्रमेण परिपूर्णेषु गर्भवासरेषु शुभग्रहनिरीक्षितोन्नते मुहूर्त्ते कल्याणिनी चन्द्रावती पुत्ररत्नं व्यजीजनत्। अथ शुद्धान्तचरीनिवेदितममृतसंमिताक्षरं सूनुजन्म समाकर्ण्यानन्दपूरितचेतोवृत्तिर्भूधवस्तस्यै किमप्यप्रदेयं नामन्यत, सर्वत्रानिवारिताः पुत्रवर्द्धापनिकाः श्रूयन्ते स्म, निभृतप्रमोदप्रमदाजनानां जेगीयमानानि विविधमङ्गलगीतानि जनमनांसि रञ्जयामासुः, मङ्गलतूर्याणि राजसद्मन्येव केवलं न व्यनदन्, परिहितपथ्यनेपथ्या वारविलासिन्यः प्रमोदनृत्यानि प्रकुर्वन्त्यो न व्यरमन्, वीरसेनः

सुतजन्महर्षितोऽर्थिजनानां दारिद्र्यं दलयामास, कारागृहसेविनो जनान्मोचयामास, पक्वान्नादिभोजनवसनाभरणप्रदानेन स्वजन-वर्गं यथोचितं सन्तोष्य द्वादशेऽह्नि वृद्धजनसङ्गतेन स्वप्नानुसारेण निशारत्नमिव निजान्वयं द्योतयिष्यतीत्यर्थविदा पित्रा चन्द्र इत्यन्वर्थनामा निजाङ्गजश्चक्रे, सच परितो विसारिणा निजतेजोनिकरेण सहस्ररश्मिरिव दिग्मण्डलमुद्योतयामास, सुरशाखीव गुणैः क्षपाकर इव कलाभिश्च प्रत्यहं स कुमारो ववृधे, पञ्चभिर्धात्रीभिः पाल्यमानो निजाङ्गुष्ठसञ्चारिपीयूषपानेन स वालः परमां तृप्तिं जगाम,—पुरैव विषादवासितचेता वीरमती विभक्तपतिसुखकामा भूयांसमवसादमुवाह, इदानीन्तु राज्यहरं पुत्ररत्नं निरीक्ष्य तन्मानसकुण्डे प्रावप्रधूमितः प्रकोपाग्निः प्रज्वलितोऽभूत्। विजितमारमूर्त्तिं कुमारं निरीक्षमाणस्य नरेशस्य हृदयकुहरे प्रमोदावकाशो न बभूव, पुत्रजन्मनैव तेन स्वजन्मसार्थक्यममानि। चन्द्रकुमारोऽनेकविधबालचेष्टनैः सवयोभिः साकं क्रीड-मानो निजपित्रोर्मानसं प्रीणयामास, मातापित्रोः सविशेषप्रयत्नेन निजकलाश्चन्द्र इव चन्द्रकुमारः शरीरावयवानपुपोष. रूपस-म्पत्त्या मन्मथदर्पं दूरीचकार, वाग्विलासेन सुरगुरुकीर्त्तिमनुससार, धैर्यगुणेन क्षीरनिधिमनुचक्रे, इतश्च चन्द्रावतीराज्ञी जिनधर्मेऽतीव दक्षाऽऽसीत्, तत्सङ्गतिरङ्गतो वीरसेनो दयामूलं जिनोपज्ञमहिंसाधर्मं प्रतिपेदे, तन्मानसं च क्रमेण सम्यक् जिनधर्म-वासितं जज्ञे, प्रत्यहं प्रकृष्टभावनाभावितमानसो मानवपतिर्विशेषतो मुनिजनशुश्रुषाप्रियोऽभवत्, अहो ? सत्सङ्गः किं न जनयति, ?

यतः—सत्सङ्गाज्जायते बुद्धि–र्निर्मलाऽधर्मसेविनाम्। तस्मात्सत्सङ्गतिः श्रेष्ठा, विधातव्या सुखार्थिभिः ॥ १ ॥

तथाच—सत्सङ्गाद्भवति हि साधुता खलानां, साधूनां न हि खलसङ्गमात्खलत्वम्।
आमोदं कुसुमभवं मृदेव धत्ते, मृद्गन्धं न हि कुसुमानि धारयन्ति ॥ २ ॥

अपि च—जाड्यं धियो हरति सिञ्चति वाचि सत्यं, मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं, सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ ३ ॥

यो हि सत्सङ्गरङ्गरञ्जितः कोशगतेलिका भ्रमरीत्वमिवार्हततत्त्वमवाप्तवान्, सर्वज्ञोदितधर्ममानससितच्छदेन तेन भूपतिना गगनाङ्गणचुम्बिभिर्निजयशोराशिभिर्हिमानीगौरैरप्रतिमैरपरिमितैर्जिनेन्द्रप्रासादैर्भूतलमभूष्यत. विशेषतश्च साधुसाध्वीनां परिचर्यया तस्य दिनानि ययुः ।

यतश्चोक्तम्—यस्य धर्मविहीनानि, दिनान्यायान्ति यान्ति च । स लोहकारभस्त्रेव, श्वसन्नपि न जीवति ॥ १ ॥

अथ चन्द्रकुमारोऽष्टहायनदेशीयोऽजनिष्ट, विद्याग्रहणयोग्यवयसं तं विज्ञाय विद्वज्जनधुर्यकलाचार्यसन्निधौ मुमोच, बुद्ध्या वाक्पतिसमानः स क्षयोपशमवशात्साक्षिमात्रगुरुः स्तोकेन समयेन निखिलकलापारदृश्वाऽजायत. ततस्तस्मिन्भूपतौ चरणसरोजनताया जनतायास्त्रातरि महीं शासति, कृतगलन्मकरन्दस्वादानां मधुपानां सन्तति प्रमोदयन्मधुः प्रादुरभूत् । अपहृतरमणीजना विरहिणो जनाः साश्रुभी रमणीयैर्लोचनैर्विकस्वरतरुराजिनवनवाङ्कुरलीनामलीनां संहतिमीक्षितुं न शेकुः, कुसुमचापजनके सूक्ष्मे चम्पकरेणौ निपतति विधुरमतिरध्वगोऽमरकामिनीमिव मनोरमगिरं निजवल्लभामस्मरत्, नागकेसरतरोः कलिकाऽलं कज्जलश्यामं मधुकरं बिभ्रती मनोऽभीष्टनाथवसतावप्राप्तानां वनितानां मन्मथव्यथामकरोत् । अविकसदम्बुरुहं धुनाना नानामधुरसमास्वादयन्ती षट्पदराजिः कामिनो मनोऽभिनद्. सहकारतरूणां मञ्जरीमत्ताः कोकिलाः कामिजनवल्लभां कामकलां शिक्षयन्त इव परितो निनेदुः । लोहितकुसुमौघनिचितपलाशपादपैर्मण्डिता मेदिनी सानुरागेव

विरहिणां तापप्रदायिनी जज्ञे । प्रियतमैः सह यो मानोऽभवत्तमाम्ररजसा मिश्रेण वायुनाऽसहमानः पुरन्ध्रिनिवहः कामबलेन प्रत्यबाध्यत, सुरभिकुसुमेषु वीक्षितेष्वनारततपोनियतीनामपि यतीनां मानसं तानि दिनानि प्राप्य प्रविकसदजायत. मन्दधूत-बकुलोपवनेन पवनेन स्पृश्यमानवपुषां सुभ्रुवामवधिनाविकलेन कलेन पञ्चमनादेन समभावि. विकसत्सुमनोराशयो वनराजयः स्फीतिमानमादधाना विरेजिरे, वसन्तनरेशं समागतं ज्ञात्वा मरुत्प्रयुक्ता वनलताः पुष्पफलोपहारैः संवर्द्धयामासुरिव, विहङ्गमगणाश्च मधुरवाग्विलासेन तुष्टुवुरिव, चम्पकानां सुमचयास्तदुद्योतकृते प्रकटितमङ्गलदीपा इव समन्ततो विरेजुः, इत्थं सर्वत्र मधुकरीमुखरीकृताशे मकरकेतुनिसर्गबन्धौ मधौ व्याजृम्भिते सहसा मुदितहृदयोदरो वीरसेनो निशान्तं प्रविश्याङ्कगतां देवीं विस्रब्धमित्यभिदधे. प्रिये ? पश्य, एष वसन्तः परभृतध्वनितच्छलेन प्रादुर्भूततिलकपत्रविचित्रशोभां पुरोपवनस्य सीमन्तिनीं लक्ष्मीमिव दर्शयितुं मामाह्वयतीव, तदहं मलयमारुतप्रनृत्तशाखोपवने गत्वा तमनङ्गबन्धुं संभावयामि, अवनताङ्गि ? त्वमपि तत्र गता तिरोहितानां वनदेवतानां नयनोत्सवं विधेहि. सुमुखि ? तत्र यदि मे लोचनहारि नृत्तं विहाय शिखण्डी त्रपयाऽन्यत्र गन्तुं व्यवस्येत्तदा त्वया कुसुमेषुनिवासनितम्बचुम्बीनिजकेशपाशश्चीनांशुकेन पिधातव्यः, अवनतगात्रि ? चूताङ्कुरजग्धिजात-कषायकण्ठः कोकिलनिवहोऽप्यतिशायिमाधुर्यजिघृक्षुर्मूकीभवँस्तव वाग्विलासं नूनमाकर्णयिष्यति. मृगाक्षि ? तत्र त्वदीयपादारविन्दताड्यमानौ द्वौ तुल्यामवस्थां गमिष्यतः, सद्यः कोरकजालं वहमानोऽशोकविटपी, रोमाञ्चकञ्चुकितदेहोऽहं च द्वितीयः । सुदति ? मन्ये निसर्गतो मन्थरया गत्या चङ्क्रमणं विदधतीं त्वां समवलोक्य वनवापिकासु निवसद्वरटाकुलं त्वच्छिक्ष्यत्वे स्पृहयालुर्भविष्यति, सुवदने ? करपल्लवेनासकृद्विनिवारितोऽपि नूतनविद्रुमप्रतिमे तवाधरबिम्बेऽशोकनवपल्लवशङ्कितचेता निपत-

न्द्विरेफोवनान्ते कस्याननं स्मेरं न करिष्यति ? वामाक्षि ? पर्यन्तजातभूरुहनिकरनिरुध्यमानोष्णरश्मिरश्मिष्वपि वनान्तवल्ली मण्डपेषु निष्कलंकत्वदाननचन्द्रदीधितिभिस्तमस्ततिर्नो न पराभविष्यति. हरिणाक्षि ? मत्तभ्रमद्भ्रमरालिषु लोचनस्य, लतासु शरीरयष्टे–र्विविधरम्भास्तंभेषूर्वो–र्बिम्बेऽधरदलस्य, मत्तेभकुम्भयोर्वक्षोजयो–रुरुणिमाशोकपल्लवेषु च पाणिपादतलस्य सादृश्य-मवेक्षमाणा त्वं निजपरिवारसंवाह्यमानचरणद्वन्द्वा यथाऽभिलाषं तत्र विहरस्व. क्षणमात्रमेवं धृतमाधुर्यधाराभिर्भारतीभिर्वद्धचेतसं वल्लभां रहसि नन्दयित्वा स्वनगरनिवेशे पौरानामोदयन्तीं वनविहरणयात्राघोषणामादिदेश. मृदङ्गप्रमुखातोद्यसम्भूतः प्रस्था-नशंसी ध्वनिरम्बरमभिव्याप, अथ सकलपरिजनपरिवारितः सान्तःपुरो नरेन्द्रो वसन्तविनिहितविभ्रमाऽभिरमणीयां मदकलपर-भृतनादिनीमबलामिवाऽनङ्गवर्द्धकोपवनश्रियं निरीक्षितुं प्रतस्थे, ततो ललितसान्द्रतमालालका मनोहारिद्विजराजिसुभगास्तिलका-ऽऽहितोरुशोभा विडम्बितवनराजिविभ्रमाः सुगृहीतनिजसन्ताना रमण्यस्तनजघनभरालसं प्रचेलुः। मन्दगमनेषु वामनयनानां नितम्बभारः कलाचार्यो जज्ञे, किन्तु सुललितगती राजहंसो मंथरप्रयाणकलभपतिश्च तद्विनेयभावं प्राप. मृगीदृशां पारिप्लवैः कटाक्षपातैः परितः प्रपूर्यमाणं नभोङ्गणं जवनविकम्पिताऽसितसरोजजातव्यतिकरजुषः सरोवरस्य श्रियं दध्रे. कमलानने ? व्रजन्त्यास्तव श्रमोदकबिन्दुविराजितवक्षोजान्तराले मुक्ताहारमादरेण बिभर्षि तमप्यहं भारायमाणमेव मन्ये. इत्थं विहितविविध-चेष्टाप्रकारा मन्मथाकुलमानसाः समामिनिका नागरिकाः पुरः प्रयातमहीपतिनिषेवितकृत्रिमशैलमनङ्गवर्द्धकमुपवनं प्रविशन्ति-स्म, तटवर्त्तिविटपिशाखाशिखाऽवसक्तकराश्चिरमनुपात्तनिमेषनयनयुगलाः फलपुष्पसम्पदं वीक्षमाणा हरिणदृशो वनदेव्य इव बभुः। अथवसन्तोत्सवोद्यतमतिर्नृपतिः प्रक्षिप्तघुसृणप्रमुखविविधरङ्गरञ्जिताम्बरो मध्यन्दिनमपि विभातदेशीयं विदधे,

निजजनकानुकारी चन्द्रकुमारोऽपि सवयोभिः समन्वितो माधवक्रीडां विनिर्मातुं प्रारेभे, सभार्यः क्षितिपतिर्निखिलं जनं स्वमपि वनविहृतिप्रसङ्गश्रान्तमवेत्य स्वच्छाम्बुनि सरसि सज्जीकृतवारिकेलिपरिच्छदप्रपञ्चोऽवातरत्, रोमाञ्चितदेहा रमण्यो नाभिदघ्नेऽपि वारिणि मन्दं मन्दं निहितचरणा भीरुस्वभावतया प्रियपाणिधृतशयाश्रिरेण विविशुः। घनकठिनोन्नतपयोधरपीडनैस्तन्निखिलमपि किलालं पुरस्तात्प्रक्षिपन्त्यः सरसिजाक्ष्यः प्रथुतरनिजकुम्भभिन्नतोया वनकरिणीरनुकुर्वन्तिस्म. निर्मलजलमन्तरा सरोजभ्रान्त्या युवतिमुखमुद्रामनुध्यायन्प्रमत्तमधुपो विफलंपरिश्रममवाप, मंदतरबुद्धिः खलु निजहितं कथमवैति ?। सरलनवमृणालनालबाहुश्चटुलशिलीमुखनयना तन्वङ्गी निजवपुर्लतामनुकुर्वन्ती पयोजिनी कयाचित् कृशाङ्ग्या सरभसं समालिलिङ्गे, कल्लोलमालापहृतांशुका काचित्कामिनी प्रथुनितम्बाभोगे निविष्टदृष्टिं प्रियपतिं निरीक्ष्य जातव्रीडा विलोडनक्रियाभिर्जलं कलुषीचकार, नाभिमात्रे वारिणि समवतीर्य विच्छिन्नकचकलापबन्धनायाः सरभसोत्कटं तरन्त्याः कस्याश्चित्तन्वङ्ग्याः कुचयुगलमेव तरण्डकं बभूव, निजप्रियतमे जनभयात्पलायितेऽपि युवतिघनोन्नतस्तनबिम्बमोहितोदकसंस्थितमुग्धकोकाङ्गना विरहवेदनां न विवेद, मृद्वङ्गि ! निसर्गहारिण्यसिन्सैकते चकिततया स्थिरतामलभमानाऽसौ राजहंसी तावकीनां गतिं शिक्षितुमिव गमनागमनानि वितनुते, कृशाङ्गि ! त्वन्नयनयुगापहृतविभ्रमासौ पाठीनप्रियाऽपीतः सलिलादनेकशो नभस्तलमुत्पतन्ती पूत्करोति विलोकय ! इदमिदमित्यशेषजलनिवासिमनोहरसत्त्ववृन्दं निर्दलयँस्तदंसविन्यस्तदक्षिणेतरभुजः कश्चिद्युवा चकोरलोचनां सरसि रमयति स्म. कठिनस्तनचूर्णितोऽपि कल्लोलचयो विलासवतीनां युवतीनां वक्षसि मुहुरपतत्, बुधजनोऽपि युवतिषु खलु विशेषमोहं व्रजति, तर्हि जलात्मकानां किमु वक्तव्यम्। वरतनु? त्वदीयकान्ति-

वारिण्येव मम जलकेलिः समाप्तिं व्रजति, विलोडितपयोभिः किमन्यदधिकमिति कश्चिद्युवा निजदयितां दृढमालिङ्गति स्म, एवं विविधजलकेलिचेष्टा यथाभिप्रेतं पौरजनाः प्रतेनुः, प्रकटितानङ्गविकृतिर्वीरसेननरेशो घुसृणागुरुमृगमदजलनिभृतशृङ्गया चन्द्रावत्या मालूरायमाणपयोधरयुगले प्रजहार, साऽपि द्विगुणितप्रमोदा तथैव कनकशृङ्गीभृतसुरभिवारिणा तं तथा छोटयामास, यथा तन्नयनयुगलं मुकुलितमभूत्. शारदेन्दुवदनाः कतमाः प्रमदास्तत्र कलरवेण विजितपरभृतवनितारवाः सरसं निबद्धताला मधुरगीतानि जगुः । मेखलाकिङ्किणीनादितकटीतटनिवेशितार्भकाः काश्चिद्युवतयः पृथुतरनितम्बबिम्बस्तनभारमुद्वोढुमपारयन्त्यश्चम्पकतरुच्छायासु निषेदुः । का अपि वध्व्यः सहकारशाखासु दोला विरचय्य निजमनोरथानिव शिशूनान्दोलयामासुः। कतिचिद्रमण्यो निजार्भकान्पयोधरपीडितवक्षस्थलेषु गाढमापीड्य कृतार्थत्वं मेनिरे. काश्चन वामाक्ष्यो गृहीताङ्गुलिपल्लवान्निजबालान् गतिशिक्षिका इव चारुचङ्क्रमणं शिक्षयामासुः । अपरा नितम्बिन्यः प्रतिकूलवर्त्तीन्यपत्यानि सप्रत्यभिज्ञानं विचित्रकौतुकजनकक्रीडनकप्रदानेन प्रीणयामासुः। अन्या रतिविलासभङ्गकारिणोऽश्रुधाराऽऽविललोचनानङ्गजान्मिष्टान्नेन रञ्जयामासुः । काश्चिन्मदिराक्ष्यः कल्पतरुकल्पान्निजतोकान्कम्पयन्त्यः पयोधरपयसा पुपुषुः, अनङ्गवशमतिः कश्चिद्विलासी शिथिलितत्रपोऽसनिक्षिप्तकरगृहीतकुचाग्रो द्विरदपतिरिव मन्थरेण क्रमन्यासेन जगाम. स्वल्पेऽपि वर्त्मनि मार्गसमुद्भवपरिश्रमापनोदमिषेण मन्दगतेर्वल्लभायाः प्रकटितमनोभववेगमूरुयुगलं मुहुः स्पृशन्कश्चिद्युवा व्रजति स्म. इत्थं विरचितक्रीडाप्रकारं पौरजनं सपरिजनं महीपतिञ्च निरीक्षमाणा ज्वलज्ज्वलनमानसा वीरमती निःश्वासततिं विस्तारयन्ती भृशमरतिस्थानं जज्ञे. विस्मृतोपवनविहारा, सारासारविमूढधीः सा भृशं व्याकुलीभूयेति व्यलपत्, अबलानां खल्वापत्काले विलपनमेव मुख्यं साधनम्,

तद्यथा—आपत्काले, भवति विबुधो नीतिमार्गानुसारी, तन्नाशायो-च्चरति विशदां धर्मसंस्थामखण्डम् ।
कार्याकार्योचितमतियुतो व्याप्तलोकप्रभावः, खिन्ना नारी, जनयति मुधा देवनं हीनबुद्धिः ॥ १ ॥

रे ? दुर्दैव ? हीनभाग्यां मां किं दुनोषि ? अस्मिन्भुवनेऽसुकृतभाजनमहमेव केवलं निर्घृणतया त्वया कथं सृष्टा ? यत्स्वप्नगतमपि सुतशर्म मया नानुभूतम्. अज्ञातपुत्रसुखवैभवाया वनिताया जनिर्विफलैव,

उक्तञ्च—उत्पतन्निपतन्रिङ्खन्, हसँल्लालावलीर्वमन् । कस्याश्चिदेव धन्यायाः, क्रोडमायाति नन्दनः ॥ १ ॥

पुनरपि विलपन्त्याह—स्नेहो निर्हृदयो विगन्धकुसुमं निर्दीपकं मन्दिरं, निर्जीवोऽपघनो यथा चितिकलाहीना दया निष्फला ।
गीतं कण्ठविहीनमब्द उदकं दानञ्च मानं विना, भोज्यं निर्लवणञ्च सूनुरहितं तद्वद्युवत्या जनुः ॥१॥

सुतस्पर्शरसज्ञताऽनभिज्ञाया यस्या अङ्कतल्पे न विलुठन्ति वालाः सा विधिना वृथैव विनिर्मिता, दुरन्तदुःखैकभाजनं तदवतारं धिगस्तु, किं बहुना तथाविधानां मन्दतमभागधेयानामजनिरेव श्रेयसी. किञ्च पुत्रमृते देशद्रङ्गग्रामनगरनिधिप्रमुख-समृद्धयः क्वोपयुज्यन्ते ? संयम्यातिथि पतत्रिप्रभृतयः केऽपि निरीक्षणमात्रतोऽप्यनपत्यनिकेतनं न पावयन्ति, तन्मुखमपि विभातेऽद्रष्टव्यमिति जना जानन्ति, अहो ! प्राक्तनजन्मनि मया तादृशं किं कर्म समाचीर्णं ? यस्मादेकोऽपि मे मनोज्ञस्तनयो दैवेन न वितीर्णः। मुहुरेवं विलपन्ती सङ्कुचितक्रमाङ्गुलिभिरधोगतिद्वारमुद्घाटयन्तीव भूपीठं विलिखन्ती सा नयनयोः श्रावण-नभस्यौ वहमाना नानातर्कपरायणाऽजनि । तादृगवस्थामनुभवन्तीं निजस्वामिनीं दृष्ट्वा तत्सखीजनो विस्मितः प्रोवाच, पूज्यपादे ? भगवति ? प्रवर्त्तमानेऽस्मिन्महोत्सवेऽकाण्डे कुतस्ते कश्मलं समुत्पन्नम् ? दलितरिपुदले सज्जकोदण्डदण्डे वीरसेन-

धराधीशे मेदिनीं शासति मनसाऽपि तव व्यलिकं विचिन्तयितुं कः प्रभुः ? तस्मात्प्रसादं विधाय निजपरितापहेतुं निवेद्यास्मत्परितप्तिं निवर्त्तयस्व. देवि ! इतो दृष्टिः प्रसार्यताम्, चन्द्रकुमारसमेतः सप्रियः क्षितिप्रियः सविलासं क्रीडते. पौरजना अपि प्रमादोज्झितचेतोभिर्निजमानिनीभिः सह क्रीडारसं स्वादयन्तो न विरमन्ति. स्वामिनि ! त्वन्मानसं सचिन्तं कथं जातम् ? एवमनेकधा ताभिरभ्यर्थ्यमानाऽपि सा निजचिन्तितं कृपणधनमिव न प्रकाशयामास, प्रत्युत तद्वचनानि तच्छ्रोत्रपुटयोस्तप्तत्रपुसमानि जातानि. ततोऽतिदक्षलक्ष्योऽपि तत्परिजनोऽसादविषादार्णवनिमग्नस्तदन्तिके स्थितः, स्वयमप्यापत्पयोधिमग्ना, निर्व्यापारा, करतलनिहितवामेतरकपोला शून्यं ध्यायति, तावत्तत्प्रबलकर्मप्रभावाकृष्ट इव भव्याकृतिधारी चारुचञ्चुपुटेन नवपल्लवरुचिं वर्द्धयन्ननवममानववाक्चञ्चुः कश्चिच्छुकराजस्तदधिष्ठितसहकारतरुशाखां कुतोऽप्यागत्याधितष्ठौ.

॥ इतिश्री चन्द्रराजचरित्रे प्रथमोल्लासे तृतीयः सर्गः ॥ ३ ॥

क्षणमेकमध्वश्रमं विनीय परितोऽवलोकमानः स शुकराजोऽधोदृष्टिं निक्षिपन्विच्छायवदनां नृपमहिषीं विलोक्य परोपकृतिरसिको मनुष्यभाषया तामभाषत, सुदति ! कोऽयं रोदनावसरः ! मधूत्सवपराङ्मुखीभूय कथं खिद्यसे ? रङ्गभङ्गं मा विदध्याः। निजनिर्वेदकारणं तूर्णं स्वमुखेन निवेदय, येन निर्मिततत्प्रतिक्रियस्त्वां निश्चिन्तीकृत्य कृतकृत्यो भवामि, अथैवं शुकेरितरतिकरवचनानि समाकर्ण्य सा यावदूर्द्ध्वं विलोकयति तावदाम्रविटपस्थितं हरितपक्षं निरैक्षिष्ट, मानववाग्वादिनं तं विदित्वा जातकौतुका सा मौनमुद्रां मुमोच, रे विहग ! मदीयं मनोवृत्तं ज्ञात्वा निरुपायो भवान् किं विधास्यति ?

यतः—फलभक्षी लघुःपक्षी, सदाम्बरतले भ्रमन् । वनवासरतस्तिर्यग्, विवेकविकलो भवान् ॥ १ ॥

हे शुक ! यदि भवादृशा दुःखेन्धने दावानला भवेयुस्तदाऽन्येषां का कथा ? यो हि मूढमतिरनधिकारिणे परस्मै गोप्यमपि निजवृत्तान्तं निवेदयति स केवलं पराभवपदं व्रजति.

उक्तञ्च—रहस्यं ख्यापयन्नज्ञो, यादृशे तादृशे जने। कार्यहानिं विपत्तिञ्च, लभते हि पदे पदे ॥ १ ॥

अतो गुप्तवृत्तान्तमनुद्घाटितमेव वरं मुधा प्रकाशनेन किं फलम् ? ततो मधुरगीः शुकोऽब्रवीत्, नृपवल्लभे ? मैवमखर्वगर्वं निर्वह, यद्यत्कार्यं विहगाः साधयन्ति तद्विधातुं नरा अप्यप्रभवाः, तन्निशम्य कौतुकितमानसा सा प्रोवाच, रे शुक ? वितथवचनं वदन्किं न जिह्रेषि ? सुलभसकलसाधनसम्पत्तेर्हेयोपादेयाहार्यबुद्धेः पटुतरकरणग्रामान्मानवाज्ज्ञानविकला पक्षिजातिः कथं दक्षा ? शुकोऽकथयत्, देवि ? अस्मिन्भुवनकोशे पक्षितुलां वोढुं कः क्षमः ? हृषीकेशवाहनं प्रौढप्रभावः पक्षिराजो वैनतेयस्त्वया किं न श्रुतः ? यमधिरुह्य विजितभुवनत्रयो विष्णुर्विष्टपत्रयाधिपतिरितिभण्यते. कविजनमुखमण्डनं भगवती सरस्वती देवी हंसवाहनराजिता जगत्ख्यातकीर्त्तिर्लोकत्रयजाड्यहारिणी जाता तद्धेतुर्विहग एव, तथैव कस्यचित् टिट्टिभस्याण्डानि रत्नाकरो स्ववेलाजलेन जहार, तत्तस्य धार्ष्ट्यं विज्ञाय परिभूतेन तेन सकलपक्षिगणं मेलयित्वा निवेदितम्, अनेनाविनीतेन जलधिना मे संसारसर्वस्वमपहृतम्। तदयं निजाविनयफलं लभताम्। गरुडादिपक्षिगणैर्हेलया तमब्धिं विजित्य तदण्डानि समानाय्य तस्मै वितीर्य स निश्चिन्तीचक्रे, कस्यचिच्छ्रेष्ठिनो वियोगेन मनोभवभवार्त्तिमसहमानां तद्वल्लभां च प्रत्यहंद्वासप्तति-नूतनवार्त्ताभिः शुकराजोऽखण्डशीलां ररक्षेतिसुप्रसिद्धमाख्यानं किं त्वया नाश्रावि ? नैषधिदवदन्तीसम्बन्धघटकोऽपि मरालो बभूवेत्यनल्पानुपकारान्विहङ्गमा निर्निर्ममुः। विज्ञाताक्षरमात्रा अपि पतत्रिणो जीवदयोपकारं न विस्मरन्ति, भूरिशास्त्रवेदिनोऽ-

पि मानवा विषमां शेमुषीं न मुञ्चन्तीत्यसंशयम् । आगमे चैतत्प्रसिद्धम्, मनुजवत्तिर्यञ्चोऽपि पञ्चमगुणस्थानाधिकारिणो जायन्ते, वयं यद्यप्यम्बरचारिणस्तथापि निखिलशास्त्रसारवेदिनो भवामः । इयं स्वजातिप्रशस्तिर्न्याय्या न त्वपरलघुताद्योतनाय विहिता, इत्थं शुकवचनामृतं श्रोत्रपुटेन निपीय प्रमुदितचेता वीरमती जगाद, शुकराज ! भवान् सत्यसन्धानां धौरेयो विभाति, बुद्ध्या-सुरगुरुसमानो विभाव्यसे, अनेन तवागमिकवाग्विलासेन पुलकितगात्री निजजीवितादपि भवन्तं वल्लभं मन्ये. इदानीं विषम-व्यसनार्णवनिमग्नां मामुद्धर्तुमिवास्मिन्नुपवनेऽन्यप्रेरणया वा स्वेच्छया समागतोऽसि ? शुकोऽवदत्, केनचिद्विद्याधरेन्द्रेण पालितोऽहं विविधफलालीलालितोऽहं वाग्विलासेन तन्मनोऽरञ्जयम्, सोऽपि मां निजजीवितादधिकममन्यत, सुवर्णपञ्जरेनि वसन्नहं तदुपदिष्टं सर्वं कार्यमकार्षम् । अथान्यदा गृहीतपञ्जरः स विद्याधरेन्द्रो मुनीन्द्रं वन्दितुं गतः, कृतवन्दनक्रियो निबद्धा-ञ्जलिः स मुनेरन्तिके भूमावुपाविशत्, मुनिदर्शनेन निष्ठितपापोऽहमपि तमेव ध्यायन्नेकाग्रधिया तस्थिवान् । समयविन्मुनिना वितीर्णधर्मलाभाशिषा धर्मदेशना प्रारब्धा—

जिनेन्द्रपूजा गुरुपर्युपास्तिः, सत्त्वानुकम्पा शुभपात्रदानम् । गुणानुरागः श्रुतिरागमस्य, नृजन्मवृक्षस्य फलान्यमूनि ॥१॥

जैनो धर्मो यदि न रुचितः पापपङ्का-त्याज्या हिंसा नरकपदवी नानृतं भाषणीयं, स्तेयं हेयं सुरतविरतिः सर्वसङ्गान्निवृत्तिः । ... वृतेस्यः, सर्पिर्दुष्टं किमिदमियता यत्प्रमेही न भुङ्क्ते ॥ २ ॥ करे श्लाघ्यस्त्यागः, शिरसि गुरुपादप्रणमनम्, मुखे सत्या वाणी, श्रुतमवितथं च श्रवणयोः । हृदि स्वच्छा वृत्ति-र्विजयिभुजयोः पौरुषमहो, विनाऽप्यैश्वर्येण, प्रकृतिमहतां मण्डनमिदम् ॥ ३ ॥ प्रिया क्षान्तिः पुत्रो-विनय पिता योगाभ्यासो-विषयविरतिः सा च जननी, विवेकः सौन्दर्यं, प्रतिदिनमनीहा च भगिनी ।

उपकारः प्रियसुहृत्, सहायो वैराग्यं, गृहमुपशमो यस्य स सुखी ॥ ४ ॥ यत्सन्तोषसुखं यदिन्द्रियदमो यच्चेतसः शान्तता, यद्दीनेषु दयालुता यदपि गीः सत्यामृतस्यन्दिनी । शौर्यं धैर्यमनार्यसङ्गविरतिर्या सङ्गतिः सज्जने, एते ते परिणामसुन्दरतराः सर्वे विवेकाङ्कुराः ॥५॥ दिने दिने मञ्जुलमङ्गलाली, सुसम्पदः सौख्यपरम्परा च । इष्टार्थसिद्धिर्बहुला च बुद्धिः, सर्वत्र सिद्धिः सृजतां सुधर्मम् ॥ ६ ॥

देशनान्ते पञ्जरस्थितं मां निरीक्ष्य तेन मुनिना पुनः स जगदे भो भद्र ! तिर्यग्बन्धनं महतेऽनर्थाय जायते—तद्यथा—यो वै तिरश्चां वधबन्धमाचरेत्, स कामकामी लभतेऽपवादम्। परत्र घोरां निरयादियातना,-मनन्तकालं सहते हताशः ॥१॥ यः प्राणिनं बन्धगतं विधत्ते, परोपहासं च तनोति केल्या । परोपतापप्रदमुग्रवाक्यं मृत्योरपि त्रौति स मृत्युराद्यः ॥ २ ॥

बन्धनास्थिताः प्राणिनः परमं दुःखं वेदयन्ति, ततो धर्मार्थिना कोऽपि जीवो बन्धनगतो न विधेयः सर्वेषां सुखमेवेप्सितम्. सर्वाणि भूतानि सुखे रतानि, सर्वाणि दुःखस्य समुद्विजन्ति । तस्मात्सुखार्थी सुखमेव दत्ते, सुखप्रदाता लभते सुखानि ॥१॥

तिरश्चां बन्धने यो रक्तो भवति स दयां निहन्ति, दयामन्तरा कथं धर्मसिद्धिः,

उक्तञ्च—कृपानदीमहातीरे, सर्वधर्मास्तृणाङ्कुराः । तस्यां शोषमुपेतायां, कियन्नन्दन्ति ते पुनः ॥ १ ॥
न सा दीक्षा न सा भिक्षा, न तद्दानं न तत्तपः । न तद्ध्यानं न तन्मौनं, दया यत्र न विद्यते ॥ २ ॥
दयादयितया शून्ये, मनोवासगृहे नृणाम् । दानादिदूताहूतोऽपि, धर्मोऽयं नावतिष्ठते ॥ ३ ॥
यस्य चित्तं द्रवीभूतं, कृपया सर्वजन्तुषु । तस्य ज्ञानञ्च मोक्षश्च, न जटाभस्मचीवरैः ॥ ४ ॥

तथाच—पठितं श्रुतञ्च शास्त्रं, गुरुपरिचरणं महत्तपश्चरणम् । घनगर्जितमिव विपुलं, विफलं सर्वं दयाविकलम् ॥५॥

अपि च—क्रीडाभूः सुकृतस्य दुष्कृतरजः संहारवात्या भवो–दन्वन्नौर्व्यसनाग्निमेघपटली सङ्केतदूती श्रियाम् ।
निःश्रेणिस्त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला, सत्त्वेषु क्रियतां कृपैव भवतु क्लेशैरशेषैः परैः ॥ ६ ॥
आयुर्दीर्घतरं वपुर्वरतरं गोत्रं गरीयस्तरं, वित्तं भूरितरं वलं वहुतरं स्वामित्वमुच्चैस्तरम् ।
आरोग्यं विगतान्तरं त्रिजगतः श्लाघ्यत्वमल्पेतरं, संसाराम्बुनिधिं करोति सुतरं चेतः कृपासङ्कुलम् ॥ ७ ॥

तस्माद्यावता भाव्यं तिर्यग्बन्धनं महापापमूलमिति मुनिवचनेन प्रतिबुद्धः स विद्याधरेन्द्रो गृहीतनियमो मां बन्धनाद् भवचारकादिव व्यमुचत् । मुनीन्द्रं नत्वा ततोऽहं तदुपकारं विचिन्तयन्वनान्तरमतिक्रामन्नत्र समागत्य रसालशाखायामुपविष्टस्तावत्त्वां व्यलोकयम् । देवि ? त्वत्तो मे किञ्चिदपि गोपनीयं न विद्यते, मामवितथवादिनमेव जानीहि, मयि दृष्टे तव चिन्ता न स्थास्यति, वीरमती दध्यौ, विदितश्रुततत्त्वोऽयं शुको मे पुत्रचिन्तामपनेष्यति, यतोऽयं विद्याधरेण सकलशास्त्ररहस्यमध्यापितो विद्यते । इति विचिन्त्य सा तं प्रत्यवदत् शुकराज ? समग्रसम्पद्भाजनस्य मे मानसं पुत्रचिन्ता भृशं दुनोति.

यतः—अपुत्रस्य सुखं नास्ति, नैव निद्रा न शान्तता । सत्कृत्यन्तु कुतस्तस्य, चिन्ताग्रस्तस्य सर्वदा ॥ १ ॥

अधुना सत्यभ्रातरं त्वामवैमि, ततो मन्त्रतन्त्रादिप्रयोगेण यदि मां निश्चिन्तां करोषि तदा तव विज्ञानशक्तिं सत्यां वेद्मि, अन्यथा तव सामर्थ्यं कथं जानीयाम् ? बन्धो ? यद्यस्मिन्समये मां नोपकरिष्यसि चेत्तवसङ्गतिर्निष्फलतामेष्यति, विजयादशम्यां यद्यश्वो न धावति तर्हि तद्रक्षणं श्रमजनकमेव, प्रियबन्धो ? त्वन्तु पण्डितोऽसि, अतस्त्वां मत्प्राणतोऽप्यधिकं

मन्ये, साहसशिरोरत्न ! त्वद्दर्शनेन लब्धस्वास्थ्याऽधुना निर्वृत्ताऽस्मि, मत्कार्यनिष्पत्तौ भवते नवलक्षहारं वितरिष्यामि, सुरभिभोजनसुस्वादुफलालीढौकनेन त्वामहर्निशमुपचरिष्यामि, त्वदुपकृतिं न विस्मरिष्यामि, किं बहुजल्पितेन ! त्वन्तु विज्ञोऽसि, मूर्खजनसन्निधौ विशेषतो विविच्यते, पण्डितास्तु स्तोकमात्रप्रकाशनेन निखिलभावं विदन्ति.

यतः—बहुधा बोधनेनाऽपि, न जानाति विमूढधीः । तत्त्वातत्त्वार्थविद्विज्ञो–नोपदेशमपेक्षते ॥ १ ॥

गोगर्दभा दण्डहताः प्रयान्ति, हयाश्च नागाश्च वहन्ति नोदिताः । अनुक्तमप्यूहति पण्डितो जनः, परेङ्गितज्ञानफला हि बुद्धयः ॥१॥

भ्रातः ! अधुना मे मानवयोग्यतां प्रदेहि, ऋजुभावेन मया मन्मनोभावनाऽऽविष्कृता, बुद्धिमन्नऽत्रापन्महोदधौ निमग्नां मां निस्तारयितुं त्वदन्यं न विलोकयामि. शुकोऽवादीत् भगवति ! धैर्यं धेहि, विषादं परिहर, त्रिलोकीपतिस्तव मनोरथतरुं सफलयिष्यति, अतःप्रभृति त्वत्कार्यचिन्ताविधायकोऽहमस्मि. त्वां धर्ममातरं जानामि, अतोऽन्यचिन्तां परिहृत्य विशेषतो धर्मोद्यता भव, परदुःखप्रहाणे मानवधर्मे ये बद्धपरिकराः सर्वत्र लब्धविजयास्ते पुण्याङ्कुरान्प्रकटयन्ति. यतः—

धर्मप्रभावेण समस्तसिद्धयो, लुठन्ति हस्ते स्वयमेव देहिनाम् । न तत्समः कश्चिदपि प्रयोगो–विभाव्यते लोकहितङ्करोऽन्यः ॥१॥

तथाच—धर्मोयं धनवल्लभेषु धनदः कामार्थिनां कामदः, सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः ।
राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां, तत्किं ? यन्नकरोति किं च कुरुते स्वर्गापवर्गावपि ॥ २॥

पत्नी प्रेमवती सुतः सविनयो भ्राता गुणाऽलङ्कृतः, स्निग्धो वन्धुजनः सखाऽतिचतुरो नित्यं प्रसन्नप्रभुः ।
निर्लोभोऽनुचरः स्वबन्धुसुमुनि- प्रायोपयोग्यं धनं, पुण्यानामुदयेन सन्ततमिदं कस्याऽपि संपद्यते ॥ ३ ॥

न देवतीर्थैर्न पराक्रमेण, न मन्त्रतन्त्रैर्न सुवर्णदानैः । न धेनुचिन्तामणिकल्पवृक्षै-र्विना स्वपुण्यैरिह वाञ्छितार्थाः ॥ ४ ॥

मातः ? अस्मिन्विषये यथामति यतिष्ये, फलसिद्धिस्तु दैवायत्तैव किन्तु त्वया स्थिरचेतसा धर्मोद्यतया भाव्यम्, जननि ! निजवाञ्छितप्रदमेकं मदुक्तं वचनं सम्यगवधारय, येन तव मनश्चिन्ता विनंक्ष्यति, अस्मिन्नेव वने कौबेर्यां दिशि त्रिभुवन-तिलकायमानोऽच्छस्फटिकमणिनिकरकरैः सहस्रकरं निस्तेजसं कुर्वन् प्रथमतीर्थकरप्रासादो विद्यते. यत्र चैत्रपवित्रपूर्णिमायां निशीथिन्यां स्फारदीव्यालङ्कारभासुरोप्सरोगणो गृहीतनाट्योपकरणो महोत्सवं विनिर्मातुं समेष्यति । तास्वेका नीलाम्बर-धारिणी मुख्या देवी विद्यते, तद्वस्त्रं यदि तव हस्तगतं भवेत्तदाऽचिरेण त्वत्कार्यसिद्धिरित्यसंशयं विद्धि। वीरमती जगौ, भवता कथमिदं विज्ञातम् ? शुकोऽवादीत्, पुराऽहं चैत्रपूर्णिमायां तेन विद्याधरेण साकं तस्मिञ्जिनालये यात्रायै जग्मिवान्, तेनेदमवे-दिषम् । तत्र त्वयैकाकिन्यैव सप्रमोदं गन्तव्यम्, मदुक्तसङ्केतो न विस्मरणीयः । एवं तां विज्ञाप्य सद्गुणैकमन्दिरं कीरः सहसोड्डीय गगनमार्गमगमत् । तद्वियोगव्यथिता वीरमती नेत्रयोरश्रुधारां धारयन्ती स्नेहाङ्कुरं द्योतयामास. इतः पार्थिवादि-पौरजनाः क्रीडाभिः श्रान्ता इव मधुमहोत्सवं समाप्य पुरप्रवेशं चक्रुः । सूर्योऽपि तद्विश्रान्तिदित्सुरिवास्ताचलमगमत्. अथ सखीजनपरिवारिता वीरमती शुकवचनं स्मरन्ती दिनानि व्यतिचक्राम, क्रमेण कीरभाषिता सैव चैत्रपूर्णिमा समागता, वीरमती तदेव शुकवचनमस्मार्षीत्, यतोऽस्मिञ्जगति निखिलदेहिनः स्वार्थैकदृक्षा भवन्ति, स्वार्थमूलैव भुवनरचनेयं विज्ञायते, स्वार्थप्रियाः सर्वेऽपि जन्तव उद्यमपरा जायन्ते तथाऽपि फलसिद्धिस्तु कर्मानुसारतो लभ्यते.

उक्तञ्च—भग्नाशस्य करण्डपिण्डिततनोर्ग्लानेन्द्रियस्य क्षुधा, कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा, स्वस्थास्तिष्ठत दैवमेव हि नृणां दुःखे सुखे कारणम् ॥ १ ॥

अथांऽशुमाली दिगन्तरप्रयाणं कृत्वा लब्धश्रम इव स्नातुमुदधौ निममज्ज, विविधविहगगणा विमुक्तमुखमुद्रा गगनाङ्गणं घोषयन्तः स्वस्वनीडानाश्रित्य निजापत्यानि संभावयामासुः। सन्ध्यासमयवेदिनो निजकर्त्तव्यपरायणा बभूवुः। षोडशकला-कलितो ललितो नभोभवनं भासयन् शीतभानुर्गगनाङ्गणे प्रादुर्भूतो मनोभूभूपतेरप्रतिहतचक्रमिव विरहिजनमानसानि खण्डयामास, तस्मिन्समये निजाङ्गरक्षिकां विश्वासनिकेतनं चेटीं गृहरक्षायां नियुज्य वेषं परावर्त्त्य वीरमती स्वार्थग्रथिलैका-किनी नगराद्बहिर्निरीयाय, अहो ! अलौकिकमिदं स्त्रीचरित्रम् ! यतश्चोक्तम्—

स्त्रीणां चरित्राणि हि लक्षमेक-मुपस्थिता लक्षयुगं तनोति। रज्जुप्रसङ्गेन दिवा बिभेति, विमोटयेन्नागफणां निशायाम् ॥१॥
विलोक्य रामाऽऽखुमहो विकम्पते, पञ्चाननं दारयति क्षणेन। शय्यां समारोढुमशक्तभावा, धराधरेन्द्रं सहसा विलङ्घते ॥ २॥
निमज्जति क्षीणजलापगायां, तरत्यहो! वारिधिमात्मसिद्धये। अनेकधा चित्रकरं रमाणां, विजानतां सुज्ञनराश्चरित्रम् ॥३॥

दिग्मण्डलं द्योतयन्ती सर्वतः शशाङ्कज्योत्स्ना प्रास्फुरत्। विशेषतो निशाचारिदुराचारिणां संचारैर्घोरतरा रजन्यभवत्, तद्यथा—पुरः पुरो वनं वनं वने वने महागिरि-र्महागिरौ महागिरौ विराजते गुहागृहम्।
गुहागृहे गुहागृहे विहारतत्परो हरि-र्हरौ हरौ निरङ्कुशः कृतेभसाध्वसो ध्वनिः ॥ १ ॥

किमहो ! अचक्षुष्याणि मनुजाङ्गग्रसनचपलचण्डपुण्डरीकाननानि काननानि भयप्रदानि जातानि.

यथा च—इतस्तावद्द्राव-व्यतिकर इतः सन्त्यजगरा-इतो लुण्टाकानां, समुदय इतः कण्टकचयः ।
इतो व्याघ्रा उग्रा-ज्वलनजनका वेणव इतो-वनं संलक्ष्यैत-न्मन इदमहो मोहमयते ॥ १ ॥

तथैव मनोहारित्वमपि नैसर्गिकं राजते तस्य वनस्य न तु केवलं दोषग्रस्तं तत्,

तद्यथा—अनायासग्राह्या-ण्यवनिपतिभोग्यान्यपिफला-न्ययत्नेन प्राप्या-नृपसुदृगपेक्ष्याः सुमनसः ।
असूर्यम्पश्यान्य-प्यहह ! सुलभान्यश्मभवना-न्यरण्यानीभाजा-मतिपतति भाग्यं किल गिरः ॥ १ ॥

अपि च—गहनगुहाविहारिहरिपाणिरुहाभिहत-द्विरदशिरस्तटोद्गलितमौक्तिकसंहतिभिः ।
अहह विभूषितैरिव चिरं विहरन्ति सुखं, सममबलाजनै रतिविलासपराः शबराः ॥ २ ॥

ततो दक्षप्रकृतिस्त्वरितगुप्तगतिर्निर्भीकमानसा सानरनाथपत्नी तद्वनं प्राविशत्, तत्रोत्तरदिग्विभागेऽनवरतचङ्क्रमण-परिश्रान्तस्थगितमाध्याह्निकदिवाकरमण्डलमिव तप्ततपनीयकलशं बिभ्रतं भव्यजनसुकृतसारैः समूहीभूतं यशोराशिमिवासंस्तुतानामपि चेतःसु बलाद्भव्यभावं समुद्भावयन्तमादिमतीर्थकरप्रासादं दूरतो विलोकमाना सा स्वकार्यसिद्धिं निश्चिकाय, प्रजविना वनजपवनेन दोधूयमानध्वजपताकाभिरागन्तुकजनान्निमन्त्रयन्तमिव तमादीश्वरप्रासादं समीपगा निरीक्ष्य भृशं मोदमाना वीरमती सोपानश्रेणिमध्यारोहत्, श्रीमदादिनाथं बद्धाञ्जलिः सा सविनयं प्रणम्य निजापराधं क्षमयित्वा गुप्ताकारतया भगवतः पृष्ठप्रदेशेऽप्सरसामागमनकालं प्रतीक्षमाणा तस्थौ. ततो निजसङ्केतितसमये समयवेदी दिव्याङ्गनागणोऽपि तत्र समायातः, प्रथमतस्तावत्प्रथमं स जिनबिम्बंप्रदक्षिणापूर्वकमभिवन्द्यसारद्रव्यैर्द्रव्यपूजां विनिर्ममे. ततोभवदावानलमेघघटां

भावपूजां विधाय सङ्गीतरसलुब्धास्ताः सज्जीकृतवाद्या विविधनाट्यकलाभिर्मिथोमिलितभावाः प्रभोरग्रे नृत्यं प्रारेभिरे, सारीगम-प्रमुखस्वरभेदोद्भूतोऽनेकविधगीतध्वनिस्तत्र समुच्छलितः, काऽपि देवासुरमथ्यमानक्षीरोदधिधीरनादिमृदङ्गं काऽपि मधुररस-दायिनीं वीणां वादयति, काऽपि ढक्कामपराः काहलादिवाद्यानि वादयन्ति, एकद्वित्रिचतुस्तालब्रह्मतालादिसप्रभेदं नाट्यं विधाय जातश्रमोऽप्सरोगणो व्यरमत्.

इति श्रीचन्द्रराजचरित्रे प्रथमोल्लासे चतुर्थः सर्गः ॥४॥

अथ जिनमन्दिरान्तिके तत्र विमलजलसंभृता पुष्करिण्येका समस्ति, तदुपकण्ठभाजस्तास्तत्र स्वस्ववसनानि विमुच्य निजश्रममपहर्त्तुकामा स्तस्यां पुस्करिण्यामवातरन् । परस्परमुपहसन्त्यःक्रीडारसमनुभवन्त्यो वीतभयास्ता रेमिरे, इतो वीरमती निजावसरमासाद्य सद्योऽविदितसञ्चारा वस्त्राणि निकषा गत्वा निजाभीष्टकरं कीरकथितमेव नीलवस्त्रमपहृत्य प्रभुमन्दिरान्तः प्रविश्य तद्द्वारं पिधाय जिनेन्द्रचरणौ शरणीचकार, ततो दृढचित्ता सा निजमनोरथं निष्पन्नं मन्वानाऽतिष्ठत् , अथ निर्वृत्तसलिल-क्रीडाः सकला देव्यः समासादितवापीतटाः स्वस्ववसनानि परिहितुं लग्नाः । मुख्यात्वलक्षितानिजासिताच्छवसना यूथभ्रष्टा हरिणीव विलक्षीभूता देवीवृन्दमपृच्छत् , सख्यः ! नायं हास्यावसरः, कयाऽपि मदीयमंशुकं गृहीतञ्चेत्सत्वरं प्रदीयताम्, अखिला अपि तद्वचनश्रवणचकिता निबद्धाञ्जलयस्ताः सविनयं विज्ञापयामासुः, ज्येष्ठभगिनि? सततसेवनीयां त्वामुपहसितुं वयं किमुचिताः ! इतिकृतशपथास्ताः पुनरवोचन्, स्वामिनि ! यत्सहायेन वयं जीवामस्तस्या अविनयं मनसाऽपि चिन्तितुमसा-म्प्रतमस्माकम् । यमाश्रित्य यो जनः प्रमोदते स तद्विघाताय कथं प्रवर्त्तते ?

यतः—द्वौ पुरुषौ धरति धरा—ऽथवा द्वाभ्यामपि धारिता धरणी। उपकारे यस्य मति—रुपकृतं यो न विस्मरति ॥ १ ॥

तदस्मभ्यं मुधापवादं मा देहि, तदपहर्त्ता कुत्राऽपि निलीनो भविष्यति, तन्निरीक्षणन्त्ववश्यमेव विधेयम्. काचिजगौ प्रागिदं जिनालयद्वारमुद्घाटितमासीदिदानीं तदावृतं विद्यतेऽतो द्वारं पिधाय वस्त्रापहारकस्तत्रैवान्तः स्थितः संभाव्यते, इति तदुक्तिं सत्यां मन्यमानाः समस्तदेव्यो द्वारप्रदेशमासाद्य प्रोचुः, वस्त्रहारिन्! अस्मत्स्वामिनीवसनं सत्वरं समर्पय, तमास्विनी व्यतीतप्राया, साम्प्रतमेव विभातसमयो भविष्यति, दूरतरमस्माभिर्गन्तव्यमस्ति, देवदूष्यं परिधातुं मानवा अयोग्या इत्यवितथमवेहि, अस्मदीयमम्बरं वितरिष्यसि चेन्नृत्यनिरीक्षणमुदितमनसा त्वया पारितोषिकं प्रदत्तमिति मन्स्यामहे, केनचित्कार्येण वाऽपहृतं तदपि तत्प्रत्यर्प्यताम्। यत्किमपि तव कार्यं साधयिष्यामः, नरो वा नारी वा सद्यो द्वारमुद्घाटयतु, विलम्बं न सहामहे, देवतावचनं कदापि व्यलिकं न जायते, इत्थं देवीवचनविश्वस्ता स्वच्छमनोवृत्तिर्वीरमती झटिति द्वारं विवृणोति स्म, तदेकदृष्टयोऽप्सरसस्तां निरीक्ष्य परमं विस्मयं प्रापुः। वीरमती जगाद, यदि मत्कार्यं निष्पादयत तदा युष्मदंशुकं ददामि, मुख्या देवी बभाषे प्रियभगिनि? कीदृग्विधं तव कार्यं? तत्स्वरूपं प्रागेव निवेदय, अस्मिन्विषये लज्जा न विधेया, यतः—'आहारे व्यवहारे च त्यक्तलज्जः सुखीभवेत्'। ततो वीरमत्या भणितम्, देव्यः! मत्सपत्नीकुक्षिपयोधिसमुत्पन्नः सुधारश्मिरिव चन्द्राभिधेयः सूनुर्विद्यते, मन्दभागधेया नाहं सुतसुखमनुभवामि, तस्मादिदं सतां निन्द्यं स्तैन्यं मयाऽकारि, देव्यः प्रोचुस्त्वया कथमिदमस्मद्वृत्तान्तमज्ञायि? वीरमती बभाण, केनचिद्विद्यारेण पालितः शुकराजो मदन्तिकं समेत्य मामिदं सर्वमचीकथत्, अन्यथा युष्माकं दर्शनं मे कथं भवेत्? प्रार्थितप्रदायिन्यः! निर्मायया मया निजचेष्टितं सर्वं न्यगादि, अधुना मे पुत्राभिलाषां पूरयि-

त्वा गृहीतवसना यथाकामं विचरत, अथ विदिततद्वचनसारा तत्स्वामिनी दत्तोपयोगाऽवधिना विज्ञाततद्भाग्ययोगा तामवदत्, अस्मिञ्जन्मनि सर्वथा तव पुत्रसुखं नास्ति, अनार्त्तवफलास्वादः परिणामदारुणो नितरां सम्पद्यते, दैवविरुद्धाचरणं सर्वदा हेयमेव, तद्व्यतिरिक्तमन्यन्मनोभीष्टं मार्गय, गगनचारिणी, वैरिसंहारिणी, जलतारिण्यादि विविधकार्यसाधिकाविद्यामत्तोगृहाण, तन्महिम्ना सचन्द्रकुमारमखिलं राज्यं त्वदायत्तमेव भविष्यति, अतो मद्वचनं मनसि निधाय पुत्रविषादं विमुञ्च, चन्द्रकुमारस्त्वयि मातृभावेन वर्त्तिष्यते, त्वयापि कदाचित्स विषमदृष्ट्या नैव निरीक्षणीयः, तमेवाङ्गजं मन्यमाना त्वमशेषसुखभाजनं भविष्यसि, इत्थं देवीवाचं श्रुत्वा वीरमती सुताभिलाषां शिथिलीकृत्य तत्सकाशाद्गगनगामिन्यादिविद्या विधिना स्वीचकार, निजागश्च क्षमयित्वा देव्यै तद्दुकूलं सा प्रत्यर्पयामास, गृहीतवसना सा सपरिवारा सप्रमोदा निजस्थानमियाय, अथोपात्तविद्या वीरमत्यपि कृतकृत्या श्रीमदादिप्रभोश्चरणयुगलमभिवन्द्य निजसद्मन्यागात्, इदं नैशिकं तद्वृत्तान्तं नरेन्द्रादिकः कोऽपि न विज्ञातवान्, अथ विभातायां विभावर्यां तदेकध्याना सुविहितप्रभातकर्मा वीरमती भूरिमनोभिलाषैरनेकभावान्व्यञ्जयन्तीताविद्याःसाधयितुं प्रारेभे, क्रमेणताः सर्वाः सिद्धाः स्ववशं नीत्वा सा निश्चिन्ता जज्ञे, लब्धविद्यासाहाय्या सा जातपक्षा भुजगीव प्रपन्नवक्रभावा व्याघ्रीव निर्भयमानसाऽतिप्रमत्ता विललास, विरचितमन्त्रतन्त्रादिप्रयोगा वीरमती निजपतिप्रमुखजनान्वशीचकार, तेन तस्या देशान्तरेष्वपि ख्यातिर्बभूव, अथ चन्द्रकुमारं योग्यवयसं विज्ञाय वीरसेनः कलाचार्यसद्मनि विद्याग्रहणहेतवे मुक्तवान्, कुशाग्रशेमुषीशाली स कुमारः प्राक्तनभवाभ्यस्ता इव गणितकाव्यरसालङ्कारच्छन्दोन्यायव्याकरणादिसकलविद्याः स्तोककालेन कलयामास, तथैव शस्त्राऽस्त्रकलास्वपि पारदृश्वाऽभूत्, मातापितॄणामिदमेव कर्त्तव्यं प्रशस्यते, केचित्सुतेभ्यो धनसम्पत्तिं वितीर्य प्रमो

दन्ते, अपरे पुनर्लघुवयसामपत्यानां विवाहमहोत्सवं प्रतिपाद्य निजं कृतार्थं मन्वते, सा तु तेषां मूढतैव केवलं प्रतीयते, द्रव्यादिदानतो विद्यादानं श्रेयस्तरं, शास्त्रेष्वपि प्रसिद्धमेतत्

तद्यथा—धनदानेन रज्यन्ते, बुद्धिहीना नराऽधमाः । विद्यादानरता विज्ञा—यतस्तत्तत्समुद्भवम् ॥ १ ॥

तथा च—एकतः शास्त्रविज्ञानं, सम्पदां श्रेणिरेकतः । उभयोरन्तरं लोके, महदेव विभाव्यते ॥ २ ॥

विद्यावतां भयं नैव, सत्प्रवृत्तिविधायिनाम् । धनदारवतां लोके, भीतयस्तु पदेपदे ॥ ३ ॥

एकाऽपि कला सुकला, वचनकला किं कलाभिरपराभिः । वरमेका कामगवी, जरद्गवीनां न लक्षमपि ॥४॥

नैव भाग्यं विना विद्या, विना विद्यां न भाषितम् । सुभाषितविहीनस्य, जीवितान्मरणं वरम् ॥ ५ ॥

मातेव रक्षति पितेव हिते नियुङ्क्ते, कान्तेव चाभिरमयत्यपनीय खेदम् ।
लक्ष्मीं तनोतिविपुलांवितनोतिकीर्त्तिं, किं किं न साधयति कल्पलतेव विद्या ॥ ६ ॥

तस्माद्यः सूनवे विद्याधनं ददाति सैव जनकः सुतहिततायी स्मृतः । एवं विद्याविलासरसिकश्चन्द्रकुमारः सवयोभिर्दिनान्यतिक्रामन् गतमपि समयं न विवेद, अथैकदा स आस्थानस्थितं नरेन्द्रं प्रणम्य विहितोपचारः स्वोचितस्थाने समुपविष्टः, यौवनोद्भिन्नशैशवं कुमारं निरीक्षमाणो भूपतिर्व्यचिन्तयत्, दारोद्वहनक्रियायोग्योऽयं निष्पन्नस्तस्मिन्नवसरे पद्मशेखरनृपदूतो निजप्रतीहारसूचितः बद्धाञ्जलिर्नरेन्द्रपादपद्मयोर्निपत्य सविनयं व्यजिज्ञपत् नरेन्द्ररत्न ! अस्मत्स्वामी द्विधापि गुणावलीं निजां पुत्रीं चन्द्रकुमाराय प्रदातुमुत्कण्ठतेऽतोऽस्मिन्कार्ये भवद्भिर्विलम्बो न विधेयः । इत्यनुमततद्वचनो नरेशो यथोचितं

सत्कृत्य दूतं विसृज्य नैमित्तिकाऽऽवेदितसुमुहूर्त्ते कुमारलग्नमहोत्सवं निर्वर्त्तयामास, प्रत्यहं परिहिताभिनवाभरणनेपथ्यश्चन्द्रराजोऽपि युवजनमनोहारकयौवनवनविहारिण्या गुणावल्या सह रतिविलासाननुभवन्वासराननतिचक्राम. वीरमती चन्द्रावत्या अप्यधिकतरस्नेहं व्यञ्जयन्ती कुमारहितसाधिकाऽभवत्। ततोन्यदा निजावासस्थिता चन्द्रावती रहसि निजस्वामिनः केशकलापं दन्तपत्रिकया समीकुर्वती सुरभितैलादिना सुवासितं कृतवती, विडम्बितभुजङ्गाभोगमहीपतिकचकलापसक्ततदङ्गुलीवृन्दं कषपट्टिकानिहितसुवर्णरेखाकदम्बकमिव व्यराजत्, तदानीं नरेन्द्रशिरसि पार्वणेन्दुकलानुकारि पलितं दृष्ट्वा सा स्वामिनं प्रत्यवोचत्. प्रियतम ! आकस्मिकभयसूचकोऽयं दूतः समागतः, भवद्भुजबलपालिता अखिला अपि मानवा माल्यमिव त्वदनुशासनं शिरसा रसायां निवहन्ति. परन्त्वनेन दूतेनैव निर्भीकतयाऽपमानितशासनेन भवाँल्लघ्वीकृतः। स्वामिन् ! सकलवैरिवारस्त्वयोर्जितप्रभावेण हेलयैव स्ववशीकृतस्तथाऽप्ययं दूतस्तु जेतुमशक्यः, इति निजपत्नीगदितमाकर्ण्य सविस्मयमितस्ततो विलोकयन्कमप्यागन्तुकमपश्यन्नरेन्द्रस्तामवोचत्, मृगाक्षि ? अविदिताभिधेय एतादृशः को दूतः ? योऽलब्धाऽऽज्ञोऽप्यूर्जितबलविभवैः सुभटैर्मनसाऽपि प्रवेष्टुमशक्यं मदन्तःपुरं प्रविष्टः, । निजजीवितव्यविपण्णो योऽकार्यमिदं कर्त्तुमुद्यतस्तं हताशं सद्यः प्रदर्शय, येन स कस्याप्यविनयं पुनर्न करोति तथा तं प्रशास्मि, चन्द्रावती जगौ प्राणप्रिय ! सहसा व्याकुलचेतसा भवता मा भाव्यम्, धैर्यधनं समाधेहि. यतः—क्षमाधनुः करे यस्य, दुर्जनः किं करिष्यति। अतृणे पतितो वह्निः स्वयमेव प्रशाम्यति ॥१॥

किञ्च जीवितेश ? सुविश्चिन्त्य यद्विधीयते तत्परिणामसुखावहं जायते.

उक्तञ्च—सुजीर्णमन्नं सुविचक्षणः सुतः, सुसाधिताऽस्त्रं नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य यत्कृतं, सुदीर्घकालेऽपि न याति विक्रियाम् ॥ १ ॥

तथा च—सहसा विदधीत न क्रिया–मविवेकः परमापदां पदम् । वृणते हि विमृष्यकारिणं, गुणलुब्धाः स्वयमेव सम्पदः ॥२॥

अतः शमतुलिकोपस्कृतां स्थेयसीं बुद्धिखट्वामधिष्ठाय तत्त्वं विचिनुहि, मदन्तःपुरेऽनासादितमदाज्ञोऽपरदूतो नागच्छतीत्यभिमानमदेन भवता मुधैव मानसं मलिनीकृतम् । प्रभो ! पश्य पश्य, पलितच्छलेनानेन जरादूतेन भवन्मस्तकं समाक्रान्तम्, जगदन्तकोऽयं जरादूतो निखिलसत्त्वराशिभिर्दुरतिक्रमणीयो विद्यते, इत्थं विज्ञातमहिषीवचनसारोनिर्मानमानसोपशान्तक्रोधानलो नृपतिर्व्यचिन्तयत्, अहो ? करालकान्तिर्दुर्जेया जराराक्षसी समागता, यया समाक्रान्तान्यङ्गानि शिथिलीभवन्ति, केशाश्च श्वेतभावं भजन्ति, दन्तश्रेणिरपि दोलारूढेव कुतोऽपि भ्रश्यति, श्रोत्रप्रमुखाक्षव्रातः स्वस्वकार्यविमुखो भवति—

तद्यथा—मुखं वलिभिराक्रान्तं, पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते, तृष्णैका तरुणायते ॥ १ ॥

अन्यच्च—दन्तैरुच्चलितं धिया तरलितं, पाण्यंह्रिणा कम्पितं, दृग्भ्यां कुड्मलितं बलेन गलितं, रूपश्रिया प्रोषितम् ।
प्राप्तायां यमभूपतेरिहमहा–धाट्यां धरायामियं, तृष्णा केवलमेकिकैव सुभटी, हृत्पत्तने नृत्यति ॥ २ ॥

वदनं दशनविहीनं, वाचो न परिस्फुटा गता शक्तिः । अव्यक्तेन्द्रियशक्तिः; पुनरपि बाल्यं कृतं जरया ॥ ३ ॥

गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गता,–दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रञ्च लालायते ।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, हा ! कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ ४ ॥

तथा च—वृद्धस्य मृतभार्यस्य, पुत्राधीनधनस्य च । स्नुषावचनदग्धस्य, जीवितान्मरणं वरम् ॥ ५ ॥

यममिव गृहीतदण्डं, हरिमिव सगदं शशाङ्कमिव वक्रम् । शम्भुमिव विरूपाक्षं, जरा करोत्यकृतपुण्यमपि ॥ ६ ॥ पटु रटति पलितदूतो—मस्तकमासाद्य सर्वलोकस्य । परिभवति जरामरणं, कुरु धर्मं विरम पापेभ्यः ॥ ७ ॥ वृद्धत्वाऽनलदग्धस्य, सारयौवनवस्तुनः । दृश्यते देहगेहेषु, भस्मैव पलितच्छलात् ॥ ८ ॥ वीक्ष्यते पलितश्रेणि—र्नैव वृद्धस्य मूर्द्धनि । वृथैव जातजन्मेति, किन्तु भस्मविधिर्न्यधात् ॥ ९ ॥

निःसीमरूपवैभवसंपन्नोऽयं देहो जरसाभिभूतः कथं स्थास्यति ? पक्वाम्रफलं कियत्कालं वृन्तावलम्बि तिष्ठति ? रुजार्दितं शरीरं भेषजादिप्रयोगैः सुसाध्यं भवति, न पुनरस्याः प्रत्युपचारः श्रूयते.

यतः—अलङ्करोति हि जरा,—राजामात्यभिषग्वरान् । विडम्बयति पण्यस्त्री—मल्लगायकसेवकान् ॥ १ ॥

यद्यपि नीललोहितेन कुसुमधन्वा पञ्चत्वं प्रापितस्तथैवेयं जरा कथं न भस्मावशेषीकृता ? तदभावे हि निश्चिन्तचेतसो देहिनः सदैव सन्मङ्गलावलीमनुभवेयुः । एवं विचिन्तयन्नरेशो निजात्मानमबोधयत्. रे ? जीव ? दुरन्तदुःखौघनिलयेऽस्मिन्संसारावासे धर्ममन्तरा न किमपि लोकान्तरहितदम्, इदं शरीरमनित्यम्, विभवराशिरशाश्वतः, मृत्युसुभटस्तु नित्यं प्राणिनां प्राणापहारकः सन्निहितस्तिष्ठति, तस्मान्निजकर्त्तव्यपरायणोभव, देहिनां धर्माराधनमेवशाश्वतसिद्धिसाधकं, विषयविषवासनां दूरतः परिहर,

यदुक्तम्—विषं जग्धं वरं प्रोक्तं, सकृत्प्राणहरं यतः । विषयासेविनो लोकाः, पीड्यन्तेऽनेकजन्मसु ॥ १ ॥

ततश्चेतसा प्रसमीक्ष्याक्षयनिजात्मानन्दरसमास्वादय, आत्मन् ? यथेयं जरा वाह्यप्रकाशं कुरुते तथैव त्वमसङ्ख्यप्रदेशाव-

गाही स्वकीयज्ञानभानुनाऽऽन्तरोद्द्योतं कर्त्तुं कथं विलम्बसे ? सप्ताङ्गमिदं राज्यं निरीक्ष्य किं रज्यसे ? भुज्यमानं तन्निरयादि-यातनां ददाति, न केनाऽपि भूरियं चिरं स्वायत्तीकृता विलोक्यते, बद्धमुष्टिका एव सर्वे यथाऽऽयातास्तथा गताः. तस्माद् परिहार्ये वस्तुनि मुधा ममाहमितिभावनां विजहीहि ।

उक्तञ्च—यदयं स्वामी यदिदं सद्म, सर्वं चैतन्मिथ्या छद्म। यदयं कान्तो यदियं कान्ता सोऽयं मोहो हन्त दुरन्तः ॥ १ ॥

जाताः कति नहि सुखसम्बन्धा–न विदन्त्येते जीवा अन्धाः। कटरे मोहनटस्य विलासः, सर्वो नव इव पुनराभासः ॥२॥ कोऽहं कस्मिन्कथमायातः, का मे जननी को मे तातः । इति परिभावयतः संसारः, सर्वोऽयं स्वप्नव्यवहारः ॥ ३ ॥ दाराः परिभवकारा–बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो--ये रिपवस्तेषु सुहृदाशाः ॥ ४ ॥ पुत्रो मे भ्राता मे, स्वजनो मे गृहकलत्रवर्गो मे । इतिकृतमेमेशब्दं, पशुमिव मृत्युर्जनं हरति ॥ ५ ॥ ओतुः पयः पश्यति नैव दण्डं, कीरोऽपि शालीन्नच लोष्ठखण्डम् । काकः पलं नो बत सिंहतुण्डं, जन्तुस्तथा शं न यमं प्रचण्डम् ॥ ६ ॥

आत्मन् ? इमां जरावस्थां महोपकारकारिणीं मन्यस्व, यतस्त्वं परमात्मपदरागी भूत्वा तद्ध्यानबलेन तद्रूपो भविष्यसि, गुणरत्नखानिरियं जरादेवी वायसमपि सितच्छदं विनिर्मातुं समर्था. अस्या आज्ञामवधीरयितुं जगति कोऽपि न शक्नोति, अवगणिततदनुशासना रसनेन्द्रियवशवर्त्तिनो ये स्वेच्छाचारं सेवन्ते तेषां रदनपाताद्यनेकविधप्रखरशिक्षणं सा प्रत्यक्षमेव प्रददाति, इदं पलितमदसीयमप्रतिमं खड्गं विद्यते, येन कामसुभटबलं क्षणाद्विहन्यते. तस्मादिमं पश्चाद्विलासभोगं परिहृत्य संयमदीक्षां गृहीष्ये, इति मनसि निश्चित्य वीरसेनभूपश्चन्द्रावतीं प्राह, प्रिये ? साम्प्रतमसारसंसारवासोयं मे न रोचते, अतो

दीक्षानौकां समाश्रित्य भवजलधिं गोष्पदं कर्त्तुमिच्छामि, इत्थं प्रियवचनमाकर्ण्य वज्राहतेव सा क्षणाल्लब्धस्वास्थ्या विविधवचोभङ्ग्या महीनाथं व्यजिज्ञपत्, नायमधुना संसारावासः स्वामिना परिहर्त्तुमुचितः अनर्घ्यरत्ननिधिर्भवोदधिः प्रचक्ष्यते, अनुसृतनीतिवर्त्मानो मानवा नवनवानन्दभोगिनो विदितवैभवा इहामुत्राखर्वसुखसम्पदो विजयन्ते, संसारवासवासिनोऽपि बहवो जनाः शिवपदं प्रापुः । न केवलं कैवल्यपदसाधकं संयमग्रहणमेव, यत्र कुत्राऽपि संस्थिता देहिनो धर्माराधनेनात्महितं साधयन्ति, भूमिमार्गसमानगृहाश्रमिधर्मेण शनैर्मोक्षधाम लभ्यते, जलवर्त्मोपमयतिधर्मानुसारिणो भव्यात्मानोऽप्रमादिनोऽचिरेण भवक्षयं कुर्वन्ति. यदुक्तम्—

धर्मस्य मार्गौ गदिताविमौ द्वौ, गृहाश्रमः संयमनामधेयः। समाश्रयन् भूजलमार्गवद्वै, भव्यः शनैः श्राक् शिवशर्म यायात् ।१।

एवं वीरमतीचन्द्रावतीभ्यां बहुशो विलोभितोऽपि वीरसेनः संसारवासं कारागृहं मन्यमानो निजसत्त्वान्नोपरराम, अथ विज्ञातपतिभावा चन्द्रावती नरेन्द्रं निजाभिप्रायं निवेदयन्त्याह, स्वामिन् ? अहमपि भवचारकवासान्निर्विण्णाऽस्मि, शाश्वतसुखनिशान्तं भवदीयसरणीं शरणीकर्त्तुमिच्छामीति विनिवेद्य साऽपि विरक्ताऽजनि, ततो वीरसेनो दीक्षां जिघृक्षुः सचिवादिसामन्तपौरान्समाहूय निजसङ्कल्पं ज्ञापयामास, तैर्भृशं प्रार्थितोऽपि नरेशः स्वचिकीर्षितं सत्यापयामास.

इतिश्री चन्द्रराजचरित्रे प्रथमोल्लासे पञ्चमः सर्गः ॥ ५ ॥

ततश्चन्द्रकुमारं वीरमत्यै समर्प्य तदर्हां हितशिक्षां प्रदाय वीरसेननरेशो निःसीमसन्तोषमियाय.

अन्यत्राऽप्युक्तम्—पुत्रेण जायते तुष्टि—र्गुणरत्नमहाब्धिना । किमन्येन जनेनाऽत्र, वन्ध्येन विपदायिना ॥ १ ॥

पुनर्वीरसेनः सचिवप्रमुखानुद्दिश्य जगाद, अयं चन्द्रकुमारो मदीयमूर्तिर्मद्वन्माननीयोऽद्यप्रभृति भवतामाधिपत्येऽयं संस्थापितः । भोश्चन्द्रकुमार ! इमाः सकलाः प्रजास्त्वया निराबाधतया नयानुगामिना सदात्मवत्परिपाल्याः.

यतः—प्रजानुपालनाद्राजा, सत्कीर्त्तिं लभते सदा । प्रजापीडनजो वन्हिः, समूलां दहति चितिम् ॥ १ ॥

पुनरसौ प्रधानमन्त्रिणं प्रत्याह, लब्धमुद्रेण नीतिसमुद्रेण त्वयाऽपि नयवेदिवर्त्म प्रमाणीकृत्य प्राज्यराज्यभारो निर्वोढव्यः ।

यतश्चोद्गीतम्—जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रै-र्नरपतिहितकर्त्ता द्वेष्यतां याति लोके ।
इति महति विरोधे वर्त्तमाने समाने, नृपतिजनपदानां दुर्लभः कार्यकर्त्ता ॥ १ ॥

तस्मात्सर्वत्रसमवर्त्तितया वर्त्तितव्यं, यथा सर्वत्र विजयः सुलभः स्यात्, एवं सर्वेषामुचितशिक्षां प्रदाय चन्द्रकुमारं राज्येऽभिषिच्य देशकालौ संकीर्त्त्य यथायोगं सप्तक्षेत्र्यां निजवित्तं व्ययित्वा दीनादीन् सन्तोष्य महोत्सवपूर्वकं नगराद्बहिरागत्य सद्गुरुपादान्ते चन्द्रावतीसमेतो वीरसेनो भवोदधितारिणीं दीक्षां जग्राह, अहो ? सत्पुरुषा भवाटवीमटन्तो धर्मकर्मणि विलम्बं न सहन्ते, यतः—अद्य वाब्दशतान्ते वा, मृत्युर्वै प्राणिनां ध्रुवम् । गृहीत इव केशेषु, मृत्युना धर्ममाचरेत् ॥ १ ॥

तथा च—धर्माराधनतो नान्य-त्प्रशस्तं कर्म विद्यते । यतस्तद्धेतुकं सर्वं, साध्यसिद्धिविधायकम् ॥ २ ॥

धर्मसिद्धौ ध्रुवा सिद्धि-र्द्युम्नप्रद्युम्नयोरपि । दुग्धोपलम्भे सुलभा, सम्पत्तिर्दधिसर्पिषोः ॥ ३ ॥

अथोभयथा गृहीतशिक्षो वीरसेनमुनिर्गुरुचर्यानुभावतो गीतार्थीभूय भव्यान्प्रबोधयन्मुनिचर्यया भूतलं पुनानः क्रमेण श्रीमुनिसुव्रतस्वामिनःशासनेकेवलज्ञानमासाद्य मोक्षपदं लेभे । चन्द्रावती साध्व्यऽपि निजोज्ज्वलकर्मसम्पदा निरतिचारचारित्रं

समाराध्य क्रमेणोच्चश्रेणीं समारुह्य शाश्वतस्थानमाससाद । अथ श्रीवीरमतीसपरिग्रहचन्द्रकुमारयोश्चित्तचमत्कृतिजनकमवदातमुदीर्यते, तन्निशम्यान्धदर्पणन्यायप्रसङ्गो यथा न भवेत्तथा सहृदयैर्विधातव्यम् ।

उक्तञ्च—अरण्यरुदितं कृतं, शवशरीरमुद्वर्त्तितम् । स्थलेऽब्जमवरोपितं, यदुषरभूमिषु वर्षितम् ।

श्वपुच्छमवनामितं, यदबुधो जनः सेवितः । धृतोऽन्धमुखदर्पणो—वधिरकर्णजापः कृतः ॥ १ ॥

तत्राऽपि—गुणदोषौ बुधो गृह्न—न्निन्दुक्ष्वेडाविवेश्वरः । शिरसा श्लाघते पूर्वं, परं कण्ठे नियच्छति ॥ २ ॥

सुभाषितं हारि विशत्यधो गला—न्न दुर्जनस्यार्करिपोरिवामृतम् । तदेव धत्ते हृदयेन सज्जनो—हरिर्महारत्नमिवाऽतिनिर्मलम् ॥३॥

सुज्ञाः सुकविगुम्फितगुणिगणगुणकुसुमावलीं गुणलुब्धाः स्वयमेव सादरं समावहन्ति, भव्याः ? गुणावलीचन्द्रकुमारयोर्वीरमतीविद्याप्रभावः कीदृशः स्फुरति तत्सावधानतया शृणुत, अथ वीरमती लब्धस्वातन्त्र्या चन्द्रराजं रहसि समाहूय कथयामास. वत्स ! संसृतिपारावारमसारं विदित्वा जातवैराग्यस्त्वज्जनकस्त्वयि राज्यधुरां विन्यस्य स्वयं संयमधुरामग्रहीत्, त्वन्माता चन्द्रावत्यपि निर्वाणपदरागिणी तदनुमता गृहीतदीक्षा क्षीणकर्माऽजनि, सम्प्रति निश्चिन्तमनसा सुमनसां विभवभाजा मानवभवेऽपि भवता स्थिरतया भाव्यम्, अनवद्यविद्यावलबलिष्ठायां मयि विद्यमानायां तव का चिन्ता ? वत्स ! यद्यस्ति त्वदभिलाषश्चेत्सत्वरं वरं स्वर्गपतिसिंहासनमत्रानयामि, आयुष्मन् ! युष्मन्मनोरथश्चेत्सप्तसप्तिहरिदश्वानञ्जसा त्वन्मन्दुरासेविनो विदधामि, धीमन् ! धनाध्यक्षं विलक्षीकृत्य कृत्यविदहं क्षणेन तत्समृद्धिमपाहृत्य भवदीयनिधीनक्षीणधनान्करोमि, त्वदु-

त्कण्ठा चेत् स्वल्पेन कालेन सुरगिरिमपि क्रीडाशैलमिव त्वन्निवासाङ्गणवर्त्तिनं वितनोमि, किं वा तव संमतिश्चेत्सुरकुमारीमिह समाकार्य त्वया साकमुद्वाहयामि, वत्स ! मदुक्तमिदं सर्वमवितथं विद्धि, मामकीनामकलनीयां शक्तिसम्पदमवगन्तुममृतान्धसोऽपि कुण्ठगतयो भवन्ति, मानवास्तु किमुत !, अहो ? महीपीठे महिलाचरितं वाग्मिभिरपि दुर्ज्ञेयम्. उक्तञ्च—

अश्वप्लुतं माधवगर्जितञ्च, स्त्रियश्चरित्रं पुरुषस्य भाग्यम् । अवर्षणञ्चाप्यतिवर्षणञ्च, देवा न जानन्ति कुतो मनुष्याः ॥ १ ॥

वत्स ? जगत्रयश्लोकनीयलोकातीतकीर्त्तेर्मम प्रभावस्त्वचिन्तनीयः यथाकामं त्वन्मनोऽभीष्टं पूरयिष्यामि, किन्तु यौवनवने परिभ्रमन् धनोन्मादविमूढो मदाज्ञाविमुखो मा भूः । यद्यौवनावेशः सर्वानर्थदायकः सर्वजनदुःसहो विभाव्यते, यत्पाशपतितो मतिमानपि मनुजो निजकर्त्तव्यतामूढोऽभिजायते.

तथा चोक्तम्—यौवनं धनसम्पत्तिः, प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय, किमु यत्र चतुष्टयम् ॥ १ ॥

नन्दन ! मयि तुष्टायां कामदुघाकल्पतरुचिन्तामणयः कियन्तः ? पुनः कुप्यमाना विषवल्लीदृष्टिविषावप्यधरीकरोमि, पुत्ररत्न ? कदाचिदपि मदाज्ञामवधूय त्वया निजमत्या किमपि कार्यं न विधेयं मद्वचनेनैव सर्वदा कार्यप्रवृत्तिर्विधातव्या, अपरश्चैतद्विशेषतः स्मरणीयं, यद्यात्महितं वाञ्छसि चेन्मच्छिद्राणि त्वया न विलोकनीयानि, यतः परच्छिद्रान्वेषकः स्वसमीहिताद्भ्रश्यत्येव.

परस्य यो दूषणमीक्षतेऽधमः, स केवलं हारयते शुभं निजम् । स्वकर्मदक्षो विदुरो हि शस्यते, परोपकारप्रवणः पदे पदे ॥१॥

चन्द्रराजो रचिताञ्जलिर्वीरमतीं ज्ञापयामास, मातस्त्वद्वचनगगनमणिनिहततमस्ततिरहमतिहितदोपकारवत्या भवत्या आदेशकुसुमाञ्जलिं शिरसा धारयिष्ये, यदि मे हृदयकषपट्टिकायां कुलीनता रेखा व्यद्योतिष्यत तदा रेखामात्रमपि त्वद्वचोऽध्यलङ्घनं

नाऽकरिष्यम्, जननि ? किं भूरिजल्पनेन ?

त्वमेव माता च पिता त्वमेव, त्वमेव बन्धुर्मम देवदेवः । त्वमेव सर्वस्वमनर्थहन्त्री, त्वमेव सत्कार्यविधायिका मे ॥ १ ॥

सवित्रि ? जगत्त्रितये महनीयप्रभावा त्वमेव मे पूज्यासि, त्वमेवेश्वरी, त्वमेवान्नदात्री, त्वमेवास्य राज्यस्य हितकारिणी, त्वय्येव सर्वाधिपत्यं विष्ठत्यहन्तूदरभरणामितमन्नमिच्छामि, अस्मदीयमिदं सर्वं राज्यादिकं त्वदायत्तमेव जानामि, मातस्त्वत्कृपाकटाक्षितस्य मे न किञ्चिन्न्यूनं, श्रीमत्याः प्रसादेन समस्तविभवं निधानास्थितमेव विलोकयामि, इत्थं चन्द्रराजोक्तिसुधाधारां निपीय वीरमती रोमाञ्चिततनुरनूनामाशिषं भणन्त्यवदत्, प्रियसूनो ? शतं शरदो जीव, निजप्राणतोऽप्यधिकं त्वां मन्ये, त्वमेव मे जीवितं त्वदधीनमिदं राज्यमण्डलादिकमखिलं राजते.

यतश्चोक्तम्—गुणेषु विनयो रत्नं, नभोरत्नं दिवाकरः । सद्गुणावासितः सूनू—राज्यरत्नं प्रचक्ष्यते ॥ १ ॥

तथा च—गुणिगणगणनारम्भे, न पतति कठिनी ससंभ्रमा यस्य । तेनाम्बा यदि सुतिनी, वद वन्ध्या कीदृशी भवति ॥२॥

प्रियपुत्र ? तव विनयगुणप्रेक्षणेन भृशं तुष्टाऽस्मि, परमां राज्यरमां सुखेनोपभुङ्क्ष्व, मत्तः कथञ्चिदपि भयशङ्का त्वया मनसि नानेतव्या, विविधकल्याणमालां प्रत्यहमनपेक्षितः कलयस्व, एवं प्रवरैराशिःसूक्तैस्तं संभाव्य वीरमती निजावासं व्यसृजत् । अथ सुगृहीतनामधेयश्चन्द्रराजो राज्यधुरावलम्बी नयचक्षुषा क्षितितलमतुलविक्रमः समालुलोक, नवोद्यतं तं वसुधाधवं प्रतिपच्चन्द्रमिव विनयावनताङ्गयः समस्ताः प्रजाः प्रणमन्त्यः प्रमोदमेदुरा जाताः । ततो राज्यासनप्रतिष्ठितं चन्द्रराजं शृण्वाना दह्यमानमानसमध्यास्तद्भयमेव ध्यायन्तः परिपन्थिदिवान्धा निजानुदयं मन्यमाना मुष्टिगृहीतजीवाः काकनाशं नष्ट्वा गिरिगह्वराणि

सिषेविरे, अगम्यरूपं नयवर्त्म प्रकाशयति तस्मिन् कोऽपि दण्डशिक्षणीयो नासीत्

यतः—साम्ना दानेन भेदेन, समस्तैरथवा पृथग् । साधितुं प्रयतेतारी–न्न युद्धेन कदाचन ॥ १ ॥ इति नीतिवाक्यं तेन यथार्थीकृतम्। तस्मिन् गोप्तरि निरीतिभावभाजो जानपदाः सन्मङ्गलोदग्रतरप्रभावाः स्वसमीहितानि नितरां भेजुः, ईतिस्वरूपं–

यथा—अतिवृष्टिरनावृष्टि–र्मूषकाः शलभाः शुकाः । स्वचक्रं परचक्रं च, सप्तैता ईतयः स्मृताः ॥१॥ सर्वदा नीतिमति-भूपतौ सम्पदः सुलभाः, राजधर्मानुशासनमन्यत्राप्युक्तम् ।

तद्यथा—दुष्टानां दमनं नयानुगमनं स्वीयप्रजापालनं, नित्यं देवमहर्षिपादनमनं षड्दर्शनीमाननम् ।
औचित्याचरणं परोपकरणं त्यागं सुभोगं श्रियां, कुर्वाणो नृपतिः श्रिया निजपतिः सत्येव नो मुच्यते ॥ १ ॥
यस्तेजस्वी यशस्वी शरणगतजनत्राणकर्मप्रवीणः, शास्ता शश्वत्खलानां क्षतरिपुनिवहः पालकः स्वप्रजानाम् ।
दाता भोक्ता विवेकी नयपथपथिकः सुप्रतिज्ञः कृतज्ञः, प्राज्यं राज्यं स राजा प्रथयति पृथिवीमण्डलेऽखण्डिताज्ञः ॥ २ ॥

तथा च—नरकान्तं तदा राज्यं, यदि राजा न धार्मिकः । धार्मिके तु परं तत्र, सौख्यमत्र परत्र च ॥ १ ॥
कामः क्रोधस्तथा हर्षो–माया लोभो मदस्तथा । षड्वर्गमुत्सृजेदेनं, तत्र त्यक्ते सुखी नृपः ॥ २ ॥

चन्द्रायमाणचन्द्रराजीयगुणसुधाधाराप्लावितजनव्रततिविततयो विकासमीयुः । निजस्वामिनः साधुवादं वदन्तो जयघोषैः-स्वनितलं घोषयन्तो दौःस्थ्यदशां दूरतः परिहरन्तो द्विजातिजाताः सर्वत्र शुभाशंसिनो बभूवुः । किं बहुना, यत्र कुत्राऽपि जनवृन्दैर्जेगीयमानतदीययशोराशिः श्रुतिविवरगतो राष्ट्रीयमनांसि रञ्जयामास, सुधावधीरणीयत्कथाः सादरं निपीय विबुधाः

पीयूषपानमपि नाद्रीयन्त, सितच्छत्रायमाणकीर्त्तिमण्डलाऽऽखण्डलविक्रमो महोज्ज्वलो जगत्त्रीरनिधौ रत्नायमानमूर्त्तिश्चन्द्रराजो राजहंस इवाचरत् । सुरापगेव स्वच्छमतिः सद्गुणैकनिवासगुणावली कुवलयमालायमाना निजपतिमानसमावर्जयामास. दोगुन्दुकवत्तौ दम्पती मिथः प्रेमपाशनिबद्धौ रतिविलासं चक्रतुः । रथाङ्गनामानाविवोभौ त्तणमपि विरहवेदनां न सेहाते, वसुधाधिपस्तयैवात्मानं कलत्रवन्तं मेने.

यतः—सरसा सुपदन्यासा, सालङ्कारा सुवर्णमयमूर्त्तिः । आर्या तथैव भार्या, न लभ्यते पुण्यहीनेन ॥ १ ॥

प्राकृतसुकृतसञ्चयादेव तादृशं स्त्रीरत्नं मानवदेवेन लभ्यते, दम्पत्योर्मैत्रीभावो दुग्धोदकवद्देवानामपि प्रशंसनीयः प्रकीर्त्तितः।

तद्यथा—त्तीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः, त्तीरे तापमवेत्त्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रागमं, युक्तं तेन जलेन शाम्यति सतां मैत्री भवेदीदृशी ॥ १ ॥
आदिमध्यनिधनेषु सौहृदं, सज्जने भवति नेतरे जने । छिन्नताडितसुघृष्टतापितं, नान्यभावमुपयाति काञ्चनम् ॥ २ ॥
शरावनौ नदीवृत्त–समा प्रीतिः प्रशस्यते । प्रासादवेणिदण्डेत्तु–समाप्रीतिर्न युज्यते ॥ ३ ॥

पुनरनयोः प्रेममुद्रा कनकमणियोगवदधिकं दिदीपे. एवमनुभूतानेकविधविलासरसास्वादयोस्तयोः कियान्समयो व्यतीयाय । अथ वयसा लघीयानपि ग्रीष्मार्काभिभाविविक्रमेण गरीयान्, सततोज्ज्वलप्रतापेन प्रत्यर्थिगणभयप्रदोऽपि दयावासित चेतसा प्रशान्तमूर्त्तिः, विनयादिगुणसम्पन्नोऽपि गुरुशुश्रूषायामतिलुब्धश्चन्द्रराजः पद्मबन्धुरिव पैतृकं पदं सुमेरुशृङ्गमिव व्यभूषयत् । निःसपत्नं राज्यव्यवहारं प्रवर्त्तयन् तेजस्विनां धुर्यतां स लेभे, तेजस्विनामियं प्रकृतिः प्रत्यर्थिपराभवं न सहते ।

तद्यथा—सिंहः शिशुरपि निपतति, मदमलिनकपोलभित्तिषु गजेषु । प्रकृतिरियं सत्त्ववतां, न खलु वयस्तेजसो हेतुः ॥१॥

किमपेक्ष्य फलं पयोधरान्, ध्वनतः प्रार्थयते मृगाधिपः । प्रकृतिः खलु सा महीयसां, सहते नान्यसमुन्नतिं यया ॥ २ ॥

स्वविक्रमसमाक्रान्तरिपुचक्रश्चक्रिवद्भूराचक्रे चङ्क्रमँश्चन्द्रराजः स्वनाम कृतार्थयामास । अन्यदा रूपसम्पदा निर्जितानङ्गः सुरसानुमच्छिखरारूढदिनकृदिव भासमानोऽधिष्ठितराज्यविष्टरः सपरिवारश्चन्द्रराज आस्थानमण्डपमलश्चकार, अथाऽत्र संस्थितैर्जङ्गमगिरिभृङ्गवृन्दैरिवोन्नतैरञ्जनपुञ्जैरिव श्यामैर्जलमिव मदधारामभिवर्षद्भिर्दन्तश्रेणिभिर्विद्युत्प्रभां वितन्वद्भिर्बृंहितैर्मेघघटां स्मारयद्भिर्दन्तिनिवहैः प्रावृट्समयः प्रतीयते स्म, घोणाविवरविनिःसरद्वारिपूरैर्घुसृणोदकसंभृतकनकभृङ्गीरनुकुर्वन्तः, उद्गीर्णोज्ज्वलफेनराशिमुखैरवीलप्रक्षेपस्मृतिं कारयन्तो हेषारवैः कोलाहलभ्रान्तिं स्मारयन्तस्तुरङ्गमास्तत्र विलेसुस्तेनसाक्षाद्वसन्तःसमागत इति सर्वे विविदुः । चन्द्रराजद्विजराजमुखात्प्रक्षरन्तीं वचनसुधां श्रोत्रशुक्तिपुटैः पिबन्त्यः प्रजा अभिनवगुणमौक्तिकानि जनयामासुस्तेन तत्र शरदागमः स्पष्टीबभूव, यतः शरदागमे मौक्तिकानि जायन्ते । प्रत्यहं तत्र धान्यराशय इव जनपदेभ्यो विविधोपदाः समागुस्तेन साक्षाद्धेमन्तर्तुः प्रतीयते स्म. तदुग्रभीतितुषारदग्धमुखकमलाः शीतार्त्ता इव तद्भयाद्वेपमानशरीरावयवा अनेकनृपतयस्तत्र समागतां मौलिस्रग्मकरन्दैस्तच्चरणपीठं रञ्जयन्तः शीतकालं व्यञ्जयामासुः । प्रकटितप्रतापस्य तस्य प्रत्यर्थिभूपाः पत्तनवननिशान्तेषु क्वाऽपि रतिमलभमाना ग्रीष्मर्त्तुं द्योतयन्ति स्म, पुनस्ते प्रत्यर्थिनोऽपि चन्द्रराजं शरणीकृत्य तदङ्गरक्षकीभूय सुखिनोऽभूवन् । एवं युगपत्तत्र तद्गुणाकृष्टा इव सर्वर्त्तवः संलक्ष्यन्ते । एवमहर्निशं विलसतस्तस्य महीधरस्य सदसि सुरगुरुमतीनां पूज्यपादानां प्रवरपण्डितानां पञ्चशती मिथो विवदमाना सदोगतानां मनांसि रञ्जयामास, षड्दर्शनवेदिनोऽन्येऽपि

कोविदा निजगुणैर्भूपचेतसि भूरिचमत्कृतिं चक्रुः। बौद्धसाङ्ख्यजैननैयायिकवैशेषिकचार्वाका एकैकस्मादधिकतरयुक्तिप्रयुक्तिभिः स्वस्वाभीष्टमतं दर्शयामासुः ॥

इतिश्री चन्द्रराजचरित्रे प्रथमोल्लासे षष्ठः सर्गः ॥ ६ ॥

अथ कानि तानि दर्शनानीत्यपेक्षया व्यक्तितस्तत्संख्यामाह कारिकाकारः—दर्शनानि षडेवात्र, मूलभेदव्यपेक्षया। देवता तत्त्वभेदेन, ज्ञातव्यानि मनीषिभिः ॥ १ ॥

अस्मिञ्जगति प्रसिद्धानि षडेवदर्शनानि, एवशब्दोऽत्रावधारणे, यद्यपि भेदप्रभेदतयाबहूनि दर्शनानि प्रसिद्धानि, यदुक्तं सूत्रे.

असियसयं किरिआणं, अकिरियवाईण हुंति चुलसीई। अन्नाणि य सत्तट्ठी, वेणइआणं च वत्तीसं ॥१॥ इति त्रिषष्ट्यधिकात्रिशतीभेदाः पाखण्डिकानाम्। बौद्धमते चाष्टादश निकायभेदाः, ते च वैभाषिक, सौत्रान्तिक, योगाचार, माध्यमिकादयो ज्ञेयाः।

जैमिनेश्च शिष्यकृता बहवो भेदाः प्रतीयन्ते.

तद्यथा—उत्पलः कारिकां वेत्ति, तन्त्रं वेत्ति प्रभाकरः। वामनस्तूभयं वेत्ति, न किञ्चिदपि रेवणः ॥ १ ॥

अपरेऽपि बहूदक, कुटीचर, हंस, परमहंस, भाट्ट, प्राभाकरप्रमुखा बहवोऽन्तर्भेदाः। अपरेषामपि दर्शनानां तत्त्वदेवता प्रमाणादिभिन्नतया बहवो विभेदाः प्रादुर्भवन्ति, तथापि परमार्थतस्तेषामेष्वेवान्तर्भावात्षडेवेति, अथ तेषामेव दर्शनानां नामान्याह—

बौद्धं नैयायिकं सांख्यं, जैनं वैशेषिकं तथा। जैमिनीयञ्च नामानि, दर्शनानाममून्यहो ॥ १ ॥

अस्याः कारिकाया व्याख्या—बौद्धमिति बुद्धो देवता अस्येति बौद्धं सौगतदर्शनम्। न्यायः प्रमाणमार्गस्तस्मादनपेतं

नैयायिकामिति पाशुपतदर्शनम् । सांख्यमिति कापिलदर्शनम् । कपिलेन कृतमित्यादिपुरुषनिमित्तेयं संज्ञा । जैनमिति जिनो देवताऽस्येति जैनमार्हतम् । वैशेषिकं काणाददर्शनम् । दर्शनदेवतादिसाम्येऽपि नैयायिकेभ्यो द्रव्यगुणादिसामग्र्या विशिष्टत्वाद्वैशेषिकम् । जैमिनीयं जैमिनिऋषिकृतं भाट्टदर्शनम् । चकारः समुच्चयदर्शकः, एवं तावत् षड्दर्शननामानि ज्ञेयानि । तेषां प्रथमंबौद्धमतंसंक्षेपतोव्याचष्टे–तत्रबौद्धमतेताव–द्देवता सुगतः किल । चतुर्णामार्यसत्यानां, दुःखादीनां प्ररूपकः ॥ १ ॥ बौद्धमते दुःखसमुदयमार्गनिरोधलक्षणानां चतुर्णामार्यसत्यनामधेयानां तत्त्वानां प्ररूपकः—कथयिता सुगतनामा देवोऽभिधीयते, तत्र विज्ञानं वेदना संज्ञा संस्कारो रूपमितिपञ्चस्कन्धात्मकं दुःखतत्त्वम् । विशिष्टं ज्ञानं विज्ञानं सर्वक्षणिकत्वज्ञानम्—

यदुक्तम्—यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा इमे, सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा च सा ॥
नाऽप्येकैवविधाऽन्यदापि परकृन्नैवक्रिया वा भवेद्, द्वेधाऽपि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति ॥१॥

वेदनेति–वेद्यत इति वेदना पूर्वभवपुण्यपापपरिणामबद्धा सुखदुःखानुभवरूपा, कश्चिद्भिक्षुर्भिक्षामटँश्चरणकण्टके लग्ने प्राह–
इत एकनवतौ कल्पे, शक्त्या मे पुरुषो हतः । तेन कर्मविपाकेन, पादे विद्धोऽस्मि भिक्षवः ! ॥ १ ॥

संज्ञानाम कोऽर्थः । सांसारिकं सर्वमिदं सचेतनाचेतनस्वरूपव्यवहरणं संज्ञामात्रं नाममात्रम् । नाऽत्र कलत्रपुत्रमित्रभ्रात्रादिसम्बन्धो घटपटादिपदार्थसार्थो वा पारमार्थिकः । तथा च तत्सूत्रम् “ तानीमानि भिक्षवः संज्ञामात्रं व्यवहारमात्रं कल्पनामात्रं संवृतिमात्रमतीतोऽध्वाऽनागतोऽध्वा सहेतुको विनाश आकाशं पुद्गला ” इति । संस्कार इति–इह परभवविषयसन्तानपदार्थनिरीक्षणप्रबुद्धपूर्वभवानुरूपसंस्कारस्य प्रमातुः स एवाऽयं देवदत्तः सैवेयं दीपकलिकेत्याद्याकारेण ज्ञानोत्पत्तिःसंस्कारः।

यदाह—यस्मिन्नेव हि सन्ताने, आहिता कर्मवासना । फलं तत्रैव संधत्ते, कार्पासे रक्तता यथा ॥ १ ॥

रूपमिति-रगरगायमाणपरमाणुप्रचयः । बौद्धमते हि स्थूलरूपस्य जगति विवर्त्तमानपदार्थजातस्य तद्दर्शनोपपत्तिभिर्निराक्रियमाणत्वात् परमाणव एव तात्त्विकाः ॥ दुःखनामधेयमार्यसत्यं पञ्चधा निरूप्याथसमुदयतत्त्वस्वरूपमाह—

समुदेति यतो लोके, रागादीनां गणोऽखिलः । आत्मात्मीयस्वभावाख्यः, समुदयः स संमतः ॥ १ ॥

यतो यस्माल्लोकेऽयमात्मीयोऽयञ्च परकीय इति स्वभावात्मको रागद्वेषमोहानामखिलो गणः समुदेति स समुदयः संमतः । अथ तृतीयचतुर्थतत्त्वे प्रपञ्चयन्नाह—

क्षणिकाः सर्वसंस्कारा-इत्येवं वासना तु या । स मार्ग इति विज्ञेयो-निरोधो मोक्ष उच्यते ॥ १ ॥

सर्वेषां विश्वत्रयविवरवर्त्तमानानां घटपटस्तम्भाम्भोरुहादीनां द्वितीयादिक्षणेषु स एवायं सएवायमित्याद्युल्लेखेन ये संस्कारा ज्ञानसन्ताना उत्पद्यन्ते ते विचारगोचरगताः क्षणिकाः इत्येवंविधा या वासना स मार्ग इति तत्त्वं विज्ञेयम् । मोक्षोऽपवर्गः सर्वक्षणिकत्वसर्वनैरात्म्यवासनारूपो निरोधो नामार्यसत्यमभिधीयते । अथ तत्त्वानि व्याख्याय तत्संलग्नान्येवायतनान्याह—

पञ्चेन्द्रियाणि शब्दाद्या-विषयाः पञ्च मानसम् । धर्मायतनमेतानि, द्वादशायतनानि च ॥ १ ॥

स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि पञ्चेन्द्रियाणि, शब्दरूपरसस्पर्शगन्धरूपाः पञ्च विषयाः, मानसं चित्तं, धर्मायतनमिति धर्मप्रधानमायतनं चैत्यस्थानमिति । एतानि द्वादशसंख्यान्यायतनानि ज्ञेयानि । तत्त्वानि व्याख्यायाधुना प्रमाणमाह—

प्रमाणे द्वे च विज्ञेये, तथा सौगतदर्शने । प्रत्यक्षमनुमानञ्च, सम्यग्ज्ञानं द्विधा यतः ॥ १ ॥

बौद्धमते प्रत्यक्षमनुमानश्चेति द्वे प्रमाणे अनुमीयत इत्यनुमानं लैङ्गिकं ज्ञानम् । यतः सम्यग्ज्ञानं निश्चितावबोधो द्विधा द्विप्रकारः । सम्यग्ग्रहणं मिथ्याज्ञाननिराकरणार्थम् । इति बौद्धमतं संक्षेपमात्रमभिधाय नैयायिकमतं व्याचष्टे.

अक्षपादमते देवः, सृष्टिसंहारकृच्छिवः । विभुर्नित्यैकसर्वज्ञो–नित्यबुद्धिसमाश्रयः ॥ १ ॥

अक्षपादा नैयायिकास्तेषां मते शासने सृष्टिसंहारकारको दर्शनाधिष्ठायकः शिवो महेश्वरो देवः संमतः । तथाहि–अस्य प्रत्यक्षतयोपलक्ष्यमाणस्य चराचरस्वरूपस्य जगतः कश्चिदनिर्वचनीयमाहात्म्यः पुरुषः सृष्टा ज्ञेयः । केवलसृष्टौ च निरन्तरोत्पद्यमानापारप्राणिगणस्य भुवनत्रयेऽप्यमातृत्वमिति संहारकर्त्ताऽपि कश्चिदभ्युपगन्तव्यः । स च विभुः सर्वव्यापकः, एकनियतस्थानवृत्तित्वे ह्यनियतप्रदेशस्थितानां पदार्थानां प्रतिनियतयथावन्निर्माणाऽनुपपत्तेः । नह्येकस्थानास्थितः कुम्भकारोऽपि दूरदूरतरघटघटनायां व्याप्रियते तस्माद्विभुर्भगवान् । तथा नित्यः एकश्च, यतो नित्योऽत एवैकः । अप्रच्युताऽनुत्पन्नस्थिरैकरूपः । भगवतोह्यनित्यत्वे पराधीनोत्पत्तिसव्यपेक्षतया कृतकत्वप्राप्तिः स्यात् । स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यत इति । सर्वज्ञश्च सन् सकलदेहिनां संमीलितसमुचितकारणकलापानुरूपपारिमाण्डल्यानुसारेण कार्यवस्तुनिर्मिमाणः स्वार्जितपुण्यपापानुमानेन च स्वर्गनरकयोः सुखदुःखोपभोगं ददानः केषां नाभिमतः ।

तथा चोक्तम् " ईश्वरप्रेरितो गच्छे–त्स्वर्गं वा श्वभ्रमेव वा । अन्यो जन्तुरनीशोऽय–मात्मनः सुखदुःखयोः ॥ १ ॥

पुनः नित्यबुद्धिसमाश्रयः शाश्वतबुद्धिस्थानम् । क्षणिकबुद्धिमतो हि पराधीनकार्यापेक्षितया मुख्यकर्तृत्वाभावादनीश्वरत्वप्रसक्तिरिति ईदृग्गुणविशिष्टः शिवो नैयायिकमतेऽभ्युपगन्तव्यः । अथ तत्त्वप्ररूपणामाह—

तत्त्वानि षोडशाऽमुत्र, प्रमाणादीनि तद्यथा । प्रमाणञ्च प्रमेयञ्च, संशयश्च प्रयोजनम् ॥ १ ॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ । वादो जल्पो वितण्डा च, हेत्वाभासाश्छलानि च ॥ २ ॥
जातयो निग्रहस्थाना—न्येषामेवं प्ररूपणा । अथोपलब्धिहेतुः स्या—त्प्रमाणं तच्चतुर्विधम् ॥ ३ ॥

अत्र अमुष्मिन्प्रस्तुते नैयायिकमते प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-जाति निग्रहस्थानाना तत्त्वज्ञानान्निःश्रेयससिद्धिरिति षोडश पदार्थाः। तत्रार्थोपलब्धिकारणं प्रमाणं प्रत्यक्षानुमानोपमानशाब्दि-कभेदाच्चतुर्विधं ज्ञेयम् । तल्लक्षणानि त्वन्यस्माद् बुद्धिमद्भिरवगन्तव्यानि अथ प्रमेयलक्षणमाह—"प्रमेयं त्वात्मदेहार्थबुद्धीन्द्रिय-सुखादिचे—" ति प्रमाणग्राह्योऽर्थः प्रमेयम्। तु पुनरर्थे आत्मा च देहश्चेति द्वन्द्वः। आदिशब्देन शेषाणामपि षण्णां प्रमेयार्थानां संग्रहः । तच्च नैयायिकसूत्रे आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदेन द्वादशविधम् । तत्र सचेतन-त्वकर्त्तृत्वसर्वगतत्वादिधर्मैरात्मा प्रतीयते। एवं देहादयोऽपि प्रमेयतया ज्ञेयाः। अत्र तु ग्रन्थविस्तरभयान्न मयैतत्प्रपञ्चितम्, इतरग्रन्थेभ्योऽपि सुज्ञेयत्वाच्च । अथ संशयादिस्वरूपमाह—

किमेतदितिसन्दिग्धः, प्रत्ययः संशयो मतः । प्रवर्त्तते यदर्थित्वा—त्तत्तु साध्यं प्रयोजनम् ॥ १ ॥

एतत्किं स्थाणुर्वा पुरुषो वेति, यः संदिग्धः प्रत्ययः स संशयो नाम तत्त्वविशेषो मतः, अर्थित्वात्प्राणी साध्यं कार्यं प्रति-प्रवर्त्तमानो भवति, न हि निष्फलः कार्यारम्भः । एवं यत्प्रवर्त्तनं तत्प्रयोजनम् ।

दृष्टान्तस्तु भवेदेष—विवादविषयो न यः। सिद्धान्तस्तु चतुर्भेदः, सर्वतन्त्रादिभेदतः ॥ १ ॥

यस्मिन्नुपन्यस्ते वचने यो विवादविषयो न भवति स दृष्टान्तो ज्ञेयः, तावच्चाऽन्वयव्यतिरेकयुक्तोऽर्थःस्खलति यावन्न स्पष्टं दृष्टान्तोपष्टम्भः । उक्तश्च–तावदेव चलत्यर्थो–मन्तुर्गोचरमागतः । यावन्नोत्तम्भने नैव, दृष्टान्तेनावलम्ब्यते ॥ १ ॥

सिद्धान्तः पुनः सर्वतन्त्रादिभेदतः प्रथमः सर्वतन्त्रसिद्धान्तो द्वितीयः प्रतितन्त्रसिद्धान्तस्तृतीयोऽधिकरणसिद्धान्तश्चतुर्थोऽभ्युपगमसिद्धान्त इति सिद्धान्तस्वरूपन्त्वत्र विस्तरभयान्न लिख्यते । प्रतिज्ञा हेतुर्दृष्टान्त उपनयो निगमनश्चेति पञ्चावयवाः । तत्र प्रतिज्ञा पक्षः, अग्निमानयं पर्वत इत्यादि । हेतुर्लिङ्गवचनम्, धूमवत्त्वादित्यादि । दृष्टान्त उदाहरणवचनं, यो यो धूमवान् स स वह्निमान् यथा महानसप्रदेश इत्यादि । उपनयो हेतोरुपसंहारकं वचनं धूमवांश्चायं गिरिरित्यादि । निगमनं हेतूपदेशेन पुनः साध्यधर्मोपसंहरणं, तस्माद्वन्हिमानित्यादि, इतिपञ्चावयवस्वरूपनिरूपणम् । तर्कः संशयोपरमो भवेत् । यथा दूराद्-दृग्गोचरे स्पष्टप्रतिभासाभावात् किमयं स्थाणुर्वा पुरुषो वेतिसंशयस्तस्योपरमेऽभावे सति तर्को नाम तत्त्वं भवेत् । पूर्वोक्तलक्षणाभ्यां सन्देहतर्काभ्यामूर्ध्वं स्थाणुरेवायं पुरुष एवायमिति प्रतीतिविषयो निर्णयनामा तत्त्वविशेषो ज्ञातव्यः ।

वादतत्त्वमाह—आचार्यशिष्ययोः पक्ष–प्रतिपक्षपरिग्रहात् । यः कथाभ्यासहेतुः स्या-दसौ वाद उदाहृतः ॥ १ ॥

अथ तद्विशेषमाह—विजिगीषुकथा या तु, च्छलजात्यादिदूषणम् । स जल्पः सा वितण्डा तु, या प्रतिपक्षवर्जिता ॥ २ ॥

हेत्वाभासादिस्वरूपमाह—हेत्वाभासा असिद्धाद्या–श्छलं कूपो नवोदकः । जातयो दूषणाभासाः, पक्षादिर्दूष्यते न यैः ॥३॥

असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः पञ्च हेत्वाभासा ज्ञेयाः । तत्र पक्षे धर्मत्वं यस्य नास्ति सोऽसिद्धः ।

विपक्षे सन् सपक्षे चासन् विरुद्धः । पक्षत्रयवृत्तिरनैकान्तिकः । प्रत्यक्षानुमानागमविरुद्धपक्षवृत्तिः कालात्ययापदिष्टः ।

विशेषाग्रहणे हेतुत्वेन प्रयुज्यमानः प्रकरणसमो हेत्वाभासः । उदाहरणानि स्वयमभ्यूह्यानि । छलं, कूपो नवोदक इति, परोपन्यस्तवादे स्वाऽभिमतार्थान्तरकल्पनया वचनविघातश्छलम् । कथमित्याह—वादिना कूपो नवोदक इति कथायां प्रत्यग्रार्थवाचकतया नवशब्दप्रयोगे छलवादी नवसंख्यामारोप्य दूषयति । कुत एकएव कूपो नवसंख्योदक इतिवाक्छलम् । प्रस्तावागतत्वेन शेषच्छलद्वयमप्याह—संभावनयाऽतिप्रसंगिनोऽपि सामान्यस्य हेतुत्वारोपणेन तन्निषेधः सामान्यच्छलम् । यथा अहो नु खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इति ब्राह्मणस्तुतिप्रसंगे कश्चिद्वदति संभवति ब्राह्मणे विद्याचरणसंपदिति । तच्छललवादी ब्राह्मणत्वस्य हेतुत्वमारोप्य निराकुर्वन्नभियुङ्क्ते, यदि ब्राह्मणे विद्याचरणसंपद्भवति चेद् व्रात्येऽपि सा भवेद् व्रात्योऽपि ब्राह्मण एवेति । औपचारिके प्रयोगे मुख्यप्रतिषेधेन प्रत्यवस्थानमुपचारच्छलम् । यथा मञ्चाः क्रोशन्तीत्युक्ते परः प्रत्यवतिष्ठते, कथमचेतना मञ्चाः क्रोशन्तीति च्छलत्रयस्वरूपं ज्ञेयमिति । दूषणाभासा जातयः । दूषणवदाभासन्त इति दूषणाभासास्ताश्चतुर्विंशतिभेदाःतद्विस्तारस्वरूपन्तु विचारणीयं ग्रन्थान्तरेभ्यः ।

अथनिग्रहस्थानमाह—निग्रहस्थानमाख्यातं, परो येन निगृह्यते । प्रतिज्ञाहानिसंन्यासविरोधादिविभेदवत् ॥ १ ॥

येन केनचिद्रूपेण परो विपक्षो निगृह्यते—परवादी वचननिग्रहे पात्यते तन्निग्रहस्थानमाख्यातम् । कतिचिद्भेदान्नामतो निर्दिशन्नाह—प्रतिज्ञाहानिसंन्यासविरोधाः प्रतिज्ञाया हानिः संन्यासो विरोधः । आदिशब्देन शेषा अपि भेदास्तद्ग्रन्थाज्ज्ञेयाः ।

इदानीं सांख्याभिमतभावानां समासः कथ्यते—

एतेषां या समावस्था, सा प्रकृतिः किलोच्यते । प्रधानाऽव्यक्तशब्दाभ्यां, वाच्या नित्यस्वरूपिका ॥ १ ॥

एतेषां सांख्यानां प्रकृतिः, प्रीत्यप्रीतिविषादात्मकानां लाघवोपष्टम्भगौरवधर्माणां सत्त्वरजस्तमसां त्रयाणामपि गुणानां या साम्यावस्था-समतयाऽवस्थितिः सा किल प्रकृतिरुच्यते। शास्त्रे प्रकृतिः प्रधानमव्यक्तश्चेति पर्याया न तु तत्त्वान्तरमित्यर्थः। तथा नित्यस्वरूपिका–शाश्वतभावतया प्रसिद्धा उच्यते च नित्या नानापुरुषाश्रया च प्रकृतिस्तद्दर्शनेन । यदाह—

तस्मान्न बध्यतेऽद्धा, न मुच्यते नाऽपि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिरिति ॥ १ ॥

अथ दर्शनस्वरूपमाह–सांख्या निरीश्वराः केचित्, केचिदीश्वरदेवताः । सर्वेषामपि तेषां स्या–त्तत्त्वानां पञ्चविंशतिः ॥१॥

केचित्सांख्या निरीश्वरा ईश्वरं देवतया न मन्यन्ते केवलाध्यात्मवेदिनः । केचित्पुनरीश्वरदेवताः महेश्वरं स्वशासनाधिष्ठितारमाहुः । तेषां केवलाध्यात्मवादिनामीश्वरदेवतानां च सर्वेषां सांख्यमतानुसारिणां शासने तत्त्वानां पञ्चविंशतिः स्यात् । तत्त्वं हि मोक्षसाधकं बीजमिति सर्ववादिसंवादः । यदुक्तम्—

पञ्चविंशतितत्त्वज्ञो–यत्र तत्राश्रमे रतः । जटी मुण्डी शिखी वाऽपि, मुच्यते नाऽत्र संशयः ॥ १ ॥

तन्मते पञ्चविंशतिस्तत्त्वानि–तद्यथा–सत्त्वं रजस्तमश्चेति, ज्ञेयं तावद्गुणत्रयम् । प्रसादतोषदैन्यादि-कार्यलिङ्गं क्रमेण तत् ॥१॥

सत्त्वरजस्तमश्चेति गुणत्रयं ज्ञेयम् । अनुक्रमेण प्रसादतोषदैन्यादि कार्यलिङ्गं गुणत्रयेण जन्यते । सत्त्वगुणेन प्रसादकार्यलिङ्गं मुखनयनादिप्रसन्नता सत्त्वगुणेन स्यादित्यर्थः । रजोगुणेन तोषः स चानन्दपर्यायः, तल्लिङ्गानि स्फूर्त्त्यादीनि रजसाऽभिव्यज्यन्ते इत्यर्थः । तमोगुणेन च दैन्यं जायते । हा दैव ! नष्टोऽस्मि वञ्चितोऽस्मीत्यादि वदनविच्छायतानयनसंकोचादिव्यङ्ग्यं

दैन्यं तमोगुणलिङ्गमिति । दैन्यादीत्यादिशब्देन दुःखत्रयमाक्षिप्यते । तद्यथा—आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति । तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च । शारीरं वातपित्तश्लेष्मणांवैषम्यनिमित्तम् । मानसं कामक्रोधलोभमोहेर्ष्याविषयाऽदर्शननिबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखं द्वेधा, आधिभौतिकमाधिदैविकञ्चेति । तत्राधिभौतिकं मानुषपशुमृगपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकं यक्षराक्षसग्रहाद्यावेशहेतुकमिति । अनेन दुःखत्रयेणाभिहतस्य प्राणिनस्तत्त्वजिज्ञासोत्पद्यतेऽतस्तान्येव तत्त्वान्याह—

ततः सञ्जायते बुद्धि-र्महानिति यकोच्यते । अहङ्कारस्ततोऽपि स्या-त्तस्मात्षोडशको गणः ॥ १ ॥

ततो गुणत्रयाभिघाताद् बुद्धिः संजायते, यका-या बुद्धिर्महानिति कथ्यते । एवमेतन्नान्यथा, गौरयं नाश्वः, स्थाणुरेष नायं पुरुष इत्येवं निश्चयस्तेन पदार्थप्रतिपत्तिहेतुर्योऽध्यवसायः सा बुद्धिरिति । तस्यास्त्वष्टौ रूपाणि तद्दर्शनप्रसिद्धानि । यदाह—धर्मज्ञानवैराग्यैश्वर्यरूपाणि चत्वारि सात्त्विकानि, अधर्मादीनि तु तत्प्रतिपक्षभूतानि चत्वारि तामसानीत्यष्टौ । ततो बुद्धेरहङ्कारः स चाभिमानात्मको यथा अहंशृणोमि, अहं पश्यामि, अहं स्वादयामि, अहं स्पृशामि, अहं जिघ्रामि, अहं स्वामी, अहमीश्वरः, असौ मया हतः, अहं त्वां हनिष्यामीत्यादिप्रत्ययरूपस्तस्मादहङ्कारात्षोडशको गणो जायते । पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, एकादशं मनः, पञ्च भूतानीति षोडशको गणः ।

तमेव गणमाह—स्पर्शनं रसनं घ्राणं, चक्षुः श्रोत्रञ्च पञ्चमम् । पञ्च बुद्धीन्द्रियाण्याहु-स्तथा कर्मेन्द्रियाणि च ॥ १॥

पायूपस्थवचःपाणि-पादाख्यानि मनस्तथा । अन्यानि पञ्चरूपाणि, तन्मात्राणीति षोडश ॥ २ ॥ युग्मम् ॥

प्रकृतिविस्तरमुपसंहरन्नाह—एवं चतुर्विंशतितत्त्वरूपं, निवेदितं सांख्यमते प्रधानम् ।
अन्यस्त्वकर्त्ता विगुणस्तु भोक्ता, तत्त्वं पुमान्नित्यचिदभ्युपेतः ॥ ३ ॥

एवं पूर्वोक्तप्रकारेण सांख्यमते चतुर्विंशतितत्त्वस्वरूपं प्रधानं निवेदितम् । प्रकृतिर्महानहङ्कारश्चेतित्रयम् । पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनस्त्वेकं, पञ्च तन्मात्राणि, पञ्च भूतानि चेति चतुर्विंशतिस्तत्त्वानि। पञ्चविंशतितमं तत्त्वमाह, अन्यस्त्विति—अन्योऽकर्त्ता पुरुषः, प्रकृतेरेव संसरणादिधर्मत्वात् । यदुक्तम्—प्रकृतिः करोति, प्रकृतिर्बध्यते, प्रकृतिर्मुच्यते, पुरुषोऽबद्धः, पुरुषो मुक्तः, पुरुषस्तु—अमूर्त्तश्चेतनो भोगी, नित्यः सर्वगतोऽक्रियः । अकर्त्ता निर्गुणः सूक्ष्मः, आत्मा कापिलदर्शने ॥ १ ॥

पुरुषगुणानाह—सत्त्वरजस्तमोरूपगुणत्रयविकलः । तथा भोक्ता भोगी, एवं प्रकारः पुमान् पञ्चविंशतितमं तत्त्वं ज्ञेयम् अथ मोक्षप्रमाणञ्चाह—प्रकृतिवियोगो मोक्षः, पुरुषस्यैवान्तरज्ञानात् । मानत्रितयञ्च भवेत्, प्रत्यक्षं लैङ्गिकं शाब्दम् ॥ १ ॥

पुरुषस्यात्मनः आन्तरज्ञानात्रिविधबन्धनविच्छेदात्प्रकृतिवियोगो यः स मोक्षः, प्रकृत्या सह वियोगे विरहे सति पुरुषस्यापवर्ग इति । आन्तरज्ञानञ्च बन्धविच्छेदाद्भवति । बन्धश्च प्राकृतिकवैकृतिकदाक्षिणभेदात्रिविधः । तद्यथा—प्रकृतावात्मज्ञानाद् ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः । ये विकारानेव भूतेन्द्रियाऽहङ्कारबुद्धीः पुरुषबुध्योपासते तेषां वैकारिकः । जनभोजनदानादिकमिष्टापूर्त्तं तस्मिन् दाक्षिणः, पुरुषतत्त्वाऽनभिज्ञो हीष्टकारी कामोपहतमना बध्यत इति ।

इष्टापूर्त्तं मन्यमाना वरिष्ठं, नान्यच्छ्रेयो येऽभिनन्दन्ति मूढाः । नाकस्य पृष्ठे ते सुकृतेन भूत्वा, इमं लोकं हीनतरं वा विशन्ति ॥१॥

प्रत्यक्षं लैङ्गिकं शाब्दश्चेति प्रमाणत्रयं ज्ञेयम् । प्रत्यक्षमिन्द्रियोपलभ्यं, लैङ्गिकमनुमानगम्यं, शाब्दश्चागमस्वरूपमिति कापिलमतसंक्षेपः । अपरदर्शनानि—पुराणं मानवो धर्मः, साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि, नहन्तव्यानि हेतुभिः ॥ १ ॥ इत्याद्युक्त्वा न विचारपदवीमाद्रियन्ते । जैनमतदर्शनं यथा—अस्ति वक्तव्यता काचि—त्तेनेदं न विचार्यते । निर्दोषं काञ्चनं चेत्स्यात्परीक्षाया विभेति किम् ॥ १ ॥ इति युक्तियुक्तविचारपरम्परापरिचयपथपथिकत्वेन जैनो युक्तिमार्गमेवावगाहते । न च पारम्पर्यादिपक्षपातेन युक्तिमुल्लङ्घयति परमार्हतः । उक्तञ्च—पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥ १ ॥ तदेवाह—जिनेन्द्रो देवता तत्र, रागद्वेषविवर्जितः । हतमोहमहामल्लः, केवलज्ञानदर्शनः ॥ २ ॥ सुरासुरेन्द्रसंपूज्यः, सद्भूतार्थोपदेशकः । कृत्स्नकर्मक्षयं कृत्वा, संप्राप्तः परमं पदम् ॥ ३ ॥ अर्हंश्च भगवान् कर्मक्षयपूर्वमेव मोक्षपदं प्राप्त इति । अथ तत्त्वान्याह—जीवाजीवौ तथा पुण्यं, पापमाश्रवसंवरौ । बन्धश्च निर्जरामोक्षौ, नव तत्त्वानि तन्मते ॥ १ ॥ जीवाजीवपुण्यतत्त्वमेव सलक्षणमाह—तत्र ज्ञानादि धर्मेभ्यो—भिन्नाऽभिन्नोविवृत्तिमान् । कर्त्ता शुभाऽशुभं कर्म, भोक्ता कर्मफलस्य च ॥ १ ॥ चैतन्यलक्षणो जीवो—यश्चैतद्वैपरीत्यवान् । अजीवः स समाख्यातः, पुण्यं सत्कर्मपुद्गलाः ॥२॥ शेषतत्त्वान्याह—पापं तद्विपरीतन्तु, मिथ्यात्वाद्यास्तु हेतवः । यस्तैर्बन्धः स विज्ञेय—आश्रवो जिनशासने ॥ ३ ॥ संवरस्तन्निरोधस्तु, बन्धो जीवस्य कर्मणः । अन्योऽन्यानुगमात्कर्म—सम्बन्धो यो द्वयोरपि ॥ ४ ॥ बद्धस्य कर्मणः शाटो—यस्तु सा निर्जरा मता । आत्यन्तिको वियोगस्तु, देहादेर्मोक्ष उच्यते ॥ ५ ॥ इत्थं नामोद्देशेन तत्त्वानि सङ्कीर्त्य फलपूर्वकमुपसंहारमाह—एतानि तत्र तत्त्वानि, यः श्रद्धत्ते स्थिराशयः । सम्यक्त्वज्ञानयोगेन, तस्य चारित्रयोग्यता ॥ १ ॥

तत्फलं दर्शयन्नाह–तथा भव्यत्वपाकेन, यस्यैतत्त्रितयं भवेत् । सम्यग्ज्ञानक्रियायोगा–ज्जायते मोक्षभाजनम् ॥ २ ॥

अथ प्रमाणे आह–प्रत्यक्षञ्च परोक्षञ्च, द्वे प्रमाणे तथा मते । अनन्तधर्मकं वस्तु, प्रमाणविषयस्त्विह ॥ ३ ॥

लक्ष्यनिर्देशं कृत्वा लक्षणमाह–अपरोक्षतयाऽर्थस्य, ग्राहकं ज्ञानमीदृशम् । प्रत्यक्षमितरज्ज्ञेयं, परोक्षं ग्रहणेक्षया ॥ ४ ॥

एवं संक्षेपतो जैनमतं पूर्वापरविघातशून्यं स्याद्वादात्मकं प्रदर्श्य वैशेषिकमतस्य देवतादिसाम्येन नैयायिकेभ्यो ये विशेषं न मन्यन्ते तान्बोधयन्नाह—देवताविषये भेदो–नास्ति नैयायिकैः समम् । वैशेषिकाणां तत्त्वेषु, विद्यतेऽसौ प्रकाश्यते ॥ १ ॥

तान्येव तत्त्वान्याह–द्रव्यं गुणास्तथा कर्म, सामान्यञ्च चतुर्थकम् । विशेषसमवायौ च, तत्त्वषट्कं हि तन्मते ॥ २ ॥

तत्र पृथ्व्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि, रूपरसगन्धस्पर्शादयश्चतुर्विंशतिर्गुणाः। उत्क्षेपणापक्षेपणा-कुञ्चनप्रसारणगमनानीति पञ्चविधं कर्म। सामान्यंद्विविधंपरमपरञ्चेति, परं सत्ताख्यमपरञ्चद्रव्यत्वादि, निश्चयतो नित्यद्रव्यवृत्तिर-न्त्यो विशेषः। अथ प्रमाणव्यक्तिमाह–प्रमाणञ्च द्विधाऽमीषां, प्रत्यक्षं लैङ्गिकं तथा। वैशेषिकमतस्यैवं, संक्षेपः परिकीर्त्तितः ॥१॥

इतिश्री चन्द्रराजचरित्रे प्रथमोल्लासे सप्तमः सर्गः ॥ ७ ॥

अथ षष्ठदर्शनवादी मीमांसकः प्राह–जैमिनीयाःपुनःप्राहुः, सर्वज्ञादिविशेषणः। देवोन विद्यतेकोऽपि, यस्यमानं वचो भवेत् ॥१॥ जैमिनिशिष्याश्चैके उत्तरमीमांसावादिनः, एके पूर्वमीमांसावादिनः। तत्रोत्तरमीमांसावादिनो वेदान्तिनस्ते हि केवलब्रह्मा-ऽद्वैतवादसाधनव्यसनिनः शब्दार्थखण्डनाय युक्तीः खेटयन्तो निर्वाच्यतत्त्वे व्यवतिष्ठन्ते–

यदाहुः—अन्तर्भावितसत्त्वं चेत्, कारणं सदसत्ततः । नान्तर्भावितसत्त्वं चेत्, कारणं तदसत्ततः ॥ १ ॥

यथा यथा विचार्यन्ते, विशीर्यन्ते तथा तथा । यद्येतत्स्वयमर्थेभ्यो—रोचते तत्र के वयम् ॥ २ ॥

एकं ब्रह्मास्त्रमादाय, नान्यं गणयतः क्वचित् । आस्ते न वीरधीरस्य, भङ्गः सङ्गरकेलिषु ॥ ३ ॥

"एवं वादिप्रतिवादिनोः," समस्तलोकशास्त्रैक—मत्यमाश्रित्य नृत्यतोः । का तदस्तु गतिस्तद्व—द्वस्तुधीव्यवहारयोः ॥१॥

उपपादयितुं तैस्तै—र्मतैराशङ्कनीययोः । अनिर्वक्तव्यतावाद—पादसेवागतिस्तयोः ॥ २ ॥

इत्यादिप्रलयकालाऽनिलक्षुभितचरमसलिलराशिकल्लोलमालाऽनुकारिणः परब्रह्माऽद्वैतसाधकहेतूपन्यासाः प्रोच्छलन्तश्चतुरचमत्कारं जनयन्तः क्व पर्यवस्यन्ति, तास्तु युक्तयः सूत्रकृताऽनुल्लिङ्गितत्वाद् ग्रन्थविस्तरभयाच्च नेह प्रपञ्च्यन्ते । अभियुक्तैस्तु खण्डनमहातर्कादवसेयाः । पूर्वमीमांसावादिनश्च प्राभाकरा भाट्टाश्चेति द्विप्रकाराः, क्रमेण पञ्चषट्प्रमाणप्ररूपकाः । ते पुनः पूर्वमीमांसकाः कथयन्ति सर्वज्ञादिविशेषणः कोऽपि देवो न विद्यते—यस्य वचनं प्रमाणं भवेत् । यदाह कुमारिलभट्टः—

अथाऽपि वेदहेतुत्वाद्, ब्रह्मविष्णुमहेश्वराः । कामं भवन्तु सर्वज्ञाः, सार्वज्ञ्यं मानुषस्य किम् ॥ १ ॥

प्रयोगश्चाऽत्र, नास्ति सर्वज्ञः कश्चित्, सर्वज्ञादिगोचरातिक्रान्तत्वात्, शशशृङ्गवत् । अथ कथं यथाऽवस्थिततत्त्वनिर्णय इत्याह—तस्मादतीन्द्रियार्थानां, साक्षाद्द्रष्टुरभावतः । नित्येभ्यो वेदवाक्येभ्यो—यथाऽर्थत्वविनिश्चयः ॥ १ ॥ अपौरुषेयत्वं वेदानां ते मन्यन्ते—अपाणिपादो ह्यमनोगृहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं न च तस्य वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम् ॥ १ ॥ अथ यथाऽवस्थितार्थव्यवस्थापकं तत्त्वोपदेशमाह—अत एव पुरा कार्यो—वेदपाठः प्रयत्नतः । ततो

६

धर्मस्य जिज्ञासा, कर्त्तव्या धर्मसाधनी ॥ १ ॥ वेदोक्तधर्मोपदेशमेवाह—नोदनालक्षणो धर्मो, नोदना तु क्रियां प्रति । प्रवर्त्तकं वचः प्राहुः, स्वःकामोऽग्निं यजेद्यथा ॥ १ ॥

वेदोक्तस्वर्गादिसाधकाम्नायस्य क्रियाप्रवर्त्तकं वचनं नोदनामाहुरित्यर्थः । शिष्यानुकम्पया तत्सूत्रेणैव दृष्टान्तयन्नाह—यदा स्वर्गाभिलाषी जनोऽग्निकार्यं कुर्यात् । यथाहुस्तत्सूत्रम्—अग्निहोत्रं जुहुयात्स्वर्गकाम इति । प्रमाणान्याह—प्रत्यक्षमनुमानञ्च, शब्दश्चोपमया सह । अर्थापत्तिरभावश्च, षट्प्रमाणानि जैमिनेः ॥ १ ॥ प्रत्यक्षादिप्रमाणानां स्पष्टत्वादर्थापत्तिलक्षणमाह—दृष्टार्थाऽनुपपत्त्या तु, कस्याऽप्यर्थस्य कल्पना । क्रियते यद्बलेनासा-वर्थापत्तिरुदाहृता ॥ १ ॥ यथा पीनो देवदत्तो दिवा न भुङ्क्ते, पीनत्वस्याऽन्यथाऽनुपपत्त्या रात्राववश्यं भुङ्क्त इत्यर्थ इत्यत्र दृष्टंविना भोजनं पीनत्वं दुर्घटं, दिवा च न भुङ्क्तेऽतो रात्राववश्यमदृष्टं भोजनं ज्ञापयतीत्यर्थापत्तिः प्रमाणम् । अथाऽभावप्रमाणमाह—प्रमाणपञ्चकं यत्र, वस्तुरूपे न जायते । वस्तुसत्तावबोधार्थं, तत्राऽभावप्रमाणता ॥ १ ॥ उपसंहरन्नाह—जैमिनीयमतस्यापि, संक्षेपोऽयं निवेदितः । एवमास्तिकवादानां, कृतं संक्षेपकीर्त्तनम् ॥ १ ॥ विशेष्यान्तरमाह—नैयायिकमतादन्ये, भेदं वैशेषिकैः सह । न मन्यन्ते मते तेषां, पञ्चैवास्तिकवादिनः ॥ १ ॥ दर्शनानां षट्संख्या जगति प्रसिद्धा कथं फलतीत्याह—षड्दर्शनसंख्या तु, पूर्यते तन्मते किल । लोकायतमतक्षेपात्-कथ्यते तेन तन्मतम् ॥ २ ॥ ये नैयायिकवैशेषिकयोरेकरूपत्वेनाऽभेदं मन्यमाना दर्शनपञ्चकमेवाचक्षते तन्मते षड्दर्शनसंख्या लोकायतमतक्षेपात् पूर्यते । तदेवाह—लोकायता वदन्त्येवं, नास्ति देवो न निर्वृतिः । धर्माऽधर्मौ न विद्येते, न फलं पुण्यपापयोः ॥ १ ॥ कथमित्याह—एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः । भद्रे ! वृकपदं पश्य, यद्व-

दन्ति बहुश्रुताः ॥ २ ॥

अयं लोकः संसार एतावानेव यावन्मात्रमिन्द्रियगोचरः । इन्द्रियं स्पर्शनरसनघ्राणचक्षुःश्रोत्रभेदात्पञ्चविधं तस्य गोचरो विषयः । पञ्चेन्द्रियव्यक्तीकृतमेव वस्त्वस्ति नाऽपरं किञ्चन ॥ अत्र लोकग्रहणाल्लोकस्थपदार्थसार्थस्य संग्रहः । तथा परे पुण्यपापसाध्यं स्वर्गनरकाद्याहुस्तदप्रमाणं प्रत्यक्षाभावादेव । अप्रत्यक्षमप्यस्तीति चेच्छशशृङ्गवन्ध्यास्तनन्धयादीनामपि भावोऽस्तु । तथाहि—स्पर्शनेन्द्रियेण तावन्मृदुकठोरशीतोष्णस्निग्धरूक्षादिभावा उपलभ्यन्ते । रसनेन्द्रियेण कटुकषायाम्लमधुरास्वादलेह्यचूष्यपेयादयो वेद्यन्ते । घ्राणेन्द्रियेण मृगमदमलयजघनसारागुरुप्रभृतिसुरभिवस्तुपरिमलोद्गारपरम्पराः परिचीयन्ते । चक्षुरिन्द्रियेण विविधघटपटादिस्वरूपं विलोक्यते । श्रोत्रेन्द्रियेण प्रथिष्ठगाथकपथपथिकप्रथ्यमानतालमानमूर्च्छनाप्रेङ्खोलनाखेलन्मधुरध्वनय आकर्ण्यन्ते । इति पञ्चप्रकारप्रत्यक्षदृष्टमेव वस्तुतत्त्वं प्रमाणपदवीमवगाहते । शेषप्रमाणानामनुभवाऽभावादेव निरस्तत्वात्, गगनकुसुमवत् । ये चास्पृष्टमनास्वादितमनाघ्रातमदृष्टमश्रुतमप्याद्रियमाणाः स्वर्गमोक्षादिसुखपिपासाऽनुबन्धचेतोवृत्तयो दुश्चरतरतपश्चरणादिकष्टपिष्टकया स्वजन्म क्षपयन्ति, तन्महासाहसं तेषामिति । किंचाऽप्रत्यक्षमप्यास्तितयाऽभ्युपगम्यते चेज्जगदपन्हुतमेवस्यात्, दरिद्रोहिस्वर्णराशिर्मेऽस्तीत्यनुध्याय हेलयैवदौःस्थ्यंदलयेत्, दासोऽपि स्वचेतसि स्वामितामवलम्ब्य किङ्करतां निराकुर्यादिति, न कोऽपि स्वाऽनभिमतमालिन्यमश्नुवीत । एवं न कश्चित्सेव्यसेवकभावो दरिद्रधनिभावो वा स्यात् । तथा च जगद्व्यवस्थाविलोपप्रसङ्ग इति सुस्थितमिन्द्रियगोचर एव प्रमाणम् । ये चाऽनुमानागमादिप्रामाण्यमनुमन्वानाः पुण्यपापव्यापारप्राप्यस्वर्गनरकादिसुखासुखं व्यवस्थापयन्तो वाचाटा न विरमन्ति,

तान्प्रति दृष्टान्तमाह—भद्रे ! वृकपदं पश्येति । यथा हि कश्चित्पुरुषो वृकपददर्शनसमुद्भूतकुतूहलां दयितां मन्थरतरप्रसमरसमीरणसमीकृतपांशुप्रकरस्वाङ्गुलिन्यासेन वृकपदाकारतां विधाय प्राह—हे भद्रे ? वृकपदं पश्य ! कोऽर्थः । यथा तस्या अविदितपरमार्थाया मुग्धाया विदग्धो वल्लभो वृकचरणनिरीक्षणाग्रहं कराङ्गुलिन्यासमात्रेण प्रलोभ्य पूरितवान् । एवममी अपि धर्मच्छद्मधूर्त्ताः परवञ्चनप्रवणा यत्किञ्चिदनुमानागमादिदाढर्यमादर्श्य व्यर्थं मुग्धजनान् स्वर्गादिप्राप्तिलभ्यभोगाऽभोगप्रलोभनया भक्ष्याऽभक्ष्यगम्याऽगम्यहेयोपादेयादिसङ्कटे पातयन्ति मुग्धधार्मिकान्ध्यं चोत्पादयन्ति । एवमेवार्थं प्रमाणकोटिमधिरोपयन्तश्च यद्बहुश्रुताः परमार्थवेदिनो वदन्ति वक्ष्यमाणपद्येनेत्यर्थः ।

पिब खाद च जातशोभने ? यदतीतं वरगात्रि ? तन्न ते । नहि भीरु ? गतं निवर्त्तते, समुदयमात्रमिदं कलेवरम् ॥ १ ॥
स्वजनादिसंयोगा हि तरुशिखरावलीलीनशकुनिगणवत् क्षणतो विनश्वरास्तस्मात्परलोकाऽनपेक्षया यथेच्छं पिब, खाद चेति वृत्तार्थः । चैतन्यमाह—किञ्च पृथ्वी जलं तेजो—वायुर्भूतचतुष्टयम् । चैतन्यभूमिरेतेषां, मानन्त्वक्षजमेव हि ॥ १ ॥ किञ्चेत्युपदर्शने, पृथ्वीप्रमुखभूतचतुष्टयमेतेषां चार्वाकाणां मते चैतन्यभूमिः चत्वार्यपि भूतानि संभूय सपिण्डं चैतन्यं जनयन्तीत्यर्थः । तु पुनर्मानं प्रमाणं हि निश्चितमक्षजमेव प्रत्यक्षमेवैकं प्रमाणमित्यर्थः । ननु भूतचतुष्टयसंयोगजदेहचैतन्योत्पत्तिः कथं प्रतीयतामित्याशङ्कयाह—पृथ्व्यादिभूतसंहत्यां, तथा देहादिसंभवः । मदशक्तिः सुराङ्गेभ्यो, यद्वत्तद्वात्स्थिताऽऽत्मता ॥ १ ॥

पृथ्व्यादिभूतानां संयोगे देहादिसंभवो जायते, दृष्टान्तमाह—यथा सुराङ्गेभ्यो गुडधातक्यादिभ्यो मद्याङ्गेभ्यो मदशक्तिरुन्मादकत्वं भवति, तथा भूतचतुष्टयसम्बन्धात् शरीर आत्मता स्थिता सचेतनत्वं जातमित्यर्थः । तस्माद् दृष्टपरित्यागा—दृष्टे

च प्रवर्त्तनम् । लोकस्य तद्विमूढत्वं, चार्वाकाः प्रतिपेदिरे ॥१॥ लोकायतमतेऽप्येवं, संक्षेपोयं निवेदितः। अभिधेयतात्पर्यार्थः, पर्यालोच्यः सुबुद्धिभिः ॥२॥ श्रोतव्यः सौगतो धर्मः, कर्त्तव्यः पुनरार्हतः। वैदिको व्यवहर्त्तव्यो–ध्यातव्यःपरमःशिवः ॥३॥ इति चार्वाकाः विवदान्ति।

इत्थं सर्वदर्शनानांपर्यन्तैकसारूप्येऽपिपृथग्पृथगुपदेशदृव्याद्विमतिसम्भवेविमूढस्यप्राणिनःसर्वस्पृक्तयादुर्लभं स्वर्गाऽपवर्ग-साधकत्वम् । अतो विमर्शनीयस्तात्त्विकोऽर्थः । यथा च विचारितं चिरन्तनैः ॥ श्रोतव्यः सौगतो धर्मः, कर्त्तव्यः पुनरार्हतः। वैदिको व्यवहर्त्तव्यो–ध्यातव्यः परमः शिवः ॥ १ ॥

इत्यादिप्राचीनोक्तसूक्तानि विमृश्य श्रेयस्करं रहस्यमभ्युपगन्तव्यं कुशलमतिभिः । एवं चन्द्रनरेशितुः सदसि विभिन्नम-तयः केचिज्जगत्कर्त्तारं देवविशेषं मेनिरे ॥ केचिच्च स्वाभाविकमिदं जगदिति प्रोचुः, केचित्पुनर्विद्वांसः शशशृङ्गवन्ध्या-सुतसमं जगदेतदसदिति प्रतिपादयामासुः। अपरे घटपटरचनोपमां जगद्रचनां कल्पयामासुः। अन्यशाब्दिका अनेकधा शब्दव्युत्पत्तिं कुर्वन्तः सभ्यजनान् रञ्जयामासुः, वेदपाठिनश्च करास्फालनपूर्वकं वेदमन्त्रानुच्चेरुः। साहित्यपाठिनो निजनिज-च्छन्दोऽलङ्कारकलाभिर्नृपमानसं प्रमोदैकप्रवणं विदधुः। सदसि लब्धकीर्त्तयः कवयः समस्याप्रहेलिकाप्रमुखकाव्यप्रबन्धैः सहृदयहृदयानि रञ्जयामासुः। सुतरां धर्माध्ववर्त्तिनः सद्वृत्तयः पौराणिका रामायणादिग्रथिततत्त्वानि विवेचयामासुः। कतिचिद्गुणदोषवेदिनो भिषग्वर्या दुग्धान्नजलौषधिपुष्पफलपत्राणां गुणान् ख्यापयामासुः। केचिच्चादाननिदानचिकित्सायां बुद्धिमन्तो वैद्याः सदोगृहं समलञ्चक्रुः। घनवर्गमूलादिकगणितशास्त्रेष्वतिदक्षाः समच्छेदादिप्रमाणविदः केचिज्ज्यौतिषिकाः

पञ्चाङ्गप्रकाशं चक्रुः । केऽपि विज्ञातदिवाकरादिगतयश्चन्द्रसूर्योपग्रहं निर्णयामासुः, अन्येऽप्यनेकशः खगोलकभूमण्डलवेदिनः सैद्धान्तिकास्तत्र विरेजुः । एवमनेकशास्त्रपारावारपारगामिनां परिचयवशाच्चन्द्रनरेशो भृशं मोदमानो निजविभवानुसारेण तेषां विदुषां दारिद्र्यदौःस्थ्यं दलयामास । श्रितदिगन्तां चान्द्रीं कीर्त्तिं कर्णातिथिं विधायाऽनेकदेशान्तरात्समागताः पिङ्गलादिप्राकृतकाव्यकर्मठाः कविकोविदाः छन्दोऽलङ्कारप्रबन्धरचनाभिः सन्तुष्टात्तस्मात्पार्थिवात्प्रतिपदं सुवर्णलवं लेभिरे । सुधर्मायाः ज्येष्ठभगिनीव चन्द्रसभा प्रतिदिनमधिकाधिकश्रियं पुपोष । इत्थं विदग्धजनमण्डितां चान्द्रीं सभां निरीक्षमाणौ पुष्पवन्तावपि चकिताविव क्षणं स्थिरीभावं जग्मतुः । उडुगणराजिषु राजमानो निशाकर इव, स्वर्गिषु वज्रपाणिरिव चन्द्रनरेशो मन्त्रिप्रमुखैर्विभूषितायां तस्यां सभायां भृशं चकासे । अथैकदा विविधालङ्कृतिभासुरा गुणावली राज्ञी सुधास्वादुभोजनैर्निजपतिं तोषयित्वा स्वयमपि निर्वृत्तभोजना प्रमुदितमानसा निजप्रासादगवाक्षप्रदेशं भूषयामास । तदानीं तच्छुश्रूषाविधायिन्योऽनेकशश्चेट्योऽहमहमिकया तत्सान्निध्यं भेजुः । तासु काश्चिद्व्यजनकरास्तां मन्दं मन्दं वीजयामासुः । काश्चित्ताम्बुलादिमुखवासं तस्यै ददुः । काश्चनपीयूषोपमवारिपात्राणि करकमलेषु निधाय तत्संमुखं तस्थुः । काश्चन चन्दनभाजनानि गृहीत्वा तन्मुखाम्बुजं विलोकयामासुः । काश्चन कुङ्कुमजलानि सिञ्चन्ति स्म । काश्चित् स्फटिकरत्नमुकुराणि समादाय तत्प्रसादं चकाङ्क्षिरे । काश्चन हास्यविनोदैस्तां हासयामासुः । काश्चित् पञ्चवर्णकुसुममालाः ग्रथित्वा कम्बुकण्ठ्यास्तस्याः कण्ठपीठं भूषयन्ति स्म । काश्चित्सुभाषितवाक्यप्रबन्धैर्मङ्गलमालां वितेनिरे । एवं विविधसेवारतेषु दासीगणेषु गुणावली राज्ञी विकस्वरमानसा प्रमोदमनुभवन्ती मनसिजोद्यानसंपदिव विभाति स्म । तदानीं तिग्मांशुरपि समग्रसौन्दर्यनिकेतनं तां निरीक्षितुं चकितमनास्तत्र क्षणं

गतिभङ्गं व्यतनोदिव। किन्तु तत्तेजसा शशिकलाभिः कुमुदिनीव विकस्वरवदनाम्बुजा सा भृशं चकासे । तदानीं दूरादागच्छन्तीं गजगामिनीं शशाङ्कमुखीं वीरमतीं विलोक्य सर्वा दास्यो गुणावलीं सप्रमोदं कथयामासुः। स्वामिनि ? सत्वरमुत्थीयताम्, भवदीया श्वश्रूस्त्वां संभावयितुं समागच्छन्ती विलोक्यते। अतस्तस्या यथोचितं विनयं कुरुष्व। अन्यथा वधूः कथमभिधीयते ? शुश्रूषयैव वधूधर्मो विराजते। यः पूज्यानां सेवां विधत्ते स समग्रसंपदां भाजनं भवति, प्रत्यहं मङ्गलमालाश्चानुभवति। यथा त्वदाज्ञां वयं शिरसा धारयामस्तथैव त्वमप्यस्या आज्ञापालिकाऽसि । यतस्त्वत्पतिरपि तदाज्ञानुबद्धस्तामेवोपास्ते सततम्। तस्मात्त्वं बहुविनयपूर्वकमिमां भजस्व, प्रसन्नायामस्यामखिलास्तव मनोरथाः फलिष्यन्ति यदुक्तम्—

पूज्यानां पूजनाधाना—न्मानमर्हन्ति सेवकाः। कुलीना अपि न काऽपि, पूज्यपूजाव्यतिक्रमात् ॥ १ ॥

इत्थं निजदासीवचनानि निशम्य वस्त्रालङ्कारमण्डिता गुणावली सहसा समुत्थाय तत्संमुखश्चाभ्येत्य तच्चरणारविन्दयोर्निपपात, विनयाञ्चितमानसा च सा तां जगाद, भगवति ? अद्य त्वद्दर्शनेनाहं कृतकृत्या जाताऽहंभगवत्या त्वयाऽनुगृहीता, परमैश्वर्यभाजनमजनिषि, अद्यैव मे समर्चिता देवताः प्रसन्ना जाताः। अद्यैव मे जन्म सफलं जातम्, अद्यैव किल स्वार्चिता द्विजन्मानः सत्याशिषः सञ्जाताः, अद्यैव मम गृहाङ्गणे कल्पलता प्रादुर्भूता, इममेव वासरं सफलं मन्ये, इयमेव घटिका सफला जाता, अधिकं किं ब्रवीमि ? भगवति ? अत्रागमनेनत्वयासुमेरोरप्यधिकतराऽहं विदधे। इत्थंगुणावलीवचनानिश्रुत्वा प्रहृष्टचेता वीरमती तां सरलस्वभावां मन्यमाना सन्मङ्गलोदग्रतरमाशीर्वचनं प्रयुञ्जाना निजगाद ॥

॥ इतिश्री चन्द्रराजचरित्रे प्रथमोल्लासेऽष्टमः सर्गः ॥ ८ ॥

अथ किं तदाशीर्वचनमित्याह—अगस्त्यमण्डलं याव-त्तपत्यत्तयकान्तिभाक्। सौभाग्यं तेऽचलं ताव-त्तिष्ठतु क्षेमदायकम् ॥१॥ यावद्भूमण्डलं तिष्ठे-त्सशैलवनकाननम्। पुत्रपौत्रगणोपेता, तावत्त्वं सुखिनी भव ॥ २ ॥ सतीनां माननीया त्वं, सदा लब्धमनोरथा। विराजस्व महाभाग्ये! नित्यानन्दपरायणा ॥ ३ ॥

ततो गुणावली तां प्रवरासने निवेश्य निबद्धाञ्जलिस्तत्संमुखमुपविशतिस्म, अप्रमिततद्गुणेन प्रमुदिता वीरमती प्रोवाच, हे वधुटि! त्वदभिधानं यथार्थं विनिर्मितमस्ति, तव जन्मना चोभयंकुलं विभूषितम्. विनयगुणेन त्वं सर्वोपरि वर्त्तसे. अतस्तव मुखकमलान्निःसरन्मिष्टवचनसौरभ्यंसर्वतःप्रसरति, तत्र किमाश्चर्यम्? कुलीनाङ्गनानां प्रेमपद्धतिरलौकिकी विद्यते, चन्द्रमण्डलात्पीयूषवृष्टिः, कमलाकरात्सौरभ्यमिक्षुकाण्डान्मधुररसश्चन्दनाच्च शैत्यं प्रसरति तत्र किमद्भुतम्? वत्से? त्वं दीर्घायुर्भव, निजप्राणतोऽप्यधिकां त्वां मन्ये, त्वत्तो मेऽस्मिन् लोके वल्लभं नान्यदस्ति, निजेच्छानुसारतस्त्वं मत्तो वरं याचस्व, कामपि चिन्तां मा कुरुष्व, यदि मदङ्गजस्त्वां कदर्थयति चेन्मह्यंत्वया निवेदनीयम्। यतस्तस्मै शिक्षां दास्यामि. युवां दम्पती मे नयनसंमतौ. श्वश्रूर्वध्वां स्नेहवती स्यात्तत्र न किमपि कौतुकम्। त्वां दुहितृसमामेव गणयामि. कदापि त्वं किञ्चिन्मात्रमपि मद्वचनं न लङ्घयिष्यसीति निःसंशयमहं जानामि. यदि मद्वचनानुसारिणी भविष्यसि तदा मदन्तिके विद्याप्रमुखंयत्किञ्चिदस्ति तत्त्वदीयमेव विद्धि, इत्थं वीरमती विविधवाक्पाटवेन गुणावलीमात्मसाच्चकार। गुणावलीत्वतीवसरलप्रकृतित्वाच्छ्वश्रूवचनानि सकपटानि नाज्ञासीत्। तदुक्तं सर्वं सा सत्यतया मेने। तदाख्यस्तु तयोर्वार्त्तांकुर्वत्योः स्वस्वकार्याणिकर्त्तुं प्रवृत्ताः। अथैकान्तं लब्ध्वा वीरमती गुणावलीं कथयामास स्नुषे? त्वं राजकन्यकाऽसि, मत्पुत्रश्च तव भर्त्ताऽस्ति, तस्मात्त्वं निजचेतसि संसारं सफलं मन्यसे,

अस्मिल्लोके मत्तः कापि नास्त्यधिकेति च गर्वमुद्वहसि, परन्त्वहं तव जन्म निष्फलमेवजानामि, त्वन्त्वतीव मुग्धाऽसि, स्वकीयं स्वार्थमपि न वेत्सि, किमधिकं ब्रवीमि, तव सदृशं जीवितं क्षणमपि विदग्धा काऽप्यपरा न धारयेत्। इत्थं वीरमत्या मर्मवचनानि निशम्य गुणावली प्रोवाच, हेमातस्त्वामहं जननीसमां जानामि, त्वय्येव विश्वस्ता सदा तिष्ठामि, त्वमेव मे हितचिन्तकाऽसि, किमन्यकल्पनया ? भगवति ? अनागसं मां वचनाशुगैः किमेवं पीडयसि। मम किं क्षीणमस्ति ? हस्त्यश्वरथसुवर्णरत्नदुकूलादीनि सर्ववस्तूनि मनोवाञ्छितानि मे दृष्टिगोचराणि विद्यन्ते। स्वजनवर्गोऽपि सदानुकूलतया मां परिचरति। भूरिभाग्यतया त्वादृशी श्वश्रूरपि सततं मे हितोपदेशिका मिलिता, ततोऽहं निजजन्म कृतार्थमेव मन्ये, मादृशी सुकृतशालिनी स्त्री कापि न विद्यते, ततो वीरमती तस्याः करं गृहीत्वा प्राह, वत्से ? त्वं सर्वथा मुग्धा दृश्यसे, मद्वचनरहस्यं किञ्चिदपि त्वया न ज्ञातम्। ओष्ठपल्लवप्रकम्पनेनाखिलवृत्तान्ततत्त्वं ये विदन्ति तादृशा जनास्तु दुर्लभाः सन्ति, किञ्चास्मिँल्लोके विज्ञानगुणोऽतिदुर्लभोऽन्येगुणास्तु सुतरां लभ्यन्तेऽखिलजनैः। यदुक्तम्—न द्रव्यं द्रव्यमित्याहु—र्बुद्धिसाध्यमिदं स्मृतम्। तस्माज्ज्ञानकला साध्या, पूर्वमेव हितार्थिभिः ॥ १ ॥ किं किं न साध्यते विद्या—कल्पवल्या जगत्यहो। यथाऽन्यचित्तसंभूतः, सङ्कल्पो वेद्यतेऽनिशम् ॥ २ ॥ ततोऽस्मिन्संसारे रूपसंपत्त्या न कोऽपि प्रमोदते। गुणं दृष्ट्वा सर्वे तुष्यन्ति, गुणा एव तुष्टिकरा इति वचनात्। अन्यदप्युक्तम्। गुणा एव हि पूज्यन्ते, न रूपं न कुलं तथा। गुणानामर्जने लोकाः, प्रवर्त्तन्ते यतः सदा ॥१॥

स्वरूपसम्पत्त्यासुवर्णपुष्पापुष्पाणि मनोरमाणि दृश्यन्ते, तथापि निर्गुणत्वात्तानि संग्रहीतुं न कोऽपि करं प्रसारयति। त्वं तु केवलं सूक्ष्मदुकूलानि परिहितुं जानासि, किञ्चिन्मात्रमपि तव बुद्धिबलं नास्ति, एकतश्चत्वारो वेदाश्चैकतश्चातुर्यकलेतदुभयं

समानतामावहति । तथाप्येतयोर्विभेदं विज्ञा एव विदन्ति. त्वं स्वयमेव पण्डितायसे, अहन्तु त्वां पशुसमां जानामि. एकेनैव वचनेन त्वं मया परीक्षिताऽसि. अथगुणावली जगाद—पूज्यतमे ! केवलं विमूढबुद्धिरहमिति त्वया कथं ज्ञाता ? अहं विज्ञाऽस्मीति सत्यं जानामि । अधिकं किं वदामि ? स्वश्लाघा स्वमुखेन कर्तुं सर्वथाऽनुचिता, यदुक्तम्—

परैः प्रोक्ता गुणा यस्य, निर्गुणोऽपि गुणीभवेत् । इन्द्रोऽपि लघुतामेति, स्वयं प्रख्यापितैर्गुणैः ॥ १ ॥

मातस्तव सूनुर्मे भर्ताऽस्ति. यस्य समो नास्त्यस्मिन् भूतले कोऽपि नरः । अभिनवगुणाकरेण तादृशेन स्वामिनाऽहं भूयसीं भाग्यरेखां स्पृशामि. तथाऽपि त्वं मज्जन्म कथं विगोपयसि ? वीरमती प्रोवाच वत्से ? सावधानतया मदुक्तं शृणुष्व, स्वमनसि मैवं प्रमोदस्व, त्वदीयः पतिश्चन्द्रराजः कियन्मात्रः ? यद्यपरान्पुरुषान्निरीक्षेथास्तदा त्वं विजानीयाः विशेषतां यतः कूपस्थभेकः सागर-कल्लोलान्कथं जानाति ? रतिरूपवैभवं कुब्जनारी कथं वेत्ति ? यो नालिकेरफलास्वादं न जानाति तस्य क्षुद्रचिर्भटीफलान्यपि स्वादिष्टानि भवन्ति । नागरिकाणामैश्वर्यमारण्यको जनो विज्ञातुं कथं प्रभुः ? यः कम्बलं परिदधाति स राङ्कवादिमहा-दुकूलानन्दं कथं वेत्ति ? येन प्रवहणानि न विलोकितानि स संतरणाय तुम्बिकामेव परमं साधनं जानाति । तैलिकवृषभो यन्त्रस्थितो जगद्वृत्तान्तं वेदितुमप्रभुः । स्नुषे ? त्वं मञ्चिकामत्कुणवत्सर्वथाऽनभिज्ञाऽसि । मन्येऽहमेकैकपुरुषा रूपसंपद्भि-रभिनवकामसौन्दर्यमपि तिरस्कुर्वन्ति, इत्थं श्वश्रूवचनानि निशम्य गुणावली जगौ, पूज्यतमे ? मैवं वितथवादं मां श्रावय. तव पुत्रसमाना अनेकनरा अस्मिंल्लोके न भवेयुः । भवदीयकुलोद्योतकरश्चन्द्रसमानश्चन्द्रस्त्वेक एव, तारका अनेके प्रकाशन्ते, सिंही त्वेकमेव पुत्रं प्रसूते, क्रोष्टारोऽनेकशो वनवीथिकायां परिभ्रमन्ति, कस्तूरिकामृगास्तु क्वचिदेव लभ्यन्ते, अन्ये हरिणा

वृन्दशो दृष्टिपथमायान्ति, तस्मात्तव सूनुश्चन्द्रः क्व? अन्पमतिमन्तोऽन्ये पुरुषाः क्व? अनेकनरेशा अपि त्वत्पुत्रस्य खलु तुलनामपि नार्हन्ति। यत्र कुञ्जरस्तोन्यते तत्र गर्दभस्तत्सङ्गतिं कथमनुसरति? यत्र कल्पवृक्षास्तिष्ठति तत्र करीरः किं पादपो गण्यते? त्वत्पुत्रं भर्त्तारं प्राप्याहं निजजन्म सफलमेव मन्ये। ममभाग्यवशाद्यो भर्त्ता मिलितः स मे पूज्यतमो भगवत्तुल्योऽस्ति। भोजनसमये पात्रे यत्समायाति तत्पक्वान्नमिति लौकिकोक्तिर्विद्यते। ततो वीरमती प्राह हेप्रियवधु? यत्त्वं वदसि तत्सत्यमेव, मम सूनुः स्वरूपादिवैभवेन सर्वोत्कृष्टः, परन्तु बहुरत्नावसुन्धरा। तस्मादप्यधिकगुणा अनेके नराः सन्ति, यदित्वं देशाटनमकरिष्यस्तदातज्ज्ञानमभविष्यत्। त्वन्तु केवलमाभापुरीं वेत्सि, तस्मादन्यनगराणि कथं जानीथाः? रम्यारम्यविवेकस्तवदुर्लभः। ततस्तवजन्म विफलमेव मन्ये, अस्मिन्विषये त्वया क्रोधलेशोऽपि न विधेयः। यद्यस्मिन्समये सर्वविद्यासु कुशलायां मादृश्यां श्वश्र्वां मिलितायां देशान्तरं न द्रक्ष्यसि चेत्कदात्वं प्रेक्षिष्यसे, इदानीमपि त्वं मत्तो लज्जां प्राप्नोपि ततस्त्वं सर्वथा कौतुकेष्वनभिज्ञा विद्यसे। किं बहुनोक्तेन? अहन्त्वेवं मन्ये तव जन्म वनकुसुमवन्निरर्थकमेव। नवनवान् दैशिकानाचारान्पश्यन्ती त्वं निजजन्म सफलं निष्फलं चेति विज्ञातुं कथं समर्था? अभिनवतीर्थगिरिकूटसरिदारामनगरनरेन्द्रमानववधूविनोदगीतनृत्यवाद्यविविधचरित्राणि ये प्रत्यहं विलोकयन्ति ते जना धन्याः। विविधकौतुकावलोकनैकरासिकाः पुत्र्यो याभिर्जनयित्रीभिः प्रसूतास्ता एव धन्यवादमर्हन्ति। अश्वमुखान् हयकर्णान्, श्रोत्रविहीनानेकचरणान्, गूढदशनान् शुद्धरदान्मानवानदृष्ट्वा त्वं जगत्यस्मिन्मानवरेखां स्प्रष्टुं कथमुचिता? त्वन्तु भोजनास्वादवेदिनी वस्त्रालङ्कारभूषिता निजप्रासादे मोदमाना तिष्ठसि, वनिताचारविमुखी त्वं विलोक्यसे, विशेषतः स्त्रीजात्यांतु स्वाभाविकं पाटवं सर्वदा तिष्ठत्येव, चातुर्यमलौकिकमेव शास्त्रसंगृहीतं

सुप्रसिद्धं तच्च पञ्चधाप्रकीर्त्तितम्—तद्यथा—

देशाटनं पण्डितमित्रता च, वाराङ्गना राजसभाप्रवेशः। अनेकशास्त्राणि विलोकितानि, चातुर्यमूलानि भवन्ति पञ्च ॥१॥

तेषु देशाटनस्य प्राधान्यं विदितम्। त्वत्तो विहगा अपि भाग्यवन्तो विद्यन्ते, यतस्ते विहायसि पर्यटन्तो विविधान्याश्चर्याणि विलोक्य निजनयनसाफल्यं वितन्वते। यथा रङ्को निजहस्तगतं गुडं सुधातुल्यं मन्यते तथात्वमेकं चन्द्रनरेशं लब्ध्वाऽपरं कंचिन्न जानासि, निज वेश्मस्थिता त्वं स्नेहाऽस्नेहवृत्तान्तं ज्ञातुमशक्ताऽसि, रेमुग्धे? या देशान्तरगामिनी सा नारी नाकिवृत्तान्तमपि जानाति, विशेषज्ञानन्तु दुर्लभं संमतमिति किं न वेत्सि? विदेशगामिनी प्रमदा केनाऽपि न वञ्च्यते। अपरे पुनर्गृहशूरा मठपण्डिताश्च बहवो दृश्यन्ते, परन्तु ये परस्थाने सन्मानं लभन्ते त एव विक्रमवन्तो विद्यावन्तश्चाभिधीयन्ते। प्राप्तस्यार्थस्य फलं तदेव निगद्यते, यत्किमप्यन्यस्मै प्रदीयते, जीवितस्य च साफल्यं तदेव यद्विविधदेशान्तरस्थकौतुकानि विलोक्यन्ते, त्वं तु किमपि न करिष्यसीति मां प्रतिभाति। तव जन्म विफलमेव गमिष्यतीति निःसंशयं ज्ञायते, इति वीरमत्यागदितानि मर्मभेदीनि वचांसि समाकर्ण्य तदाकृष्टहृदयाऽपि गुणखानिर्गुणावली तद्वचनानि वितथानि मन्यमाना जगाद, हे मातस्तवकथनं सकलं सत्यमेव प्रतीयते, तथाऽप्यावां देशान्तरं विलोकितुं कथं व्रजावः? या निरङ्कुशतया स्वेच्छाचारिण्यस्तास्तु यथाऽभिलाषं सर्वत्राऽपि कौतुकानि निरीक्षितुं पर्यटन्ति। भगवति? अहन्तु राजपत्नी विख्यातवंशसंभवाऽसि, ततो मे स्वकीयप्रासादात्पदमात्रमपि बहिर्गन्तुमसाम्प्रतम्, तर्हि देशान्तरगमनस्य तु का वार्त्ता? पूज्यक्रमाम्भोजे! भवदीयवचनेन कौतुकानि विलोकितुं मे भूयस्यभिलाषा जायते, किन्तु कृकवाकुरपि कलापकलया नृत्यक्रियां विधाय निजक्रमौ निरीक्षते।

अम्ब ! यद्यशिक्षितमविज्ञातं किमप्याचरामि तदाऽहं केवलं दुःखभाजनं भवामि, स्वयमविज्ञातकलोऽविदितक्रियां यःसमाचरति स सर्वथा दुःस्थितिमनुभवत्येव, जलकुक्कुटोहि वारितरणेक्षमो न तु वायसः । यतश्चोक्तम्—

यद्येषामुचितं कार्यं, तत्तैः साध्यं निरन्तरम् । अयोग्याचरणात्किं न, दुःखं प्राप्तं मनस्विभिः ॥ १ ॥

भगवति ! अहन्त्वबला जनोऽस्मि, अतोऽहं प्रबलात्प्रियतमात्क्षणमपिदूरंस्थातुं नक्षमा, तं च प्राणप्रियंप्रतारयितुंमेमतिः कथमुल्लसेत् ? कुलीनाङ्गनाभिर्निश्छद्मतया सततं पतिरेव निषेव्योऽनुवर्त्तितव्यश्च ।

यतः—पतिरेव परं स्त्रीणां, दैवतं परिकीर्त्तितम् । पतिशुश्रूषया लोके, शस्यते वनिता सदा ॥ १ ॥

स्त्रीणांस्वातन्त्र्यं सर्वदानिषिद्धम्, तद्यथा—पिता रक्षति कौमारे, भर्त्ता रक्षति यौवने । पुत्रश्च स्थाविरेभावे, न स्त्री स्वातन्त्र्यमर्हति ॥ १ ॥ विद्याकण्ठस्थिता शस्या, समृद्धिः करसंस्थिता । धर्मकर्मरताबुद्धिः, स्त्रीरत्नं पतिसन्निधौ ॥ २ ॥

अतः—स्वच्छन्दाचरणं सर्वथा धर्मपत्नीनां त्याज्यमेव, यद्यपि गुप्तवृत्त्या विहितं कार्यमपरः कश्चिद्भूचारी नावैति, तथाऽपि सूर्याचन्द्रमसौ तु सदैव साक्षीभूतौ निजस्थानस्थितौ रहस्याचरितमपि सकलवृत्तान्तं जानीत एव । एवं कृतेऽपि तस्मिन् कदाचित्तद्भेदाचदकृत्यं निजभर्त्ता जानीयात्तदा देशविदेशौ रक्षितुं मामक्षमौ । तस्मान्निजभर्त्रा सार्द्धमेव देशान्तरगमनं स्त्रीणामुचितमित्यहं मन्ये, नरपवनपतत्रिणः स्वतन्त्रास्ततस्तेहि सर्वत्रस्वेच्छाचारिणः । इत्थं गुणावल्याः पतिदेवताया अभिप्रायं विज्ञाय वीरमती तमन्यथा कर्त्तुं विविधयुक्तिं प्रारभते, मुग्धे ? यानि कार्याणि प्रमदाजनो जनयति तानि पुरुषवर्गो रचयितुं न प्रभवति। केचिद्भव्याश्चित्राणि स्त्रीचरित्राणि कलयन्ति, स्त्रीचरित्राण्यतिगहनानि वियन्ते, सागरः परिमातुं शक्यः, सागरा-

म्बरामप्यखिलामतिक्रमितुं कश्चित्समर्थो भवति, नक्षत्रमण्डलं कदाचित्परिगण्यते, शैलसमुदायोऽपि पद्भ्यां केनचिदुल्लङ्घ्यते, कदाचित्पर्यटन्कश्चिच्छशविषाणमपि लभते,प्रकुपितमपिभुजङ्गमंकुसुममालावच्छिरसाकश्चिद्धारयेत्। तथापि स्त्रीचरित्रं प्रमातुमशक्ता विदुषामपि शेमुषी। यतो हरिहरब्रह्मपुरन्दरा अपि स्त्रीवशवर्त्तिनोऽभूवन्। ताभिश्च विविधतपोविशोषितवपुषो मुनयोऽपि स्ववशंनीतास्तदेकभावनां भावयामासुरितिशास्त्रप्रथितं वृत्तान्तजातं के हि न विदन्ति? मुग्धाङ्गनानां चरित्राणां सीमानं न केऽप्यापुः, स्त्रीभिरवञ्चिताःपुरुषास्त्वस्मिन्मानवलोके विरला दृश्यन्ते।

यतः—स्त्रीभिः संप्रार्थितो लोकः, कृत्याऽकृत्यविमूढधीः। ताभिश्च दुर्लभं किञ्चि–न्नैवाऽस्त्यखिलभूतले ॥ १ ॥

मदकलिता ललना गिरिराजमारोहन्ति, भुजगाधिपं स्ववशं नयन्ति, कपटैकपेटा युवतयोऽतिगभीरां निम्नगां भुजदण्डेनोत्तरन्ति, क्रीडाकलापेष्वतिकुशलास्ताःपञ्चाननेभ्योऽपि न बिभ्यति, प्रसन्नमानसा मानिन्यः फलदानेन सुधाशनभूरुहमतिक्रामन्ति, प्रकुपितास्तु विषवल्लीसमाः सद्यः प्राणापहारिण्यो भवन्ति, सुभगे! या मदिरेक्षणा निजभर्त्तुर्भयमाशङ्कते तस्या जनिर्मुधैव। स्त्रीचरित्राणि नैकविधानि वर्त्तन्ते, तेषु ताः स्वयमेव कुशला विद्यन्ते, तच्छिक्षणे ताः कञ्चिदपरं नोपासते, स्वभावतः स्वयमेवतान्यासादयन्ति। मायूराण्यण्डानि कश्चित्रयति? अप्रकटितमदावस्थमत्तकुञ्जरकुम्भस्थलविभेदने मृगाधिपं क उपदिशति? तस्य खलु तादृशी प्रकृतिरेव। तस्मात्त्वमपि चन्द्रकुमाराद्भयं मा शङ्कस्व, मुग्धे! गगनगामिन्या सिद्धविद्यया यामिन्यामावां नभोवर्त्मनाऽनेकानि कौतुकानि निरीक्षितुं गमिष्यावः। तत्र च स्वमनोऽनुकूलमानन्दरसमनुभूय विभावर्यामसमाप्तायामेवाऽत्र पश्चादागमिष्यावः, अस्मद्वृत्तान्तं त्वद्भर्त्ता नाधिगमिष्यति, कदाचिच्च स तद् विज्ञास्यति ततोऽपि

त्वया न भेतव्यम्। यतो मशकानामुपद्रवाद्गृहं त्यक्त्वा मनुजैर्वनवासो न विधीयते। ततस्त्वं निश्चिन्तचित्ताऽधुना तिष्ठ, यतो भीरूणां मनोरथा न सिद्ध्यन्ति। अरण्यचारिणःपशवोऽपि, निर्भयचेतसोराजपदवीं सेवन्ते।

यतः-भयहीनोऽसहायोऽपि, सिंहः शेते गुहालये। मृगव्रातो भयत्रस्त-इतश्चेतश्च धावति ॥ १ ॥

तस्मान्निर्भयतया त्वया स्थातव्यम्। बुद्धिप्रभावाद्विद्याबलाच्चाहं तवाचामक्षेमं साधयिष्यामि, इति वीरमत्या अभिप्रायं विदित्वा गुणावलीविचिन्तयामास, श्रेयःसम्पादकोऽयं समयः, श्वश्रूसाहाय्याद्विविधान्याश्चर्याणि सुखेन विलोकयिष्यामि, यतः सा बहुविधां विद्यां विजानाति, तेन मे भर्त्ता किमपि व्यलीकं विधातुं न मयि प्रभविष्यति, एवं विचार्य गुणावली वीरमतीं जगौ, भगवति ! त्वामेव शरणं श्रिताऽस्मि, मम जीवितं त्वदायत्तं जानामि, त्वदुक्तं सकलं वचो मे मान्यमस्ति, नूतनानि कौतुकानि मां दर्शयितुं त्वमुत्सहसेऽवस्तानि सकलानि निरीक्षितुं मच्चेतो विलम्बं न सहते। परन्त्वियं मेऽभ्यर्थना, यथा मे लज्जा तिष्ठति तथा त्वया यतितव्यम्। त्वत्तोऽभिन्नां मां विद्धि, मातस्त्वामहं शिरोमणिसमां मन्ये, सद्यः प्रसद्याद्यैव कौतुकं मे प्रदर्शय, साम्प्रतं तद्विलोकनैकरसिकं मदीयं मानसं संजातम्। यतो नृत्यं विधातुं यियासोर्मुखाच्छादनं नोपयुज्यते, मन्त्रप्रयोगेण मत्पतिः प्रथमं त्वया वशीकरणीयः यथा मां न दुनोति, तज्ज्ञात्वाऽपि स्वयं क्रोधाकुलितमानसो न भवेत्। इत्थं ब्रुवतीं स्ववशवर्त्तिनीं गुणावलीं मत्वा वीरमती प्राह, सुभगे ! मदन्तिकेऽवस्वापिनी विद्या विद्यते। तवेच्छा चेत्तयाऽखिलनागरिकानश्मसमानचेतनान् क्षणेन विदधामि, तर्हि त्वत्पतिवशीकरणे मे कः प्रयासः ? इदानीं तव चेतसि कौतुकदिदृक्षाजागर्त्तिचेत्सावधानतया शृणुष्वैकं मदीयवाक्यम्। एकं कौतुकं विलोकनार्हमद्यदिने विद्यते, तद्यथा-इतोऽष्टादशशतक्रोशं विमलावासमण्डिता

विमलापुरीनामनगरीवर्त्तते, या सुधाधवलिताट्टहर्म्यदेवप्रासादप्रमुखवैभवश्रेणीभिर्भूषिता प्रत्यहं पुरन्दरपुरश्रियमनुसरति। यस्यां परपराजयप्रदानैकपटीयान्, स्वरूपसम्पदाविजितमारस्वरूपो मकरध्वजनामा नरपतिरस्ति, तस्य तनया विदितनया प्रेमलालक्ष्मीर्लक्ष्मीनिकेतनं वर्त्तते, या तन्वङ्गी सर्वावयवसौन्दर्येण रम्भामपि तिरस्कुरुते, यामुत्पाद्य विधाताऽपि निजचातुर्यसीमानं मेने। तां राजसुतामद्यैव रजन्यां सिंहलपुराधीशस्य कनकरथनृपतेः सूनुः कनकध्वजः परिणेष्यति, अनल्परूपवैभवयोस्तयोर्लग्नमहोत्सवः प्रेक्षणीयतमोऽस्ति, यदि मया सार्द्धमागच्छेस्तर्हि सुन्दरतरं तत्कौतुकं दर्शयित्वा त्वां कृतार्थयेयम्। इतिश्वश्रूवचनानि साश्चर्याणि सादरं निपीय प्रमुदितमानसा गुणावली निजगाद, मातः ? सकलगुणसम्पन्ना सर्वजनमान्या त्वं परमदैवतं मे वर्त्तसे, भवादृशी श्वश्रूर्मया प्राक्तनसुकृतप्रभावेणैव समप्रापि, भगवत्या यन्निगदितं तत्कौतुकं मानवजातीनां दृष्टिगोचरं कथं स्याद्यदि काचिद्देवी भवेत्तदा स्वल्पकालेन तत्र गन्तुं समर्था स्यात्। मानवानामध्वयायिनां तत्र दूरदेशे प्रयाणमनर्हम्। इति वितर्कयन्तीं तां वीरमती प्रावोचत्, सुरूपे ! दूरतरप्रयाणं विदित्वा कथं वेपसे ? नभोगामिनीं विद्यांजानामि, यन्महिम्नैकस्यां यामिन्यां लक्षयोजनं गत्वा पश्चादागच्छामि, कियन्मात्रमेतत् ! इदन्तु ममैकपदतुल्यं वर्त्तते, सद्विद्याप्रभावेण किमप्यसाध्यं न मन्ये।

यतश्चोक्तम्— मातेव रक्षति पितेव हिते नियुङ्क्ते, कान्तेव चाभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति विपुलां वितनोति कीर्त्तिं, किं किं न साधयति कल्पलतेव विद्या ॥ १ ॥

अत्यद्भुतं तद्विद्याचमत्कारं निशम्य गुणावली राज्ञी निजहृदि प्रमोदसंभारं बिभ्राणा प्राह, श्वश्रूवर्ये ! ईदृशी मनोभीष्ट-

प्रदायिनी विद्या शर्मसाधिका स्वाधीना विद्यते, परमावयोः प्रयाणावसरः कथं मिलिष्यति ? मातस्तत्कारणं श्रूयतामिदानीं नृपतिः सपरिवारो राजसभायां सिंहासनमधितिष्ठति, सूर्यास्तं यावत्स च तत्र न्यायावलोकनं करिष्यति,ततःस्वस्थानं समेत्य विसर्जितसमस्तराजलोकः सान्ध्यं विधिं समाप्य प्रथमयामे व्यतीते व्यपेतभीः स मत्प्रासादे समागमिष्यति । ततश्चैकं प्रहरं यावन्मया सार्द्धं हास्यविनोदं करिष्यति, समनुप्राप्ते तृतीययामे हंसतुलिकासनाथे शयने सुखनिद्रामनुभविष्यति, ततः पश्चिमप्रहरे समुत्थाय स प्रभातकार्याणि समाचरिष्यति, इति क्षणमात्रमपि निशायां मे नावकाशस्त्वया सार्कं कथमहमागमिष्यामि ? वीरमती बभाषे, स्नुषे ? सर्वथा त्वं निश्चिन्ता भव, भयलेशं मा विचिन्तय, मम कलाकौशलं पश्य, अद्य त्वत्पतिस्तव प्रासादे सत्वरं समागमिष्यति, ततस्त्वया युक्तिपूर्वकं तं प्रस्वाप्य मदन्तिके सत्वरं समागन्तव्यम् । इति मुग्धस्वभावां गुणावलीं विज्ञाप्य वीरमती निजावासं समासदत् ।

इतिश्री चन्द्रराजचरित्रे प्रथमोल्लासे नवमः सर्गः ॥ ९ ॥

ततो गुणावली निजचेतसि व्यचिन्तयत्, मम श्वश्रूरमेयगुणरत्ननिधिर्वर्त्तते, गृहस्थिताया मे सुकृतिप्रार्थनीया यात्रा संप्राप्ता, वार्त्तायान्त्वसौ पटुतरा दृश्यते, एतेनास्या वाचालत्वं स्पष्टं प्रतीयतेऽतस्तद्वचसि मे विश्वासो नास्ति, यदि तत्कथनानुसारेणाद्य मत्स्वामी समागमिष्यति तदा सा विश्वसनीया भवेत् । इतो वीरमती स्वनिवासंप्राप्य निवृत्तान्यकार्या सत्वरं विद्यामाराधयितुं रहसि प्रारभत, ततस्तद्विद्याप्रभावेण तद्वचनप्रतिबद्धो देवः प्रत्यक्षीभूय प्रार्थयामास, देवि ? किमर्थमहमाराधितः ? वीरमत्यवादीत्, निरर्थकं देवाराधनं कोऽपि न कुर्यात्, तवाऽऽव्हाहनन्त्वेतदर्थमेव जानीहि, यत्किमपि च्छद्म विधी-

यताम्, येन मत्स्वसुर्नृपासनं परित्यज्य विद्यमाने दिवाकरे निजनिकेतनं समागच्छेत्। देवः सविनयं जगाद भगवति! नेदं महत्कार्यं मन्ये, अञ्जलिप्रमितवारिणि तरणक्रियाऽऽरंभः किं विधीयते? तथापि हे मातस्तवात्मजोऽधुनैव गृहमभिव्रजेत्तथा कमप्युपायं रचयामीति निगद्य सिद्धदेवेन दुर्जनहृदयवच्छयामतराऽभ्रघटा नभसि सद्यो व्यरचि, मेचकरुचिं तामभ्रमण्डलीं विलोक्य बर्हिणः केकारवं कर्त्तुं प्रारेभिरे, मकरध्वजकरवालवदातिचञ्चलाः सौदामिन्यः सर्वतोदिक्षु दिद्युतिरे, जीमूतगर्जनेन परितोऽम्बरतलं व्याप्रियत, क्षणतोऽनिवारिता वृष्टिर्भूमण्डलं प्लावयामास, शीतलः पवनो जनहृदयैः सार्कं भूरुहान् कम्पयन्सर्वतः प्रासीसरत्। एवमाकस्मिकदैवप्रभावेण मेघौघेन नभस्तले समाक्रान्ते सर्वतस्तमोमयं दिग्मण्डलं जज्ञे। यतो नृपतिर्भयाक्रान्तचेताः सहसा राजसभां विसृज्य निजावासं जग्मिवान्। विद्यमाने दिवानाथे समागच्छन्तं धराधवं ज्ञात्वा गुणावली परमं विस्मयं जगाम, श्वश्रूवचसि वाढं विश्वस्ता च बभूव, निजनिकेतनं समागच्छन्तं स्वामिनं निरीक्ष्य निजाचारचञ्चुर्गुणावली ललाटपट्टे करसम्पुटं निबध्य संमुखं स्थित्वा सोपचारं प्राह, प्राणप्रिय! अद्य सवेलमागमनं भवतां समजनि, पुनर्व्यग्रताग्रस्तं भवतां मानसं कथं लक्ष्यते? प्राप्तावसरश्चन्द्रनरेशोऽवादीत्, प्रिये! अकालिका वृष्टिरियं पतति। अतीव शीतलः पवनः प्रसरति, तस्मादहं सत्वरं समागतोऽस्मि, अद्य वृष्टिसंपातेन मे वपुर्भृशं वेपते, तेन मे हृदि व्याकुलता दृश्यते। भक्तिभरावनतवनितामूर्द्धन्या गुणावली स्नेहभावं व्यञ्जयन्ती जान्हवीवरवालुकातिकोमलां शय्यां सज्जीकृत्य प्रच्छादनचीनांशुककशिपुभिर्विभूषयामास, ततश्चन्द्रनरेशः सूक्ष्मांशुकेन बद्धश्रवणयुगलः पर्यङ्कमुपाविशत्। गुणावल्या मृगमदादिसुवासितं ताम्बूलवीटकं तस्मै वितीर्य विविधाऽऽसवादिपानकं प्रदत्तम्। नारायणादिसौगन्धिकतैलेन तस्य शरीरञ्च विमर्दितम्। इत्यनेकसुवासितद्रव्योपचारेण

सर्वतः परिमलः प्रसृतः। व्यपगतशीतार्चिर्नृपतिः क्षणेन स्वास्थ्यमवाप। ततो वस्त्रेण शरीरमवगुण्ठ्य नराधीशः सुष्वाप, गुणावलीत्वक्षीणभक्तिभावा तत्पादौ विमर्दयितुमारेभे। ततो नृपतिर्जागर्ति वा निद्रित इति जिज्ञासमाना सा पुनः पुनस्तं विबोधयामास, एवं कियत्काले व्यतीते सन्ध्यासमयोऽजनि। तदानीं सा निजचिकीर्षितं साधयितुं जिगमिषुरुत्तिष्ठति पुनरुपविशति, स्वयमनिद्राणो नरेशो गुणावल्या विचेष्टितं विज्ञाय निद्राव्याजेन निमीलितनेत्रः स्वचेतसि चिन्तयामास, अद्य खलु किमपि नूतनं वृत्तान्तं समुपस्थितं दृश्यते, यतोऽस्या मनोऽस्थिरं लक्ष्यते। कस्मिन्नपि कार्यप्रसङ्गेऽसौ व्यग्रचित्ता विद्यते, ततो गमनागमनं नाटयन्ती मां प्रतारयित्वा क्वापि गन्तुमना वर्त्तते। यतः स्त्रीणां साहसं दशगुणं प्रोक्तम्, सुशीलेयं स्त्री दुःशीलवनितेव पापपङ्केन निजात्मानं मलीनयितुं कथं प्रवृत्तेति वस्तुतत्त्वं न ज्ञायते। नूनमियं कुसङ्गसंसर्गेण भ्रष्टमतिरजायत, अन्यथा मादृशं दृष्टगुणं भर्त्तारं लब्ध्वाऽपि केनचिदन्येन साकं प्रीतिमती कथं भवेत्? अधमजनानुषङ्गेण गृहीतगुणोऽपि स्त्रीजन एवमेव जायते। निःसन्देहमेतत्। जात्यतपनीयमपि क्षारभावनया द्वैतभावं विजहाति, निरुपमोऽपि घनसारः शीताङ्गारकसंयोगात्स्थिरत्वं कलयति, चकोरश्चित्तचाञ्चल्यादङ्गारान् भक्षितुं वाञ्छति, वकुलपादपश्च कामवशो मदिरां पातुमिच्छति। तथैवासौ मम महिषी मां वञ्चयित्वा क्वाऽपि गन्तुमना वर्त्तते। परन्तु मामनिद्राणं विदित्वा सङ्कुचितचित्तवृत्तिरसौ निजचातुर्यं प्रसारयितुं प्रवृत्ता। तथाऽप्यसौ वराकी मदग्रे किं करिष्यति? एवं विचिन्तयन्तं नृपतिं निद्रितं विज्ञाय गुणावली सायं छलं गवेषयित्वा सज्जीभूय प्रकटितामन्दानन्दा श्वश्रूनिकेतनमयासीत्। विज्ञाततच्चरित्रो जातरोषो भूपतिः खड्गसहायः प्रच्छन्नतया तामनुजगाम, इतो वीरमती सूचिभेद्यतमसि तमस्विन्यां वध्वागमनं प्रतीक्षमाणाऽस्थात्, तावत्तद्द्वारदेशमधिष्ठाय गुणावली

धीरस्वरेण द्वारमुद्घाटयामास, वीरमती तामागतां विलोक्य हृदयाम्बरे हृद्यं प्रमोदचन्द्रं बिभ्राणाऽदरेण संभावयामास, ततः साऽऽत्मनो लघुत्वं ख्यापयन्ती निजविद्यायाः प्रशंसां चक्रे, अथ गुणावली बभाषे मातः ? त्वद्वचनमनुध्यायन्ती प्रियतमं वञ्चयित्वा केनाऽप्यलक्षितगमना त्वत्प्रेमपाशनिबद्धाऽत्र समागताऽसि, इदानीं यत्तुभ्यं रोचते तन्निवेदय, तव वचनं मे सर्वदा प्रमाणीभूतम् । यथाऽविलम्बेन जातमनोरथा तत्र व्रजामि तथाऽवितथायुक्तिर्विधीयताम् । यावन्मद्भर्त्ता न जागर्त्ति तावदहं तत्र गत्वा तदन्तिके पुनस्तिष्ठामि तदा स आवयोश्चरित्रं न जानीयात् । तदानीं द्वारान्तिकस्थितश्चन्द्रस्तयोर्गुप्तावदातं समाकर्ण्य निजचेतसीति निश्चिकाय, श्वश्रूवध्वौ मिथो मिलित्वा मामवगणय्याधुना कमप्यनर्थमुत्पादयितुं विहितोद्यमे विद्येते । अथ वीरमती तां बभाण यशस्विनि ! सत्वरमुपवनमार्गं समाश्रय, कणवीरकम्बाश्चैकां समादाय सत्वरमत्र समागच्छ, तुच्छमतिर्नारी स्वभावतोऽतिभीरुरतो निर्भयतया त्वया गन्तव्यम् । ताञ्च कम्बां मन्त्रयित्वा तुभ्यं दास्यामि, त्वद्भर्त्राऽधिष्ठिता शय्या त्वया निःशङ्कतया त्रिस्ताडयितव्या तया कम्बया । तेन त्वत्पतिर्झटिति निद्राधीनो भविष्यति । यावदावां मनोभीष्टं कौतुकं दृष्ट्वा अग्रे समागमिष्यावस्तावच्चन्द्रनरेशो न जागरिष्यति । इत्थं वीरमतीवचनमाकर्ण्य गुणावली निर्भयभावा कणवीरशाखामानेतुमुपवनं ययौ, धरणीधवोऽपि तदबलाविचेष्टितं निरीक्षितुकामो वीतभयस्तामन्वगच्छत् । राज्ञ्यपि निजकार्यसाधनोद्यता कणवीरतरुमशिश्रियत् । नृपश्चिन्तयति स्म, अहो नैशिकं तिमिरमविरलं विद्यते, रक्षोऽधिष्ठितः पन्था आरण्यको दुःसञ्चारः, वनवाटिकाऽपीयं विषममार्गा कुटिललतान्तरितान्तरा सर्वतो दुष्प्रवेशा वर्त्तते । वीरंमन्या अपि निर्मानवामीदृशीमटवीमवगाहितुमप्रभवाः, दिवाऽपि नार्यो बिभ्यति, सुकोमलाङ्गीयमबला कथमेकाकिन्यत्र समागता ? एवं वितर्कयति तस्मिन्नरेशेऽशेषसमी-

हितप्रदां सुकोमलामेकां कणवीरशाखामादाय सा श्वश्रूसमीपमाययौ, ततश्चन्द्रराजो निजावासमगमत्, दध्यौ च यदिदानीं गृहीतकम्बा मद्भार्या मम शय्यां प्रहर्तुमागमिष्यतीत्यवधार्य शयने कृत्रिमं पुरुषं प्रस्वाप्य तदुपरिवसनमेकं प्रच्छाद्य दीपकस्य पृष्ठभागे स्वयं निलीय तस्थौ, कपटकलासु नारीणामतीव पाटवं दृश्यते, तथाऽपि पुरुषाणामग्रे कियत्तासां चातुर्यम्? अथ वीरमती तां शाखां मन्त्रयित्वा महोत्सवपूर्वकं गुणावल्यै प्रदायाऽचीकथत्। नृपतेस्त्वया न भेतव्यं सर्वदा धैर्यं समाधेयम्। यतः—

धैर्यं सदा जनयति क्रमतो धरायां, कार्याणि दुर्लभतराणि भयोज्झितानाम्।
तस्मात्तदेव सुधिया प्रविहाय काम—मन्यत्सुचिन्त्यमखिलार्थफलप्रदायि॥ १॥

ततो दत्तावधानया त्वया पूर्वोक्तक्रमेण मदुक्तं सर्वं विधातव्यम्। गुणावली सहसा ततो निर्गत्याऽखर्वगर्वगिरिशृङ्गसमारूढा मन्त्रसिद्धां कम्बां गृहीत्वा नृपशयनमासाद्य निद्रितं निजभर्तारं विदित्वा प्रमोदग्रथिला विशेषतोऽकृतविचारा प्रसुप्तस्य कपटपुरुषस्योपरि त्रिः कम्बाप्रहारं चकार। प्रच्छन्नप्रदेशस्थितश्चन्द्रो व्यचिन्तयत्। विमात्रा वीरमत्या शिक्षितेयं वधूटी सत्कुलप्रसूताऽपि कपटकलामनार्योचितां निषेवते। अहो! स्त्रीणां साहसम्, विधाताऽपि स्त्रीजनाच्छङ्कमानोऽवतिष्ठते। ततः सा कृतकृत्या सद्यः श्वश्रूसमीपमियाय, भूपोऽपि तद्विचेष्टितविलोकनरसिकस्तामनुगम्य द्वारप्रदेशे निलीयाऽस्थात्। अक्षोभ्यहृदयः पार्थिवस्तत्र स्थितो निजचेतसि किञ्चिदपि भयं न विवेद, यत ऊर्जितविक्रमाः परेभ्यो निजपराजयशङ्कां न विजानते। यदुक्तम्—

यस्याऽस्ति वीर्यं खलु तेजसोत्कटं, जगज्जनाशंसितकीर्त्तिभासुरम्।
स एव तेजस्वितमो विभाव्यते, पराजयं क्काऽपि लभेत जातु नो॥ १॥

अथ गुणावलीनिगदितकम्बोदन्तं निशम्य वीरमती तत्क्रियाकौशलं समीच्य तां भृशं प्रशशंस । तदा प्रमुदितमानसा गुणावली तां प्रार्थयामास, मातः ! मत्पतिस्तु निद्राधीनः सञ्जातस्तथाऽपीमे पौरजनाः सर्वे जाग्रति, तेषां कश्चिदस्मद्रहस्यं विज्ञाय नरदेवमकथयिष्यत्तर्हि मे का गतिरभविष्यत्। तस्मात्तदुपायः कोऽपि विधीयताम्। वीरमती तामाश्वासयन्ती प्रावोचत्, आयुष्मति ! मां किमुपदिशसि ! पर्पटं कुर्वत्या मे बहवो वासरा एवं व्यतीताः । इदानीमेव तादृशमुपायं रचयामि, येन मद्गृहद्वाराद्बहिःस्थिताः सर्वे जना निद्रामुद्रितलोचना भवेयुः । इदं कार्यं तु ममाऽकिञ्चित्करं विद्यते । इति विमातुर्धाष्ट्र्यं विज्ञाय जातचमत्कारश्चन्द्रश्चेतसि चिन्तितवान् । प्रकृत्या वैरिणीयं विमाता कामपि विद्यां प्रसाध्य तत्प्रभावात्किमप्यकृत्यं समाचरितुमुद्यताऽस्ति । विज्ञातमस्या हृद्गतं चेष्टितं तावद्विलोकयामि, किं करोत्यसौ, अहन्तु गृहद्वारान्तःस्थितोऽस्मि तस्मान्न मे काचित् क्षतिः । ततो वीरमती निजसमीहितनिष्पत्तये गृहाभ्यन्तरे गत्वा धृतगर्दभीरूपा क्रूरस्वरं गर्दभनादं व्यतनोत् । यं प्रखरध्वनिं निशम्य सकलनागरिकास्तथा निद्रिता अभूवन् यथा साडम्बरे चक्रिसैन्ये समायातेऽपि सुषुप्तिदशां न त्यजेयुः। एवं पौरजनेभ्योऽवस्वापिनीं निद्रां प्रदाय सा बहिरायाता। भूधवेनेदं विमातुः कर्म कपाटान्तर्निविष्टदृष्ट्या व्यलोकि। वीरमती वधूसमीपमागत्येति जगाद, स्नुषे ! महादुन्दुभिगर्जनेनाऽपि नागरिका न जागरिष्यन्तीति निर्भयमानसा भव, अधुनैवाऽस्मच्चन्दनवाटिकां गत्वा प्रथमोपस्थितं सहकारतरुमारुह्य विमलापुरीं व्रजावः । अहो ! स्त्रीणां साहसम्। यदुक्तम्—

वैरिणः किं न सेवन्ते, किं न पश्यन्ति योगिनः । कवयः किं न जल्पन्ति, किं न कुर्वन्ति योषितः ॥ १ ॥

तथा च—अनुचितकर्मारम्भः, स्वजनविरोधो बलीयसा स्पर्धा । प्रमदाजनविश्वासो—मृत्युद्वाराणि चत्वारि ॥ २ ॥

अतोऽनर्थदः स्त्रीविश्वासो मतिमद्भिः सर्वथा हेयः। अथ श्वश्रूवध्वौ निजाभिमतस्थानं प्रयातुं तत्परेऽभूताम्। श्रुतसहकारवृत्तान्तो रहोगतश्चन्द्रराजो विस्मयं प्रपेदे। ततो वीरमती गुणावलीं जगाद, त्वमेवं जानासि विमलापुरीत्वितोऽष्टादशशतक्रोशं दूरे वर्त्तते तत्र कथं गमिष्यावः ? परन्त्वेवं मा विचिन्तय, क्षणमात्रेण तत्र त्वां नेष्यामि, विषादं मा कुरुष्व, इत्थं तदालापं निशम्य चन्द्रेण विचिन्तितम्, अहमपि ताभ्यां साकमेव व्रजामि, तद्विचेष्टितञ्च विलोकयामि तत्र गत्वेमे किं कुरुतः ? इति हृदि ध्यात्वाऽञ्जसा तत्स्थानाद्विनिर्गत्य खड्गसहायः स निजवाटिकामेत्य प्रथमोपस्थितमाम्रतरुं लक्ष्यीचकार. क्षणं विमृश्य केनाऽप्यलक्षितोऽसौ तत्कोटरं प्राविशत्। ततो निपुणमतिः स दध्यौ, विशुद्धशीला मत्पत्नी दुराचाररता नाऽभवत्। यथा महागिरयोऽपि चालनेन कदाचिच्चलन्ति तथेयं मुग्धा मम विमात्रा परिभ्रामिताऽस्ति। इदानीं तयोश्चरित्रं पश्यामि, यावद्वीरमतीगुणावल्यौ तत्र समागच्छन्त्यौ विलोक्य स चिन्तितवान्। यदीमेऽन्यतरुमारुह्य गमिष्यतस्तदा मे प्रयासो मुधा भविष्यति, कौतुकालोकनञ्च न भविष्यति। तावत्प्रमुदितचेतसौ ते तस्यैव तरोस्तले समागत्य तं समारुह्य तस्थतुः, तत्कोटरान्तर्निलीनश्चन्द्रराजस्तयोर्नेत्रातिथिर्नाभूत्। अथ वीरमती सहकारतरुं कम्बया प्रहृत्य प्राह, रे आम्र ! त्वमञ्जसा विमलापुरीमावां दर्शय, इति वचनमात्रेण सहकारो विमानमिव नभोमार्गेणोत्पपात, केवलज्ञानावरणीयकर्मणा केवलज्ञानमिव चन्द्रराजः कोटरावरणेनाऽऽवृतस्तथापि मतिश्रुतादिज्ञानावरणीयकर्मणां क्षयोपशमेन जीवात्मा यथा न्यूनाधिकमवबोधते तद्वत्सोऽपि तत्रस्थो बहिःप्रदेशं कञ्चित्पश्यति, आम्रगतिर्मनसोऽप्यधिकजवा वर्त्तते, अनेकदेशविदेशगिरिवनोपवनानि निरीक्षमाणश्चन्द्रः सुखेन व्रजति, नभोविस्तृतायाश्चन्द्रज्योत्स्नाया निर्मलप्रकाशेन क्षीराब्धिगामिनी नौकेव विकसच्चन्द्रतेजसि व्रजन् सहकारो निरीक्ष्यते।

वीरमती गुणावलीं निजाङ्गुल्या नवनवान् पदार्थान् प्रदर्शयन्ती प्राह, मानिनि ? विलोकय, इयं विविधवर्णा देवापगा स्वच्छवारिप्रवाहेण भूतलं पावयति, याऽखिलमानवानां पापपङ्कं प्रक्षालयति, यस्या अम्भांसि मौक्तिकाकृतिं तिरस्कुर्वन्ति। इयञ्चनीलाञ्जनाभा सरिद्यमुनेत्यभिधीयते, या साक्षाज्जगच्चक्षुषःसवितुर्देवस्यपुत्रित्वेनप्रसिद्धिं भजति, या हि भूमिदेव्या वेणीसमा लक्ष्यते। एवमनेकग्रामनगरदेशगिरिसरित्सरःसरस्वद्वनोद्यानद्रहदीर्घिकावापीप्रमुखंतां प्रदर्शयन्ती प्रयाति, एवमग्रे व्रजन्ती वीरमती स्फटिकोपलशकलं स्मारयन्तमष्टापदमहागिरिं तां दर्शयित्वाऽवोचत्, मुग्धे ? मोक्षपदसाधनमिमं भूधरं सावधानतया निरीक्षस्व, यतो जन्मसाफल्यं भवेत्। एतस्मिन् गिरिवरे भरतचक्रिणा विनिर्मितः सुवर्णमणिमयः सुविशालश्चतुर्मुखश्चैकोजिनप्रासादो-विराजते, तत्र पूर्वस्यां दिशि जगदीशितुरादिनाथस्याजितनाथस्य च स्वप्रमाणवर्णोपेतरत्नमयप्रतिमाद्वयं समस्ति, दक्षिणाशायां संभवनाथप्रमुखानां चतुर्णां तीर्थकृतां निजदेहप्रमाणवर्णमय्यो मूर्त्तयो वारुण्यां यथामानवर्णोपेतरत्नमयानि श्रीसुपार्श्वनाथाद्यष्टार्हतांबिम्बान्युदीच्यां च धर्मनाथप्रमुखतीर्थङ्कराणां निजदेहमानवर्णोपेता दशमूर्त्तयो भ्राजन्ते। अत्र गिरौ समागत्य दशकन्धरो जिनध्याननिरतस्तीर्थकृन्नामकर्मोपार्जिष्यति। इमं गिरिं परितो वलयाकारत्वमापन्ना जाह्नवी वहति। किं बहुना,।

आपद्गणं स्मरणमात्रत एव हन्ति, पुष्णाति चिन्तितमसौ शुभमातनोति।
स्वर्गाऽपवर्गसुखसन्ततिमाशु दत्ते, सोऽयं सदैव गिरिराडभिवन्दनीयः ॥ १ ॥

एवमनेकधाऽष्टापदतीर्थमहिमानं ज्ञापयित्वा ततोऽग्रे प्रयान्ती सा दूरतः संमेतशिखरशिखरिणमुद्दिश्य कथयति स्म, प्रियवधु ! इदं तीर्थं पावनं विद्यते, अन्यानि बहूनि तीर्थानि सन्ति, तथाऽपि पुण्यतमं भूतलन्त्वनेन प्रचक्षते ज्ञानिनः। तस्मादिमं

तीर्थं वन्दस्व, अत्रैव प्रथमद्वादशद्वाविंशचतुर्विंशांस्तीर्थकृतोविहायाऽन्येविंशतिजिनेन्द्रा मोक्षगामिनः। अत इदं पुण्यतमं क्षेत्रमस्ति यतः—यत्र सिद्धिपदं यान्ति, केवलज्ञानधारिणः। तत्तीर्थक्षेत्रमित्याहुः, पवित्रं पापनाशकम् ॥ १ ॥

तेषु सप्तदशतीर्थङ्करा अद्ययावत्सिद्धिपदं प्राप्ताः, अवशिष्टास्त्रयः सेत्स्यन्ति। अथाग्रे गच्छन्ती वीरमती पुनस्तामवदत्—अयं वैभारगिरिरयमर्बुदाचलश्च विलोकनीयः। अनयोरपि जिनचैत्यान्यलौकिकानि नभस्तलं तोलयन्ति, दर्शनमात्रेण यानि जनमानसानि निर्मलीकुर्वन्ति। नभस्तलचारिणी सा कियन्तं प्रदेशमतिक्रम्य जगौ, भद्रे? अयं सिद्धाचलोगिरिर्मनोभीष्टजनको देवासुरमानवैरभिवन्द्यः, सकलतीर्थेष्विदं तीर्थं चूडामणित्वं वहति, दर्शनमात्रेणायं सिद्धगिरिः पापपुञ्जं प्रणोदयति, अत्रागता भव्या भवभ्रमणविरतिं भजन्ति तत्र किमाश्चर्यम्? अस्मिन् गिरिवरे ऋषभजिनेन्द्र एकोनशतपूर्वकृत्वः समवासार्षीत्। अपरेऽनन्तमुनिवराश्चात्र तीर्थे सिद्धिं गताः। अनन्ताश्चमुनयो मनोविकारगिरिकुलिशायमानं केवलज्ञानमासेदुः, अस्य तीर्थस्य बहुशः उद्धारा जाताः। तत्र प्रथमोद्धारकर्त्ता भरतो द्वितीयो दण्डवीर्यनृपस्तृतीय ईशानेन्द्रश्चतुर्थो माहेन्द्रः पञ्चमो ब्रह्मेन्द्रः षष्ठो भुवनपतीन्द्रः सप्तमः सगरचक्र्यष्टमो व्यन्तरेन्द्रो नवमश्चन्द्रयशा दशमश्च चक्रायुध इति महोद्धारकारका दशैव जज्ञिरे। एवमग्रेऽपि तादृगुद्धारकारका रामचन्द्रादयो भविष्यन्ति, इदं महातीर्थं त्रिकरणशुद्ध्या वन्दस्व, यतश्चेयं तीर्थभूमिर्भववारिधौ निमज्जतां देहिनां प्रवहणसमा समादिष्टा। तथाहि—

विभवसिद्धिदं क्षोभहारकं, सुगममन्वहं शुद्धचेतसाम्। भज भयापहं सिद्धभूधरं, सुरगणस्तुतं भानुभास्वरम् ॥ १ ॥

तथाच—विमलभूभृतं संभृताऽऽदरा—हतभवादरं कर्मवारकम्। जनमनोहरं दिक्प्रभाकरं, स्मरहरं स्मरन्त्वेनमवरम् ॥ २ ॥

सुभगे ! तस्मात्तीर्थवन्दनं प्रथमं विधेयं सुधीभिः,—

यतः—कामितानिहि सिध्यन्ति, तीर्थवन्दनकारिणाम् । इहाऽमुत्र सुखं यान्ति, देहिनस्तीर्थभाविताः ॥ १ ॥
देवा अपि नमस्यन्ति, तीर्थानि विमलान्यहो । केवलज्ञानिनो यत्र, भवन्ति मोक्षगामिनः ॥ २ ॥

इत्थं सिद्धाचलयात्रां भवभयक्षोभयित्रीं विनिर्दिश्य सत्वरं जिगमिषुर्वीरमती वर्त्मनि समायातं रैवतकं गिरिवरं प्रत्यक्षीकृत्य बभाषे, सुशीले ! रमणीयतरमिममुज्जयन्तं विलोक्य निजनेत्रसार्थकत्वमवाप्नुहि, अस्मिँस्तीर्थे राजुलभर्त्ता श्रीमान्नेमिजिनेन्द्रो मुक्तिवधूं वरीष्यति, इदं तीर्थमपि सिद्धाचलसमानमेव निगद्यते, अयं गिरिराजः सिद्धगिरेः पञ्चमं शिखरं कीर्त्यते । अस्मिँश्च सानुनि यत्र गजचरणोविलग्नस्तत्र गजपदनामाकुण्डः प्रसिद्धिं गतः । एवमनेकानि तीर्थानि प्रदर्शयन्ती वीरमत्यग्रे व्रजन्ती सर्वतश्चक्षुः प्रसार्य प्रोवाच, गुणावलि ! इमं जम्बूद्वीपं परितो वेष्टयित्वा वलयाकृतिर्लवणाब्धिर्विराजते । स च द्विलक्षयोजनविस्तृतस्तटप्रदेशादनुक्रमेणाधिकाऽधिकामगाधतां बिभर्ति, तथैव तज्जलमप्युन्नतिभावमावहति, मध्यभागे दशसहस्रयोजनं यावत् सहस्रयोजनमगाधस्तत्र च वारिशिखा षोडशसहस्रयोजनमूर्ध्वभागे समुच्छलति, तदुपरि क्रोशद्वयप्रमितं वेलाजलं वर्द्धते । अस्य क्षारोदधेर्मध्यभागे चतुर्दिक्षु दशसहस्रयोजनमुखाः सहस्रयोजनस्थूलदलाः अगाधत्वे लक्षयोजनप्रमिताश्चत्वारः पातालकलशाः स्थिताः । तेभ्यो घनवाततनुवाता ऊर्ध्वगामिनो निःसरन्ति, तेन वारिशिखोच्चैः प्रसरति, तद्रोधनाय बहवो देवा दारुहस्तान् गृहीत्वा सदैव तिष्ठन्ति, इमे सर्वे भावाः शाश्वतिकाः प्रकीर्त्तिताः । एवं मिथो वार्त्तां कुर्वन्त्यौ श्वश्रूवध्वौ विमलापुरीं निकषा जग्मतुः । सहकारकोटरस्थश्चन्द्रराजोऽपि सर्वसमृद्धिं विलोकमानः प्रमुदितमनास्तत्संगतिप्रभावं बहुमेने ।

गुणावलीराज्ञ्या तत्र नवपल्लवकुसुमितं सुरपतिसेवितं नन्दनवनमिव मनोहरमेकमुपवनं ददृशे, परमप्रमोदं च मेने। चन्द्रोऽपि नारीचेष्टां निरीक्ष्य निजचेतसि चमत्कृतिं प्राप। अस्मिन्नुद्याने नवपल्लविता आम्रतरवः प्रतिस्थानं छायादानं वितरन्ति, पिचुमन्दकदम्बजम्बुमुनिद्रुमतालतमालनागपुन्नागप्रियंगुमधुकन्यग्रोधादिपादपैर्विभूषितमिदमुपवनं समस्तजनश्लाघनीयं विद्यते, अन्यच्च नवमल्लिकाचम्पककेतकीकुन्दप्रफुल्लवल्लीवृन्दं विविधसुगन्धव्रातेन दशदिशः सुरभीकरोति, प्रकम्पितसरोजावलिः पवनः सर्वतोनिर्ववौ। राहुभयाद्भीतं भूमिगतं ज्योतिर्मण्डलमिव विशदकुसुमवृन्दं सुखदं रेजे, शशाङ्कप्रभयाभ्राजमानः सरोनिकरः पूर्णनिशाकरभ्रमं जनयति, सितद्युतिकरसोदराम्बुसंभृतावाप्योविमलापुर्याः स्वकीयकान्तिप्रकरविलोकनाय मुकुराइव विभान्ति। ततोऽत्यद्भुतस्वरूपां नगरीं विलोकयन्ती गुणावली भृशं मुमुदे, सा च नगरी निजसंपद्भिः कैलासरोहणाचलं हसतीव विलोक्यते, प्रकटितदीपश्रेणिभिः प्रासादैर्दीप्यमानां नगरीं निरीक्ष्य गुणावली पृच्छतिस्म, मातः! दीव्यवैभवा केयं गरीयसी नगरी पुरुहूतपुरीं हसति? वीरमती प्राह—इयमेव मनोरमा विमलापुरी, तावत्सहकारोऽम्बरतलान्नीचैरवतीर्य बाह्योपवने स्थितः। ततः श्वश्रूवध्वौ तस्मादुत्तीर्य तां नगरीं प्रतिजग्मतुः। चन्द्राजोऽपि तत्कोटरान्निःसृत्यालक्ष्यगमनस्तयोः पृष्ठे चलितः। विमातुरपूर्वमिदं विद्याबलं विलोकमानोऽप्ययं किञ्चिद्भयं न विवेद, विशेषविक्रमशालिनः सदैव निर्भयास्तिष्ठन्ति,

यतः—प्रतापोर्जितसत्त्वानां, भयशङ्का न विद्यते। न भयं भयमित्याहु–र्धर्मलोपो महाभयम्॥ १॥

अथ प्रमोदमेदुरमानसे श्वश्रूवध्वौ दत्ततालमग्रे जग्मतुः, नगरद्वारं समागतम्, उभे परितो वीक्षाञ्चक्रतुः, नगरान्तःप्रविश्यैतस्ततो गृहाट्टवीथिकात्रिकचतुष्कगजाश्वशालाद्यनेकपौरवैभवं गुणावलीं दर्शयन्ती वीरमती लग्नमण्डपं प्रस्थिता, तत्र हि

वारयोषितां विविधगीतनृत्यैः सह वाद्यध्वनयोजनमनांसि मोदयामासुः, सधवयुवतिवृन्दश्च धवलमङ्गलानि जगौ, इत्यनेकशोभावीक्षणोत्सुकचेतसावुभे वरघोटक इदानीमत्रैव समेष्यतीति विदित्वैकस्मिन् स्थाने तस्थतुः। इतश्चन्द्रराजोऽपि नगरचर्चानिरीक्षणोत्सुको गोपुरमाससाद।

इतिश्रीजगद्विभूषणशासनचक्रवर्त्तिस्वपरसमयपारगामितपागच्छनभोमणिप्रबलतरपुण्यप्रकाशकपूज्यपादमहोपकारिप्रातःस्मरणीययोगनिष्ठाऽध्यात्मज्ञानदिवाकरश्रीमद्बुद्धिसागरसूरिपुङ्गवशिष्यश्रीमद् अजितसागरसूरीश्वरविरचिते संस्कृतगद्यपद्यात्मके श्रीमच्चन्द्रराजचरित्रे चन्द्रजन्म वीरसेनदीक्षा विरमतीविद्याप्राप्तिवधूविप्रतारणवचनरचनाविमलपुर्यागमनरूपाभिराभिश्चतसृभिः कलाभिः प्रथिते प्रथमोल्लासे दशमः सर्गः समाप्तिमगमत् ॥ १० ॥ खण्डश्चायमाद्यः समाप्तः ॥ १ ॥

## ॥ अथद्वितीयोल्लासः ॥ २ ॥

शान्ताऽशिवं शान्ततमोवितानं, निशान्तमाद्यं सुखसन्ततीनाम् । जगद्विभुं षोडशतीर्थनाथं, नमामि पीयूषरसप्रदं तम् ॥ १ ॥

श्रीमच्चन्द्रनरेशस्य, चरित्रे रसदायिनि । सर्वशीलकलोपेतो–द्वितीयोल्लास उच्यते ॥ २ ॥

चरित्ररचनाऽपूर्वा, रचिता यत्नपूर्वकम् । यदा गुणिगणग्राह्या, भवत्येव फलेग्रहिः ॥ ३ ॥

जगत्यशेषवाचोऽपि, हारिण्यो विविधाः कलाः । पयस्विनीसहस्रेषु, कामधेनुः प्रशस्यते ॥ ४ ॥

ताम्रमेति सुवर्णत्वं, रसमासाद्य सत्वरम् । वचनं रसिकं तद्व–द्विरसेषु रसप्रदम् ॥ ५ ॥

सुभाषितं मनोहारि, वचनं विशति क्षणात् । विरसानामपिस्वान्त–गुहायां मोददायकम् ॥ ६ ॥

मिष्टस्निग्धरसोदग्रं, प्रबन्धं चन्द्रभूपतेः । सभ्याः शृण्वन्तु सप्रेम, चमत्कारमहालयम् ॥ ७ ॥

॥ अथ चन्द्रराजःपुरं प्रविश्य यावत्प्रथमांप्रतोलींप्राविशत्तावत्तत्रस्थिता राजसेवका अभ्युत्थाय विधिवत्प्रणामश्चविधाय प्रोचुः, चन्द्रराज ? विजयस्व, स्वागतंतेऽस्तु, गुणरत्नानांत्वं करण्डकोऽसि, भवदागमनेनवयमद्यकृतार्थाजाताः, युष्मद्दर्शनेनास्माकंमहानन्दोऽजनि, प्रतिपच्चन्द्रमिव त्वदागमनंप्रतीक्षमाणावयमत्रस्थिताः । इदानीमस्मास्वनुग्रहं विधाय सिंहलपुरस्वामिनः कनकरथनृपस्य सान्निध्यंभजस्व, चरणविन्यासेन तत्सदोगृहश्च पवित्रीकुरु, इतितत्सेवकजनोदितसुभाषितंसमाकर्ण्यचन्द्रश्चेतसि व्यचिन्तयत्, अहोकिमेतत् ? परचित्तवेदिभिरिवैतैरहंकथं विज्ञातः ? किंवानामसादृश्येन मामेवमवादिषुः, अपरंचन्द्रंप्रतीक्षमाणा

इमेऽत्रस्थिता इतिसंभाव्यते, इति स्वचेतसि निश्चित्य श्रीमानाभापतिश्चन्द्रःप्रोवाच, रे प्रतीहार ! चन्द्रराजःकोऽत्रविद्यते ? चन्द्रस्तु नभस्युदितोनापरो दृश्यते श्रुतश्चेन्निवेद्यताम्। भ्रान्तचेताभवान् विभाव्यते, मां मुधा मा रुन्धि, बलात्कोऽपि न निगृहीतव्यः। ततः साञ्जलिः प्रतीहारः प्रोवाच, चन्द्रभूप ! निजात्मानं कथं गोपयसि ? प्रच्छन्नंरत्नंकियत्कालंस्थास्यति ? अखिलभूतलंप्रदीपयन्नुद्यन् दिनमणिर्वंशपात्रेणाच्छादितः किं तिष्ठति ? कस्तूरिकामोदःशपथेन किम्नु निवार्यते ? त्वमेवचन्द्रराज इतिसत्यंजानीमहे नाऽत्रसन्देहः, न वयमज्ञतया ब्रूमहे। इत्यभिधाय चन्द्रराजंहस्ते गृहीत्वातत्रतेऽस्थापयन्। चन्द्रराजस्ताञ्जगाद, रे दूताः ! बालिशवत् कथंमांवल्गथ ? नाऽयंदूतानामाचारः, दूरतः स्थित्वावार्त्ताविधत्त नैशिकदोषेण किं भ्रान्तिमापन्नाः ? वहिः सुप्ताइवयूयंमुखमुद्रयालक्ष्यध्वे, येनेत्थंविवेकशून्याजाताः, तस्माद्रे मूर्खा ! असदाग्रहं विमुञ्चत, (भ्रान्तिमापन्नोविवेकवानपिनष्टमतिर्भवत्येव, ) अस्मिन्भुवने चन्द्रसमानमुखाकृतयोऽनेकपुरुषाः स्थिताभविष्यन्ति, नजाननीथैवं यत्स्वाभिधेयं कोविज्ञो गोपयेत् ? हेतुमन्तरावृथाकण्ठशोषणं कःकुर्यात् ? अस्मिन्गोपुरद्वारे प्रवेशशुल्कंलगति चेन्निवेदयत, तद्दत्त्वाऽहंसुखेनव्रजामि, एवं राजकरप्रदानेन कोदुर्बलो भवति ? युष्मान् प्रतार्य प्रयातुं नेच्छामि, मां मुधा कथं रुणद्ध ? प्रतीहार ? तव ग्राह्यंद्रव्यं यथेच्छं गृहाण, मदीयामातामद्वियोगमसहमानामद्दर्शनकाङ्क्षिणीभविष्यति, यतोऽरण्ये मे बहुसमयोव्यतीतः। प्रतीहारः प्राह स्वामिन् ? भवदीयपत्तनमितोऽष्टादशशतक्रोशंदूरेवर्त्तते, कुतोऽत्रत्वत्प्रतीक्षाकारिणी जननी ? मुग्धप्रतारिणींविद्यांविमुञ्च, मह्यं मा क्रुध्यस्व, भवादृशा यदि वितथवादिनस्तदेयं भूमिःकथंभारंवक्ष्यति ? पर्जन्यश्चकथं वर्षिष्यति, वयन्तु भवद्विधानां क्षितीशानामनुयायिनः स्मः। तस्माद्भवद्वृत्तान्तं सकलं जानीमः, अस्मत्स्वामिनोभवद्भिः साकं महत्कार्यं विद्यते, ततोदीन-

वत्सलचन्द्रराज ? अस्मत्प्रार्थनां सफलीकुरु, प्रसन्नीभूय नृपास्थानं भूषयस्व, चन्द्रोमनसि व्यचिन्तयत्, अग्रे व्रजन्तीविमाता यदि मन्नाम श्रोष्यति तर्ह्यनर्थागमोभविष्यति, तस्मादत्रमौनमाधायाधुना गमनमेव वरमितिकृतनिश्चयश्चन्द्रस्तैः साकं चलितः। अथाग्रे व्रजँश्चन्द्रराजः प्रतिपदं राजसेवकैरन्यजनैश्च प्रणम्यमानः सप्रतिहारोद्वितीयप्रतोलिकां प्रविवेश, तत्रस्थिता राजसेवकास्तथैव तंनत्वाव्यजिज्ञपन्, महाराज ! विजयस्व, ते स्वागतमस्तु, अस्मदधिपतिर्भवदागमनं प्रतीक्षमाणःस्थितः प्रकटितचक्ररत्नेन चक्रवर्त्तिमनोरथाइव भवदागमनेनास्मदीयस्वामिनः कार्याणि सेत्स्यन्ति, ततश्चन्द्रस्तानवादीत्। रे मुग्धाः, ? मां निरीक्ष्य चन्द्रराजं कथं शङ्कध्वम्। पीतकनकरसानामिव युष्माकं प्रवृत्तिर्दृश्यते, यूयं सर्वेचैकस्यां पाठशालायां शिक्षिता इव लक्ष्यध्वे, भवादृशैःसेवकैर्यःसेव्यते स नरेन्द्रोऽपि मुग्धमतिर्ज्ञायते, युष्माकं स्वामिनासह मे नास्ति संस्तवोयतो मदागमनेन तस्यकार्यसिद्धिर्भविष्यति, इदन्तु तृतीयंकौतुकमुपस्थितम्, युष्मदाचरणं धूर्त्तवत्प्रतीयते, युष्माभिरेतावानविवेकः कुतःशिक्षितः ? चन्द्रनामधेयं रटद्भिर्भवद्भिः कतमेजनावञ्चिताः ? इत्युपालब्धास्ते प्रोचुः, राजन् ! वयं सिंहलनरेशस्यानुजीविनः, सर्वे वयं ग्राहितैकसङ्केतास्तेन प्रतोलिकासु नियोजितास्तत्सङ्केतेनास्माभिर्विज्ञातं त्वमेव चन्द्रराजस्तेन त्वां नामोच्चारपूर्वकमाह्वयामः। त्वमपितथ्यवादं ब्रूहि, असत्योक्तिर्नात्रप्रमाणीभविष्यति, ततश्चद्रोऽवदत्, युष्माकं सङ्केतस्वरूपंकीदृशं तज्ज्ञापयत, अनुचरा जगुः पूर्वगोपुरद्वारे युष्माभिःस्थातव्यं तत्र त्रियामायाः प्रथमयामे व्यतीते द्वेस्त्रियौ समेष्यतः, तदनु चैकः पुमानेष्यति, स चन्द्रराजेति नामग्राहं युष्माभिर्वन्दितव्यः। समुचितसत्कारश्च विधाय मदन्तिके स समानेतव्यः, ईदृग्विधेन सङ्केतेन वयं प्रतिस्थानमुपविष्टाः। तथैव यामप्रमितयामिन्यां व्यतीतायां वामाद्वयं संगतम्, ततस्तन्मार्गानुयायी

भवान् नयनातिथीकृतः, अतोऽस्माभिर्विज्ञातं त्वमेव चन्द्रराजइति; तस्मादिदानीमस्मत्स्वामिनोनेत्रानन्दं विधत्स्व, तत्रभवद्भिरागन्तव्यमेव, नाऽन्यथा तव मुक्तिः। चन्द्रोबभाषे किं मे प्रयोजनंतत्र ? ते प्रोचुः, तत्कारणन्तु नरेन्द्रः स्वयमेव त्वां निवेदयिष्यति, वयंतु सन्देशमात्रहारिणः, राजन् ? "किं बहुना", अस्मादृशांसेवकजनानांलघुवचनैरपि महापुरुषा वशवर्त्तिनो न भवन्ति, गृहीतकर्णाः कुञ्जरा नात्मसमीपं नीयन्ते, तथाऽप्यस्मासु कृपां विधायास्मत्स्वामिनः समीपगोभव, पश्चाद्यद्रोचते तद्विधेयम्। इत्थं विज्ञाततद्वचनसारश्चन्द्रराजश्चिन्तयतिस्म, भृत्यहीनोऽहमेकाकी किं करोमि ? ससहायश्चेदेतान्निरा कृत्य यथेष्टस्थानं व्रजामि, अहोमहाकष्टम् ? पुरा मातृतोभीतिः प्रकटिताऽपरेयं राजतःसमुद्भूता, नाऽत्र कश्चिद्विश्रामस्थानम्। पत्तनश्चेदं परकीयम्। ग्राम्या इवैते दूता दुर्बोधाः। ततोऽत्रातिवाग्विवादो विफलः, सत्वरं नृपान्तिकेगत्वा कार्यतत्त्वंनिश्चिनोमि, अधुनाकालक्षेपो न विधातव्यः। यतोऽत्र विवादेन निवृत्तिर्नभविष्यति। इतिनिश्चित्य तेन कथितम्, भवतां वचनं मे मान्यतरम्। इतःसर्वे वयं व्रजामः, तत्र गत्वा युष्मत्स्वामिनं बोधयिष्यामि, ततस्तस्मात्स्थानात्सर्वे प्रस्थिताः, वर्त्मनि तत्तत्प्रदेशस्थिता आरक्षका मिलन्ति, तेऽपि भालस्थलनियोजिताञ्जलयश्चन्द्रराजायस्वस्तीत्युदितवाचःसहैव प्रयान्ति, एवं व्रजन्तस्ते सर्वे क्रमेण नरेंद्रद्वारमभ्ययुः, पुरैव निजानुचरैश्चन्द्रागमनवृत्तान्तं राज्ञे निवेदितं तेन तत्र महानानन्दःसर्वतः प्रसृतः। सिंहलराजेन विजयवाद्यान्यवाद्यन्त, चन्द्रराजं जयध्वनिपूर्वकं ते राजप्रासादं प्रवेशयामासुः। सिंहलनृपतिस्तं दूरतः समागच्छन्तं विलोक्य ससंभ्रमं त्यक्तविष्टरः कतिचित्पदानि संमुखंगत्वा समाश्लिषत्। अवदच्च—वीरसेनान्वयनभश्चन्द्र-श्चन्द्रराज ! तवाऽस्तु स्वागतम्, भवद्दर्शनेनाऽद्य महानानन्दोऽस्माकमजनि, पुरार्जितानि सुकृतान्यद्यफलितानि, भव-

दर्शनोत्कण्ठितं मे मानसमद्यैवशान्तम् । शरीरमात्रेण दूरस्थितोऽपि भवान्मदीयहृन्मन्दिरं नात्याक्षीत् । दूरयायी प्रभाकरः सरोजजातमिव श्रुतपूर्वस्त्वद्गुणव्रातोभृशमस्मात्रञ्जयतिस्म, अवदातगुणाः सद्विद्याश्चसुगुप्ता अपि स्वयमेव प्रकाशन्ते;

यदुक्तम्—यदि सन्ति गुणाःपुंसां, विकसन्त्येव ते स्वयम् । नहि दिवाकरोद्योतः, स्थीयतेऽन्तर्हितः क्वचित् ॥ १ ॥

तथा च—वार्त्ता च कौतुकवती विशदा च विद्या, लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।

तैलस्यबिन्दुरिव वारिणि वार्यमाण–मेतत्त्रयं प्रसरतीति किमत्र चित्रम् ॥ १ ॥

राजकुमार ? अद्य साक्षात्त्वद्दर्शनोद्भूतोऽप्रमेयःप्रमोदोऽननुभूतपूर्वःप्रसादयतिमचेतः । मे मनोवाञ्छितश्चाद्यैवसफलंजातम्,

यतः—सर्वदा सुखदं लोके, यदिष्टंयस्य संमतम् । तदलाभेकुतःसौख्यं, लाभतस्तस्यकिंपुनः ॥ १ ॥

“ यो यस्य चित्ते न स तस्य दूरे ” इतिकेनचित्पठितं वाक्यं तत्सत्यं—प्रतीयते,

तथाचोक्तम्—चकोरस्य शशाङ्कस्य, मयूरवारिवाहयोः । महदन्तरमस्त्येव, सान्निध्यं स्नेहतः पुनः ॥ १ ॥

तस्माद्दूरस्थितमपि भवन्तमन्वहं स्मरता मया किमद्य नासादितम् ? प्राक्तनसम्बन्धभाजां यन्मिथःस्मरणं तत्र कोविशेषः ? सम्बन्धमन्तराऽपियोऽनिशंस्मर्यतेस मानवमणिःप्रशस्तिमर्हतिक्षीरोदधिशशाङ्कसम्बन्धोहिलोकविश्रुतः, सितेतरपक्षे निशामणिव्यसनोदयेक्षीरसागरःक्षीणोत्साह इव दुर्बलतां धत्ते, पूर्णेच निशाकरे कल्लोलकराऽभिनयेन नृत्यन्निव स तदाश्लेषसुखमनुभवितुमिवोर्ध्वं गच्छन्नभिलक्ष्यते । नृवरेन्द्र ? सम्बन्धेदूरतः सत्यपि शीतरश्मिरुद्यन्नेव कुमुदवनं प्रबोधयति, एवमनेकशोमायावचनैस्तं विलोभ्य सिंहलनरेशोनिजासनेऽस्थापयत् । स्वयञ्चान्यविष्टरे समारूढः । अहो ! सुकृतिनो

यत्र संचरन्ति तत्र निधानानि स्वयमेव प्रकाशन्ते, निःस्नेहानामपिप्राणतोऽप्यधिकतरास्तेवल्लभा भवन्ति, तत्प्रभावो-
भाग्यैकमूलः, भाग्यवतोव्यसनानि परित्यजन्ति, विपदोऽपि संपदायन्ते, देशान्तरेष्वपि तेषामुपद्रवा न भवन्त्येव,

तद्यथा—भाग्यं फलति सर्वत्र, नच विद्या नच पौरुषम्। समुद्रमथनाल्लेभे, हरिर्लक्ष्मीं हरोविषम् ॥ १ ॥

सुकृतशालिनां सर्वत्र सत्कृतिःसुलभा, दुर्लभा पुनरसत्कृतिः, यत्र पुण्यवतां सञ्चारस्तत्र पूज्यपूजाव्यतिक्रमोनिरास्पदः,
मायिनोऽपि निर्माया भवन्ति, कुटिलेष्वप्यकौटिल्यंसंमतंनीतिवेदिनामितिसदाचारः सुकृतप्रभावेणैव प्रतीयते। तस्मा-
त्सत्पुरुषमहिम्ना सकलसम्पदः सुस्था भवन्ति। अथसिंहलनरेशश्चन्द्रराजं प्रत्यवदत्, महाराज! सर्वथा तेऽनामयं कच्चित्?
स्वामिन्! त्वामन्तर्यामिनं जानामि, त्वमेवाऽस्माकं शिरोमणिः, नराधीश! चातकः पयोधरमिव वत्सश्चनिजमातरमिव
त्वद्दर्शनं प्रतीक्षमाणा मुहूर्त्तं संवत्सरं जानन्तोवयं स्थिताः। अद्यदिनं श्रीमतां समागमनेन सुदिनं जातम्। सत्पुरुषाणां
समागमः पुण्यबलेनैवावाप्यते, अहो? सतां दर्शनं सुकृतं जनयति, दूरयतिच दुरितानि, वयमत्र युष्माकं प्रतिपत्तिं किं
कुर्मः! यतोदातृगणलब्धप्रशस्तयोभवन्तोजगत्त्रये संभावितकीर्त्तयः श्रूयन्ते, युष्मदन्तिकेऽस्मादृशां का गणना! तथाप्य-
स्मदीयनिकेतनं यदा पावयिष्यध्वं तदा वयंग्रामनगरादिकोपचारेणत्वदुपचितिंसंपादयिष्यामः। इदानीं देशान्तरस्थिता वयं
सर्वे समानस्थितिकाः। अत्र तु दीनवत्सा काचिज्जननी तस्मिंस्तुष्टा वाङ्मात्रेण वात्सल्यं दर्शयति तथा वयमपि प्रणिपातेन
त्वत्सेवाभक्तिकुर्मः। योग्यावसरे वयं निजकर्त्तव्यविमुखा न भविष्यामः। इत्थं सिंहलराजवचःप्रपञ्चं समाकर्ण्य चन्द्रराजः
प्राह, नराधीश! चन्द्रराजभ्रमेण किमेवं मुधा मां सत्करोषि? नाहं चन्द्रराजः, अहन्त्वेकाकी देशान्तरनिवासी तवातिथ्यं

प्राप्तः, त्वं पुनर्महानराधीशोभूत्वाऽतिदक्षोऽपि भ्रान्तचेताः किमेवमज्ञसरणीमनुसरसि ! न ह्यावयोः कदापि संसर्गोजातः, पूर्वाशापतिश्चन्द्रः प्राच्यामुदेति, अहन्तु चत्रकुलप्रसूतः, सत्यप्येवं स्वार्थमन्तराजानन्नपित्वं मृषावादं कथं प्रवर्त्तयसि ! मृषोक्तिर्वक्तृश्रोत्रोरुभयोः क्षयकारिणी, चन्द्रराजकल्पं मां निरीक्ष्य नूनं भवतां भ्रमः समुत्पन्नः । नरेश्वर ! अस्यां संसृतौ-समानाकृतिरूपाश्चनेके नराद्दृश्यन्तेपरन्तुतस्मिँस्ताद्दग्गुणदर्शनमन्तरा न प्रमोदितव्यम्, विशेषतः परीक्ष्यैव प्रवर्त्तितव्यम्—

यदुक्तम्—सुजीर्णमन्नं सुविचक्षणः सुतः, सुशासिता स्त्री सुनिरीक्षितोऽर्थः ।
सुचिन्त्य चोक्तं सुविचार्य यत्कृतं, सुदीर्घकालेऽपि न याति विक्रियाम् ॥ १ ॥

सहसा विदधीत न क्रिया—मविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव संपदः ॥ २ ॥

तस्मात्तत्त्वबुद्ध्या विचार्यैव प्रवृत्तिर्विधेया, सादृश्यज्ञानेन न भ्रमितव्यम् । समानरूपयोर्घनसारलवणयोर्गुणे कियदन्तरं दृश्यते; ! तथैव मरालबकोटकौ शुक्लत्वेन समानौ दुग्धजलविभेदसमये तौ विभिद्येते, एवं कोकिलवायसौ तुल्यरूपावपि वसन्तोदये "काकः काकः पिकः पिकः," तस्माद्यूयं विमूढतां मा श्रयत, मे प्रयाणं दत्त, येनाऽहं निजकार्योद्यतोभवामि, ततः सिंहलाधिपतिर्जगौ, राजन् ! मृषावाचा मा वञ्चयाऽस्मान्, सत्यं ब्रूहि, सज्जनाः प्राणात्ययेपिमृषा न जल्पन्ति, त्वमेव चन्द्र-राजइत्यस्माकं वेदनंसत्यमेव, सत्पुरुषा निजचर्यया प्रच्छन्ना न तिष्ठन्ति, हठाद्वारिणि निमज्जिताऽपि तुम्बिकोपर्येव समायाति, उत्कटसौरभ्या कस्तूरिका यदि निजरूपं गोपयति तथापि तद्गुणास्तां प्रकाशयन्ति, युष्मदागमनसमयं प्रतीक्षमाणा वयमत्र चिरंस्थिताः, तथैव त्वयाऽस्मन्मनोरथपादपः सफलीकृतः, तस्मादिदानीं निजाभिधानं प्रकटीकृत्यास्माकं कार्यं निष्पादय, किंबहु-

क्तेन ? एवं तयोर्विवदमानयोर्हिंसकनामा सिंहलराजमन्त्री तत्र समागतः, सच महाकपटकलाकुशलः कुटिलनरनायकः कदाग्रहकुग्रहग्रस्तमानसोदुर्मतिशिरोमणिरेव न, किन्तु–असत्यवचनश्चैष वदत्येव विशेषतः । परानर्थविधौ दक्षोविपक्षः सत्यताविधौ ॥१॥ किञ्चैष यत्र वारिणः सद्भावं कथयति तत्र पङ्कस्याऽप्यसंभवः । आसूर्योदयमस्तपर्यन्तमसत्यरतोऽसौ तदसत्यवादमेव सदाचारं मनुते । तादृक्स्वभावोऽपि स तत्र समागत्य चन्द्रराजं नत्वोचितस्थाने चोपविष्टोनिजकलांप्रसारयितुं प्रारभत, प्रमुदितवदनश्चन्द्रराज ! भवतामागमनेनायंवासरोऽस्माकंमहोन्नतिंजनयति, इदानीमप्रतिहतशासनस्यास्मन्नरेशस्याभ्यर्थनां कुतोऽवधीरयसि ? विद्वन् ! विमूढवर्त्मानुयायी मा भव, अतिसर्वत्र वर्जयेदितिनीतिवाक्यमनुस्मरन् निजकदाग्रहं विमुञ्च, इत्थमसत्यवादिनस्तव कुलादिगोपनेन महाक्षतिर्भविष्यति, किमिमान्सर्वान्मातृमुखाञ्जानासि ? यदेवं मुधा वादेनाऽस्मान् वञ्चयसि, सत्यवादिनोवयं न वितथवादं वक्तुंजानीमः, अतोवितथवादंत्यक्त्वा निजस्वरूपं सम्यक् प्रकाशय, अस्मत्प्रार्थनाञ्च स्वीकुरु, इदानीमस्माकं सन्निधौ समागतोऽसि, अस्मदनुशासनंविना कथमन्यत्र गमिष्यसि ? अस्मन्मनोरथंपूरयित्वा सुखेन प्रयाहि, अस्मत्स्वामीचाधुना त्वदायत्तोऽस्ति, हे नृपते ? अस्मद्वाञ्छापूरकस्त्वमेवाऽसि, त्वयि दृष्टेऽस्माकं सर्वसिद्धयः सञ्जाता इति मन्यामहे, अज्ञानतिमिरोपहता वयमित्थंब्रूमह इति भवता न मन्तव्यम् । देवीवचनेन त्वां चन्द्रराजंविद्मः, तस्मादधिकाग्रहेण सृतम् । यतोविभावरी गतप्राया दृश्यते, कार्याणितु विपुलानि साधितव्यानि, नभोगतं मृगशीर्षमण्डलमपि निशाशेषंद्योतयदूर्ध्वमायातम् । वयमपि परुषाक्षरैस्त्वामुपदेष्टुमप्रभवः, यतोऽस्मदीयाकार्यनिष्पत्तिस्त्वय्यवतिष्ठते, तस्मादधिकाकर्षणेन दृढमपि त्रुट्यतीतिविदितवत्त्वेनत्वया स्वीकृतंपरिपालनीयमित्यसदाग्रहंमुक्त्वा निजस्वरूपं प्रकाशय, येनास्मदीयंसङ्कल्पंवयंनिवेदयामः । विज्ञाततद-

भिप्रायेण चन्द्रेण विचिन्तितम्, केनाप्युपायेनायमस्मादुराग्रहान्नविरंस्यते, इतिसंप्रधार्य तेन निगदितम्, नरदेव ! चन्द्रराजेन किं कार्यं भवताम् ! किमस्मिन्भूतले तादृशा अपरे नरवीरा न सन्ति ? यतस्तदपेक्षांकुरुध्वे, राजन्आभापुर्यां मे निवास इति सत्यं जानीत, यदाभापतिना तव कार्यं तत्कर्त्तुमहं समर्थोऽस्मि, तस्मात्सुखेन निवेद्यताम् । इति तदुक्तां गिरंनिशम्य भृशं-मुदितः सिंहलराजोऽयमेवचन्द्रराजइतिविदित्वा सद्यो रोमाञ्चितवपुरभवत्, ततोहिंसकेनापि स भणितः, स्वामिन् ! इदानीं निश्चिन्तोभव, अयमाभापतिरस्मदीयचिन्तामुन्मूलयिष्यति, चन्द्रराजोयन्नजानाति तत्किमपि नास्ति, तस्मादिदानीं लज्जांविहाय यत्कर्त्तव्यं तदस्मै निवेदय, यतोलज्जावतां कार्यसिद्धिर्न जायते, उक्तंच—

आहारे व्यवहारे च, त्यक्तलज्जः सुखी भवेत् । लज्जापाशमपाकृत्य, नीतितः सुखिनो जनाः ॥ १ ॥

अथ चन्द्रराजश्चेतसि व्यचिन्तयत्, किमिदंसचिवाधमोवदति ? तद्रहस्यं ज्ञातुमशक्यम् । तच्च मत्तःसेत्स्यति न वा ? किञ्चाधुना पारवश्यं प्रपन्नोऽस्मि, इदंसर्वं धूर्त्तयूथंमिलितम्, अतस्तद्वचनप्रपञ्चस्तुमया श्रोतव्यः. अन्यथा मे मुक्तिर्नभविष्यति, इतिचिन्तार्त्तमानसं चन्द्रराजंविदित्वा सिंहलराजोवभाषे, नररत्न ! मुधा विकल्पजालं मा कुरु, न वयंधूर्त्ताः येनत्वां वञ्चयितुमस्माकमुपक्रमोभवेत् ? भवानेवंविपरीतशङ्कांकथंकरोति ? परोपकारैकरसिकंपुमांसंकाचिदेव जननी जनयति, " परोपकाराय सतां विभूतय " इति परोपकृतिरेव परमंतत्त्वम्, परोपकृतिनः पुनर्दुर्लभाः । यदुक्तम्—

द्वौ पुरुषौ धरति धराऽथवा द्वाभ्यामपि धारिता धरणी । यः परकार्येपुरतो—यश्चोपकृतं हि जानाति ॥ १ ॥

नराधीश ! गभस्तिमान्किमु प्रत्युपकारापेक्षया जगदिदमुद्योतयति ? ऋतुप्रभावाद्विविधफलपुष्पाणिददद्भ्योऽवनिरुहेभ्यः

कोऽपि किं मूल्यंवितरति ? पूरिताऽशेषमनोरथस्य चिन्तारत्नस्य प्रत्युपकारंविधातुंकःप्रयतते ? विरसतृणादिनीनामपि दुरन्त-दुःखभाजांगवांगुणगौरवंकोजानाति ? सततंवहमानाःसरितःकोनियोजयति ? तथैव महोपकारकरणे गृहीतव्रतानांभवद्विधानांदर्शनंदुर्लभंमन्ये, इतिप्रार्थयन्नृपतिस्तन्महिषी, तयोःसूनुः कुष्ठाभिभूतः कनकध्वजो, हिंसकमन्त्री, कपिलाधात्री षष्ठश्चन्द्रराजस्तत्पञ्चेन्द्रियविराजितंमानसमिव स्वयं रेजे, तदा चन्द्रेण सिंहलाधीशोवभाषे, नरदेव ! अभेदभावेन स्वमनोवृत्तान्तंप्रकटीकुरु, गूढवाक्यार्थवेदनेऽहमप्रभुः, पश्चाऽपियूयंभृशंचिन्ताकुला लक्ष्यध्वे, बाह्यतस्तु विवाहमहोत्सवः प्रारब्धः, ततोयथास्वरूपंवृत्तान्तंमे निवेद्यताम् । येनाहं तन्निर्णीय भवच्चिन्तां निराकरोमि, आनिशान्तमाभापुर्यां मे गन्तव्यमस्ति, मन्नामगोत्रादिकं कुतोविज्ञातंयुष्माभिः ? मया किंकार्यंविधातव्यमिति निजेच्छया विज्ञाप्यताम्, नाहमतीन्द्रियभावान् वेद्मि, यतोयुष्मन्मनोगतंजानामि, इतिचन्द्रराजगिरंसमाकर्ण्य सिंहलराजसमादिष्टोहिंसकः प्रोवाच, महाराज ! अस्माकं पालने कार्यविधाने च भवानेव समर्थः, ततोऽस्मदाशावल्लीविताने जीमूतायमानंमानवरत्नंत्वामेव मन्यामहे । अस्मन्मनोरथलताया आधारस्त्वमेवाऽसि, त्वदपरोऽस्माकं शान्तिसाधकश्चिन्तानिवर्त्तकोकोऽपि नाऽस्ति, अतस्त्वत्तः किं गोपनीयमस्माकम् ? तक्रार्थिनो भाण्डगोपनेन कथं तल्लाभः ? पादयोः किङ्किणीव्रातं निवध्यनर्त्तक्या मुखावगुण्ठनमनर्हमेव, सेवकत्वमङ्गीकृत्य स्वामिसेवा विधातव्या, तत्र त्रपाविधानेन किंफलम् ? तस्माल्लज्जां दूरतोविहाय प्रस्तुतंनिवेदयामि, राजन् ? महौजसोऽस्य देशस्याधिपतेः सुता प्रेमलालक्ष्मीर्विद्यते, तां च यथाऽस्मत्स्वामितनुजःकनध्वजःपरिणयेत्तथा त्वया निष्पादनीयमित्येवकार्यमस्माकंविद्यते । कृपासिन्धो ! भुवनविदितस्त्वं परोपकृतिरसिकोऽसि, अतोऽस्मदीयं कार्यं विनिवृत्य कृतकृत्योभव, ततश्चन्द्रराजोवदत्, मन्त्रिपुङ्गव ! विगर्हणीयमिमं-

मिथ्याभिशंसिनोधृष्टा–निन्द्यकर्मानुसारिणः । इहैव दुःखिता यान्ति; परत्र परमापदम् ॥ १ ॥

वितथवादंकथंवदसि ! प्राणसंशयेऽपि सज्जना मृषावचनंनोद्गिरन्ति, यतः—

तथैव श्रुतपूर्वंमया प्रेमलालक्ष्मीः कनकध्वजंपरिणेष्यतीति विज्ञाय तन्महोत्सवंप्रेक्षितुकामोऽत्र समागतोऽस्मि, किञ्च प्रेमला-
लक्ष्मीः कनकध्वजंवरीष्यतीति सर्वजनविदितं तर्हि तत्पाणिग्रहणे तस्य का क्षतिः ? मच्छिरसि मुधाभारंकुतः क्षिपसि ? मन्त्री जगाद
प्राक्तनकुकर्मोदयेनायंराजकुमारःकुष्ठीजातः, इदंवृत्तान्तंसर्वथा गोपनीयम्, पूर्वार्जितकर्मणा तयोर्विवाहसम्बन्धोजातः, अधुना कु-
ष्ठिना तेन तस्याः कथंपाणिग्रहोविधीयते ? अतस्तत्कार्यंतत्प्रतिनिधीभूय त्वयैव विधातव्यम् । प्रचण्डवायुवशाद्वार्धिमध्यगतंप्रवहणं-
तदुपकण्ठमानेतुंभवादृक्षोदक्षनेताऽपेक्ष्यते, अन्यथा तदुद्धारोदुर्लभः । साम्प्रतंसिंहलराजलज्जा त्वया रक्षणीया, चन्द्रोऽवादीत्
एवंराजकुमारःकुष्ठी तर्हि प्रथमतोयुष्माभिर्विवाहःकथंस्वीकृतः ! राजकुमार्या युष्माकं किं वैरमाचारितम् ! येनैतां कुष्ठिनासह
यूयं विवाहयितुमिच्छथ, पुनःसर्वे सम्भूय तस्या जन्मसुधाकर्त्तुंकुतःप्रवृत्ताः ! ईदृशमवद्यंकर्म जगत्प्रभुःकथंसहिष्यते ! पुनर्मकर-
ध्वजनृपसुतामेतामुद्वोढुमहं न शक्नोमि, तादृशीयोग्यता मयि कुतःसंभाव्यते ! तत्राऽपि तांपरिणीय पश्चात्तुभ्यमर्पयामीति सर्व-
थाऽसंभाव्यमेव मन्ये, ततस्तेन रहसि नीत्वा हिंसकोऽभाणि, इदमसज्जनकर्त्तृकंकार्यंमदग्रे त्वया नोच्चारणीयम्, अस्माकंसमा-
गमोऽद्यैव प्राथमिकोजातस्तत्राऽप्येवंविधोपद्रवो युष्माभिः कथंप्रारब्धः ? मन्त्रीश ? ईदृगसज्जनोचितंदुर्वृत्तान्तंकथयितुं किं न
जिह्रेषि ! विहितेऽप्येतस्मिन्कर्मणि किमपि सुखं न लप्स्यते युष्माभिः । ईदृग्विधंसुरूपंकन्यारत्नंकुष्ठिनासहपरिणाययितुंयुष्मदुद्योगः
सर्वथाऽनर्थसूचकोदुरन्तश्च । तस्मादिमंविवाहंविमुच्य निवृत्तिंयूयंभजत, इदंनिन्द्यंकार्यंत्यजत, युष्माकं कोदेशः ! कस्मिन्पत्तने

भवतांनिवासः ? अयमनुचितसम्बन्धश्च कथंसञ्जातः ? तदेतत्सकलमुदन्तमामूलचूलंनिवेदयत माम्, ततोऽहं भवदनुकूलंविचारंविधास्ये, इति चन्द्रराजकथितंसापेक्षितंवचनंनिशम्य हिंसकःसंक्षेपतोनिजवार्त्तांवक्तुंप्रारभत, ॥

इति श्रीचन्द्रराजचरित्रेद्वितीयोल्लासेप्रथमः सर्गः ॥ १ ॥

सिन्धुनामसरिद्वरायास्तटे सिन्धुनामादेशोऽस्ति, साऽऽपगाऽनेकधातुचित्रितशृङ्गमण्डितमहागिरेरुत्सङ्गान्निःसृत्य धरापीठमवतरन्तीक्षीरोदधिसङ्गमोत्सुकेवधावमानादृश्यते, तदगाधवारिप्रवाहेसर्वतोवम्भ्रमन्त्योऽनेकनौका जलधेर्दौत्यकर्मकारिण्य इव लक्ष्यन्ते, विनिवृत्तक्रोधादिवैरिवारास्तद्देशवासिनः सरलस्वभावा धर्मकर्माणि समाराधयन्ति, तत्प्रभावेणैव तत्रत्यःसागरोऽपि मिष्टजलोविभाति, तत्र च मुख्यतया सिंहलाभिधाना नगरीसमस्ति, या च निजर्द्धिप्रभावेण निर्जितामरपुरीविभवा, मणिप्रकरकपिशीर्षकाऽम्बरतलचुम्बिवप्रवलयेन समूढनभोलक्ष्मीरशनाकलापलावण्या, परिखीकृतसागरान्तःपतितोष्णरश्मिबिम्बेन कलितोद्धतार्चिर्मालातिभासमानवडवाग्निविभ्रमा, अभ्रंलिहाभिर्जिनभवनशिखराग्रविभ्राजमानामानसौवर्णकलशावलीभिरपन्हुतदिनमणिमण्डला, चञ्चत्कान्तिनिशाकरकान्तोपलनिबद्धनिकेतना निशि निशापतिरश्मिसन्तत्या प्रणालिकाःपूरयद्भिःपयोभिर्वर्षासमयंग्रीष्मेऽपिव्यञ्जयन्तीवविभ्राजते, पुनर्यस्यां कोटीश्वरप्रासादकोटीविराजमानकेतुनिरुद्धसञ्चाराःसहस्रदीधितिरश्मयोविगतदोषा अपि सदोषा इव प्रवेशं न लभन्ते, कमलदलललितजललव इव तरलाऽपि कलिताऽनुरागा वास्तव्यगुणकलापसंदानितेव परमा रमा यां सदैकभावेन भजति । रङ्गदनेकतुङ्गतुरङ्गमप्रखरखुराग्रनिर्घातविधुरां यद्वसुन्धरां राजमार्गविसारिणःप्रकटितमदधाराःकूजल्लीनालिमालाःकरटिनःसदया इव करसीकरैःपङ्किलयन्ति । असङ्कीर्णविभ्राजचतुरशीतिविपणिकायां यस्यां

महेभ्याः प्रचुरं क्रयविक्रयव्यवहारंकुर्वते, भुक्तावशिष्टसुकृताःस्वर्गिणोयत्र लब्धजन्मान इव धनिका धर्मध्यानंविदधते, आजानुभुजदण्डालानितकमलावशश्चतुरङ्गचमूसञ्चारेण निरुद्धभूतलः, समरभूमौकर्णान्तमाकृष्टप्रचण्डकोदण्डकाण्डविसृष्टशरश्रेणिविखण्डितवैरिशिरःकमलैर्जयश्रीप्रवेशाय रचितमङ्गलोपचार इव, विमलकरकलितकरवालनिशितधारोदकेनाप्लावितभुवनभवनान्तरालभित्तिनिहितारिचित्रचरित्रः कुन्दोज्ज्वलयशोराशिभिर्धवलितदिग्वितानः प्रतापभानुनाऽजस्रमुद्योतितभूमण्डलो महोर्जितरूपविनिर्जितकन्दर्पदर्पो जयस्तम्भमिषान्नवकन्दलीकृतगह्वरीतलोऽखण्डितबलवातेन नामितामित्रपादपःकनकरथोभूपतिर्या प्रशास्ति, यस्य च शारदेन्दुवदना निःसीमरूपविभया विजितानङ्गगृहिणी कनकवतीनाममहाभाग्यवती दयिताऽस्ति, सा च पतिभक्तिमेव तत्त्वंविजानन्ती तल्लीनचेताःस्वप्नेऽपि नाऽन्यं स्मरति, तस्य भूभृतः सदा माननीयोहिंसकनामाऽहंसचिवोऽस्मि, राजकार्याण्यशेषाण्यहमेव चिन्तयामि, पीयूषवर्षिपयोधरमण्डला प्रकटितनित्याऽऽनन्दा नृपमान्येयंकपिला धात्री यं सदोपचरति, अस्यनरेन्द्रस्यराज्यवैभवंनिरीक्ष्य तनूकृतनिजर्द्धिस्मयोधनाध्यक्षोजिह्रेतीव, किञ्चास्मिन्गोप्तरि भुवंशासति कदाचित्कोऽपि दारिद्र्यदशां नावैति, तत्र विदितागमतत्त्वा विद्वांसोऽनेकशोनिवसन्ति, ये वादविद्याभिरताःपरवादिगणंविजित्य निजख्यातिंवितन्वन्ति, तत्र स्थिता निरवद्यभावाःशान्तचेतसःस्वधर्मनिष्ठा विमदाःप्रमदाः सततं यथासुखं विलसन्त्य उदितास्तमर्कं न जानन्ति, राजन्निदंसर्वतथ्यमेव मदुक्तंविजानीहि, भवदन्तिके किञ्चिदपि मे गोपनीयंनास्ति। अथैकदा कनकवती राज्ञी निजावासस्थिता पुत्रचिन्तां प्रापत्, हन्त विद्यमाना अपि श्रेयस्यो राज्यसंपदः पुत्रहीनाया मे निरर्थकाः। अहो! मन्दभाग्याया मे सन्ततिसुखंकुतःस्यात्। न मया तादृशानि सुकृतानि विहितानि, यतोऽहंपुत्रसुखभाजनंभवामि, इति

विचिन्तयन्ती नयनयोर्भाद्रपदंधारयन्ती सा भृशमुद्विग्नाऽभवत्, क्षणादविरलाश्रुप्रवाहेण हृदयस्थलीमप्लावयत्। सखीजनसुभाषितमपि श्रोत्रपुटयोस्तप्तत्रपुनिभं साऽमन्यत। असकृन्निःश्वासपरम्परां विमुञ्चन्ती सा वारिविरहंसेवमाना मत्सीव क्षणेन वित्रस्ताऽजनिष्ट—

यतश्चोक्तम्—संसारवर्त्तिनोजीवाः, प्रजालोकनवृत्तयः। प्रमदा निर्मदा येन, जायन्ते सूनुना विना ॥ १ ॥

तथाच—मूर्खस्य हृदयं शून्यं, शून्याश्चाबान्धवा दिशः। अपुत्राणां गृहं शून्यं, सर्वशून्या दरिद्रता ॥ २ ॥

ईदृग्विधांविषमदशामनुभवन्तींनिजस्वामिनींविलोक्य तत्पार्श्ववर्त्तिनी दासी त्वरितगतिर्नृपान्तिकंगत्वा तद्वृत्तान्तंन्यवेदयत्। श्रुतमात्रेण वज्राहत इवाकस्मिकशोकाग्निदग्धोनृपतिःप्रधावन् स्खलितगतिस्तत्सन्निधौ गत्वा रहसि स्थितांहस्ततलविन्यस्तवामकपोलांराज्ञीमनेकधाऽऽश्वास्य प्रावोचत्, शशिवदने ! किमयमसामयिकःशोकाविर्भावः ? अश्रुक्लिन्नोऽयंकञ्चुकोवर्षाकालंव्यञ्जयति, तव मुखमुद्रा विभातचन्द्रमूर्त्तिकथमनुकरोति ? त्वदाज्ञा केनावमानिता ? तदभिधानंमांशीघ्रंनिवेदय, येन तंयमातिथिंकरोमि, पुनस्तवानुशासनंमनसाऽपि कोऽपि नोल्लङ्घयेत्। मयि जीवति तव किंक्षीणमस्ति ? त्वयि जीवन्त्यामेव मम प्राणाःश्वसन्ति, तव चिन्तायाःकारणंब्रूहि, ततः कनकवती दीर्घंनिःश्वस्य प्राह, प्राणप्रिय ? भवत्कृपया मेऽखिला मनोरथा निष्पन्नाः, भवदमोघदृष्ट्या निरीक्षिताया मेऽनुशासनंलङ्घयितुंकःप्रभुः ? भवादृशंप्राणप्रियंलब्ध्वा प्रत्यहंनवनवैस्तैर्नेपथ्यैःशरीरंभूषयामि, यानि शक्रवनितया स्वप्नेऽपि नो दृष्टानि. सदैव दीव्यरत्नाभरणैर्विभूपितशरीरा सुन्दरलावण्यसारा सौभाग्यगर्वाधरीकृतकामकामिनी सुखं तिष्ठामि, भवत्प्रसादेन मनोऽभीष्टानि भोजनानि नित्यमास्वादयामि, प्रतिक्षणंनूतना-

न्याभरणानि मदङ्गलग्नानि विलोकमाना निर्जरा अपि शङ्किता भवन्ति, इमेऽलङ्काराःकेन निर्मिता इति निश्चेतुंते न शक्नुवन्ति, सुवासितदिक्चक्रैःसुरभिद्रव्यैर्विलिप्तावयवांमामजस्रंद्विरेफा उद्वेजयन्ति. एवंसर्वथा सुखसम्पन्नाऽसि, परन्तु स्वामिन् ? अपराध्यत्येकोऽत्र विधिः, येन सर्वसामग्रींप्रतिपाद्य मन्दपुण्याया मे पुत्रसुखं न दर्शितम् । प्रियतम ? एकंपुत्रंविना सर्वसुखंनिरर्थकमेव, यदग्रेऽन्यत्सुखंतृणायते, स्वामिन् ? मदीयंजीवितमपि निष्फलंमन्ये, अरण्यजातंकुसुममिव पुत्रहीनजीवनंवृथा नश्यति. धनिनोऽप्यपुत्रस्यमुखंप्रभाते कोऽपि न विलोकते, भूमौ लुठन्तः पतनोत्पतनञ्च कुर्वन्तोमातरंवीक्ष्य रुदन्तोऽव्यक्तशब्दानुच्चारयन्तोधूलिधूसरिताङ्गा उत्सङ्गमुपविशन्तस्तुरङ्गीकृतयष्टिंसमारुह्य रथ्यायां क्रीडमाना वाला यद्गृहाङ्गणंव्याकुलयन्ति तज्जनिरेव सत्फला, किञ्च सत्पुत्रःकीर्त्तिंपल्लवयति, वंशञ्चविस्तारयति, पुत्रसद्भावे विविधसम्पत्तयःसम्पद्यन्ते. विगताअप्यधिकाराश्च पुनर्लभ्यन्ते वार्द्धके पितृसुखदःस एव जायते, तथैवानेकविधानानन्दान्नन्दनोजनयति, स्वामिन् ? वसनासनभोजनादिसमृद्ध्या पूर्णोऽपि भवान्पुत्रहीनःकस्य कृते राज्यादिविभवभरमुत्पादयति ? सुधासिन्धुनेव जनकेन मधुसूदनायेव सूनवेऽतिविशालाऽपिलक्ष्मीर्वितीर्यते. भूजाने ? कुलधर्मधनादिवर्द्धकमङ्गजंविना निर्जरपुरप्रस्थितस्याऽपि भवतःकथंनिर्वृतिर्भविष्यति ? तस्मात्प्रियतम ? किं वहुनोक्तेन ? तादृशंकमप्युपायंविधेहि, येन त्वंगर्भाऽनुभावतःपाण्डुरमुखच्छविंमामाचिरेण पश्यसि, इयमेव चिन्ता मे मानसंभृशंदुनोति, इत्थंकनकवतीगिरंश्रुत्वा नृपतिर्भणति प्रिये ? पूर्वभवानुचीर्णपुण्यैरिह जन्मनि देहिनांमनोरथाःसिद्ध्यन्ति, तस्माद्विषादंविमुञ्च, सुलभंप्रमोदं भजस्व, विशेषतःकुलदेवीपरिचर्यायां परायणा भव, तथैवाऽहं मन्त्रतन्त्राद्युपचारानपि यथाक्रमंकरिष्यामि, येन तेपुत्रसुखंस्तोकसमयेनभविष्यति, सुलोचने ? त्वमप्येवंकिं न जानासि ? यदिदमैहिकचिन्तितंसर्वेषांन

सिद्ध्यति, एवं राज्ञीमाश्वास्य भूपतिर्मांसमाहूय सर्वंकनकवतीव्यतिकरंन्यवेदयत् । ततःक्षणंविचार्य विज्ञातरहस्येन मया भणितं, नरनाथ ! अष्टमेन तपसा कुलदेवींसमाराधय, प्रसन्ना सा पुत्ररत्नंते प्रदास्यति, इति स्वीकृतमद्वचनःपार्थिवोद्वितीयस्मिन्दिने विहिताष्टमतपा विजनस्थाने विविधोपचारैः कुलदेवीमाराधयितुमुपविष्टः । ततस्तृतीयवासरान्ते भूमेश्चतुरङ्गुलमूर्ध्वस्थितदेहा विकसितदीव्यकुसुममालावलीढकण्ठपीठा निर्निमेषनयनराजिःप्रमुदितवदनाम्बुजा करुणामयाम्बकसुषमावितितिःपवित्रदेहकान्तिर्विविधदीव्यविभूषणैर्विभूषिताङ्गी कुलदेवी प्रत्यक्षीभूयनृपं प्राह. मानवेन्द्र ! मदाराधनंत्वया कुतोविहितम् ? अनेन तपसा त्वयि तुष्टास्मि, यत्तुभ्यंरोचते तन्मार्गय, त्वदभीष्टंदातुंप्रकटिताऽस्मि, इतिदेवीवचनंनिशम्य भूपतिर्विरचितप्रणामाञ्जलिःप्राह, कुलदेवते ! आर्जवेन यथाविधि समाराधयतां त्वां विमलस्वभावानामन्वयोन्नतिर्नित्यशःप्रजायते, भक्तजनवत्सलायांत्वयि तुष्टायां समृद्धयःसुलभा भवन्ति, हृदयतापीनि व्यसनानि च विलयंव्रजन्ति, नैतद्विधमिह कार्यंविद्यते, यत्त्वदाराधनतोऽसिद्धंस्यात्, देवि ! त्वत्प्रसादेन न मे किञ्चिन्न्यूनमस्ति, केवलंकुलोद्दीपकपुत्रसुखेन वञ्चितोऽस्मि, यद्यात्मजेन शुभासनं तत्त्वज्ञानेन मानसं सुश्रमणानामागमनेन च निकेतनंसङ्कीर्णतामुपैति तदा सुकृतंसमूलंविनष्टमिति विज्ञातव्यम् । हे मातः ? पुत्रभिक्षांयाचमानस्य मे मनोरथःसम्पादनीयोऽन्यथा त्वदर्चनमहिमानंकोवर्द्धयिष्यति ? कुलदेवीत्यभिधानमपि तव विलुप्तंभविष्यति, समुद्रोपकण्ठंसेवमानस्य देहिनोलक्ष्मीलाभो न भवति चेत्तल्लज्जाऽपि तस्यैव संजायटीति तद्वदपुत्रस्य मे लज्जा त्वयैव रक्षणीया, तस्मान्मयि प्रसादंविधायैकंसुतंदेहि, अन्यथा मद्भार्या सुताऽभिलाषिणी पञ्चत्वमवाप्स्यति, तदाग्रहप्रेरितेन मया त्वदाराधनंविहितम्, त्वयि तुष्टायां मे मनोरथपादपःफलिष्यतीति निःसंशयंप्रवीयते, कुलदेवी प्राह राजन् ? तावकीनतपःप्रभावेण तुष्टाऽस्मि, तेन

तवैकःसूनुर्भविष्यति, परन्तु पूर्वार्जितकर्मणाऽसौ कुष्ठी भावी, राज्ञाऽभिहितं दिव्यप्रभावे ! त्वत्क्रमाम्भोजयोर्निपत्य भूयःप्रार्थयामि, वीतव्याधिसुतंदत्त्वा पुत्रिणांधुरि मां प्रशंसनीयंविधेहि, अपटुदेहेन जातेनाऽपि किं तेन ?

यतश्चोक्तम्—दरिद्रो व्याधितो मूर्खः, प्रवासी नित्यसेवकः । जीवन्तोऽपि मृताः पञ्च, श्रूयन्ते किल भारते ॥ १ ॥

देव्याभणितं प्रजेश्वर ! अधिगततत्त्वराशिरशेषकलाकुशलोभूत्वा त्वं कथंमूढभावंभजसि ? यादृग्विधानि कर्माणि येन निबद्धानि तानि शुभाऽशुभानि विवशेन तेन देहिनाऽवश्यंभोक्तव्यानि, जिनेन्द्रचक्रिप्रभृतयोऽपि स्वोपार्जितंकर्म निःशेषंभुक्त्वैव सिद्धिपदंप्रयाताः, अतो येन देहिना पूर्वस्मिन्भवेऽविकलंसुकृतंसमाचीर्णंसएवेह जन्मन्यवच्छिन्नसुखभाजनंजायते, तेन साम्प्रतं योवरोमया दत्तस्तमन्यथाकर्तुं मे नास्ति सामर्थ्यम्, नृपेण कथितं जगद्गात्त्रिके ! प्रथमतस्तुष्टया त्वया जानन्त्याऽपि कुष्ठिपुत्रवरोऽनुचितोमे कथंदत्तः ? देव्या भणितं वत्स ? सावधानमनास्तत्कारणंशृणु, महर्द्धिकःकश्चिद्देवोऽस्ति, तस्य द्वे देव्यौ, तयोरेकाऽहमस्मि, प्रत्यहंतेन निजभर्त्राऽमरेण सार्द्धं नूतनाऽभिलषितभोगाननुभवन्ती सपत्नीसहिताऽहंदिवसान्निरगमयम् । अन्यदा मत्सपत्न्यामतीवरक्तोमद्भर्ता मामनादृत्य प्रच्छन्नवृत्त्या तस्यै महाधनंरत्नहारमेकंप्रादात्, ततोज्ञाततद्वृत्ताया मे भूरितरःक्लेशोऽजनि, तदनु तया सममसमञ्जसमभ्याख्यानंप्रकटयन्ती सेर्ष्यंविवदमाना रक्तनयनवदनाऽहं महान्तंकलहमकार्षम् । तदानींगृहमागतेन मत्पतिना तामेव ध्यायता तत्पक्षोगृहीतः, माञ्चभर्त्सयामास, तेनाहंभृशंदुःखार्दिता चिन्ताक्रान्तमानसा यावद्रहसि व्यलपं तावत्त्वया समाराधिताया मे ससंभ्रमंसमागमनंजातमतोनिर्विण्णचेतसा मयाऽयमनुचितवरोवितीर्णः, देव्योहि निजोक्तिमन्यथा न विदधति, देहिनांभाग्यानुसारेणैव दिव्यवाचःप्रसरन्ति, ततोऽस्मिन्विषये त्वयाऽधृतिर्न विधातव्या,

नृपेण विज्ञातमसतिपुत्रेकुष्ठ्यपि वर इति संप्रधार्य देवीवचनंस्वीचकार, ततोदेवी निजस्थानमगमत्। तपोऽवधौ पूर्णे देव्यनुष्ठानंसमाप्य प्रमोदमापन्नोभूधवः कनकवतींमाश्ववरप्राप्तिव्यतिकरमचीकथत्। मयाऽपि नरेन्द्रःप्रोत्साहितः, प्रभो? सम्यगाराधितधर्मप्रभावेण सर्वंभव्यंभविष्यति, जाते सूनौ कुष्ठविनाशनोपायास्तु सुलभाः, इति मदुक्तिमाकर्ण्य सप्रिया कनकवती मुमुदेतराम्। अथ तस्यामेव क्षणदायांसुखसुप्ताया राज्ञ्याःकुक्षौ कश्चिज्जीवोगर्भत्त्वेनावतीर्णः, ततःप्रभृति निरतिशयानन्दमेदुरमानसोमानवेन्द्रः ससत्त्वांमहिषींभूमिगृहेस्थापयित्वा गर्भभृत्यामकारयत्, यतोलुब्धानांसम्पत्तिर्भूगृहस्थितैव रक्ष्यते, प्रतिवेलंनरेन्द्रःप्रियासखीराद्दतस्तद्वृत्तान्तंपृच्छतिस्म, क्रमेण नृपतिना संपादितगर्भदोहदा सा गर्भसमये पूर्णे पुत्रमजीजनत्, ततोनिवेदितपुत्रजन्मने शुद्धान्तचराय सुतजन्महर्षितोनरेन्द्रोनिजाङ्गलग्नंवसनाभरणादिकंवितीर्य तं विसर्जयामास, अथ हर्षनिर्भरमानसोभूपतिस्तज्जन्ममहोत्सवंनिजविभवानुसारेण प्रावर्त्तयत्, सर्वस्मिन्नगरे सद्योध्वजतोरणाङ्किता गृहाट्टश्रेणयोजनमानसानि विलोभयामासुः, विहितमनोहरनेपथ्यानि युवतिवृन्दानि प्रतिस्थानंधवलमङ्गलानि सप्रमोदंगायन्तिस्म, राज्ञ्याःपुत्रप्रसूतिरजायतेति सर्वत्र प्रसिद्धिर्जाता, पौरजनास्तद्वार्त्तासमाकर्ण्य घनागमे कदम्बा इव भृशंप्रमुदिता जज्ञिरे, ततोऽहमहमिकया समन्ततोव्रजन्तोविविधोपहारपाणयोजनव्राता राजसद्मनि समाजग्मुः, अप्रमितप्रमोदंबिभ्रता भूपतिना शुभे दिने कनकध्वजेत्यभिधानंविदधे, परन्त्वाजन्मतःस कुष्ठदूषितोऽभवत्, पूर्वकर्मणामुदयेनासैर्भिषग्भिर्ये प्रत्युपचारा विहितास्ते सर्वे क्षारभूमावुप्तबीजानीव निष्फलतामगुः। मन्त्रतन्त्रवेदिनोऽपि कृतोपचारास्तस्मिन्निर्विण्णा बभूवुः, भूपतिना विज्ञातं केनाऽप्युपायेनायमर्भकोनिरामयो न भविष्यति, पौरजना इमंव्यतिकरंज्ञास्यन्ति चेद्देशान्तरेऽपीयंवार्त्ता प्रसरिष्यति, तेन कुष्ठिपुत्रंमाश्च जना मा हसन्त्विति

संप्रधार्य तंनन्दनंभूगृहवासिनंचकार, यथोदितमपि भानुमन्तं न विवेद सः। रत्नभूमौ मणिरिव निःशेषोपचारपरिकरितः सोऽर्भकस्तत्रस्थितःप्रतिवासरंववृधे, विदिततद्वृत्तान्ताःपौरजना राजसुतविलोकने जातकौतुका अप्रमितप्रमोदमावहमाना गृहीतप्राभृता नृपौकसि समाजग्मुः, सभास्थानस्थितंमहीपतिंप्रणम्य यथार्हस्थानस्थितेषु तेषु कुमारदर्शनोत्कण्ठितेषु मयाऽवादि, निजोरुतेजसा दिवाकरप्रकाशंनिर्भर्त्सयन्, पुरुहूतपोतमपि स्वरूपसंपत्त्या लघयन्, जगज्जनतिलकलीलांकलयन्, चामीकरचारुमूर्त्तिर्जातमात्रेण प्रशमितोभयभीतिरयंराजकुमारोवैरिवारविनाशकोमित्रपक्षविवर्द्धनोविलसतिसाम्प्रतंभूमिगृहस्थितः, यस्य रूपलावण्यंसमीक्ष्य तदसहमानःपञ्चसायकोऽनङ्गभावमियिवानिव, विधातुरिमंकुमारंनिर्मातुःशिल्पकलाकौशल्यंसान्वर्थमजनि, अस्मिन्नरेन्द्रनन्दने भुवनानन्ददायके निरीक्षिते किञ्चिदपि दर्शनीयंनाऽवशिष्यते, अतोऽस्मिन् कुमारे कस्यचिद् दृष्टिनिक्षेपो मा भूदिति वयसा बालोऽप्यबालोगुणसंपत्त्याऽसौ भूमिगृहाद्बहिर्न निष्कास्यते, यतोऽखिलदेहिनोहितकाङ्क्षिणो न भवन्ति सर्वत्र.

यतश्चोक्तम्—शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे। साधवो नहि सर्वत्र, चन्दनं न वने वने॥ १॥

अतोऽसौकुमारोधरागृहे तिष्ठन्नेव धात्र्यादिपरिजनसेवितःशुक्लपक्षंसमाश्रयन्निशाकर इव प्रत्यहंकलाःकलयति,

यतः—दिवसे दिवसे पुष्टिं, धारयत्येव बालकः। विशेषेणोपचारा हि, सर्वसम्पत्तिकारकाः॥ १॥

इत्थंसुगुप्तमन्त्रा वयंसर्वे नृपाज्ञया देशान्तरादागच्छतःकुमारदर्शनोत्सुकान्सुविहितजनान्पूर्वोक्तक्रमेण समतोषयाम, अथैवमन्यलोका अपि तथोद्बोधिताः सत्यंमन्वाना अतीव प्रमुदिताः पौरैःसमं तत्प्रशंसांचक्रुः, तथैव प्रोचुः नृपान्वयनभोमणिरसौकुमारविक्रमःकुमारोराज्यधुरांवक्ष्यति, तदेयंभूमामिनी समासादितनवभर्तृकाऽधिकतरंविलसिष्यति, अस्माकंचिरसंचितप्रभूतसुकृ-

तपादपोऽद्यफलितः, अशेषसुखसाधनोमहीपतिरपि सत्पुत्रजन्मना कृतकृत्योऽजनि, अद्यैव तेन भूनाथेन निजजन्मसाफल्यमवापि,

उक्तञ्च—एकेनाऽपि सुपुत्रेण, वंशोयाति समुन्नतिम् । गर्दभी दशभिःपुत्रै-र्भारं वहति नित्यशः ॥ १ ॥

एवमनेकधाप्रशंसां कुर्वन्तोजनव्राताः कुमारजन्मोद्भूताद्भुतप्रमोदाः स्वस्वस्थानंभेजुः । अथाधिगतशास्त्रतत्त्वैरामैर्बालभृत्याकुशलैर्भिषग्भिर्नित्यमवेक्षितो नृपकुमारः पितुर्यत्नैर्दिनेदिने वृद्धिमियाय, दिव्यसौभाग्यभाजं तं कुमारंमारोपमंदिनकरोऽपि निजकराग्रैर्नपस्पर्श, इदंनिगूढराजप्रपञ्चंवेदितुं कोऽपि न प्रभुर्बभूव.

यतश्चोक्तम्—सुगुप्तस्याऽपि मन्त्रस्य, ब्रह्माऽप्यन्तं न गच्छति । कौलिको विष्णुरूपेण, राजकन्यां निषेवते ॥ १ ॥

अथान्यदाऽस्मत्पुरवासिनोव्यवहारिणोगृहीतानेकभाण्डा अधिकलाभेच्छयाऽत्रविक्रेतुमाजग्मुः, पुरींनिकषोत्तारकांविधाय क्रयाणकानि तत्र स्थापयित्वा दिगन्तकीर्त्तिविजितमकरध्वजरूपं मकरध्वजभूपं मिलितुं प्रभूतप्राभृतनिचितकरकमला नैगमा नृपसभांययुः, साऽप्यनेकनीतितत्त्ववेदिवृद्धजनसेविता व्यभात्, यतः—

न सा सभा यत्र न सन्ति वृद्धा–वृद्धा न ते ये न वदन्ति धर्मम् । धर्मः स नो यत्र न सत्यमस्ति, सत्यं न तद्यच्छलमभ्युपैति ॥१॥

सामन्तमन्त्रिप्रधानाद्यनेकपरिवारवारितोभूपतिरधिष्ठितराज्यासनोन्यायमार्गंव्यलोकयत् । प्रतीहारेण प्रवेशिता विहिताञ्जलिपुटा व्यवहारिणोभूयसीमुपदांढौकयित्वा विहितप्रणामा यथोचितस्थाने समुपविश्य मिथोवार्त्तालापंव्यधुः, महीपतिना यथोचितंसत्कृतेषु परमानन्दकलितमानसेषु तेषु महीपप्रसादेन निजगौरवंचिन्तयत्सुप्रेमलालक्ष्मीःप्रेमागार इव जनमनोहारिणी सखीजनसमेता तत्र समागत्य निजपितुः मकरध्वजक्षितिपतेरुत्सङ्गसङ्गिनी बभूव, सा च रूपलावण्यैकनिधिश्चतुःषष्टिकलाकुशला

द्विसप्ततिकलास्वपि पारगामिनी ललितनवयौवनसमारूढा भव्यवदनकान्त्या शशाङ्कप्रभांतर्जयन्ती तरुणजननयनावलींमोदयन्ती सभ्यजनमानसानि रसभरितानि विनिर्ममे, अद्भुतरूपादिगुणकलितां तां कुमारिकां दृष्ट्वा स्फारचक्षुषामस्मदीयवणिजांतद्ध्यानसरोनिमग्नमिव चेतश्चमत्कृतिमज्ञे, तदानींनृपतिनाऽभाणि—भोधनिकाः! भवतां क्व निवासः! भवदीयदेशंयःप्रशास्ति तस्य किमभिधानम्? श्रवणान्हादजनकंनूतनंतदीयवृत्तान्तंभवतिचेन्निवेदयत, इत्थंगृहीतप्रश्नसाराणांतेषामेकोवदान्यस्तदुत्तरंकथयितुंप्रारभत, अवनिपाल! वयंसर्वे वणिक्कुलजाताःसिन्धुदेशनिवासिनोऽत्रवाणिज्यकृते समायाताः। समराजिरे निजौजसा निर्जितरिपुबलःकनकरथाह्वोनरनाथोधनदपुरीमिवतद्देशराजधानींसिंहलपुरींविभूषयति, कनकध्वजाभिधानस्तस्यैकोनन्दनःसमस्ति, परन्तु शुभलक्षणलक्षितोयोरूपविभवेन कामकान्तिमपि लघयन्नरेन्द्रेण भूमिगृहे रत्ननिधिरिव रक्षितस्तिष्ठति. तद्दिदृक्षया काममुत्कण्ठितेष्वपि पौरजनेषु कस्यचिद्दृष्टिपातोमाभूदितिशङ्कितमानसोनरेशस्तंकदाचिदपि भूगृहाद्बहिर्न निष्कासयति, तद्रूपसम्पदंवर्णयितुंवयं न शक्नुमः, स साक्षादनङ्गमूर्त्तिर्विद्यते, किमन्यकल्पनया! स्वयंवाचस्पतिरपि तद्गुणानुकीर्त्तनेऽशक्त इत्यऽसंशयंविद्धि, तस्य रूपवैभवोऽपि चेतोहरोयुवतिजनमान्यः,

यदुक्तम्—रूपवन्तो नरा लोके, पूज्यन्ते गुणगौरवात्। कुरूपेण हता किं न, गणिका गीतकोविदा ॥ १ ॥

याद्दशी दिव्यरूपसम्पत्तिस्ताद्दशी गुणसंहतिरपि शमरतं तं नितरांनिषेवते यतः—

गुणाः कुर्वन्ति दूतत्वं, दूरेऽपि वसतां सताम्। केतकीगन्धमाघ्राय, स्वयमायान्ति षट्पदाः ॥ १ ॥

तस्मिन्कुमाररत्ने गुणनिधौ काचिदप्यपूर्णता नैवाऽभिलक्ष्यतेऽतः स्पृहणीस्वभावःस संमतः सज्जनानाम्, यदुक्तम्—

न पुत्रत्वेन पूज्यन्ते, गुणैरासाद्यते पदम् । रवेर्व्यापारमादत्ते, प्रदोषो न पुनः शनिः ॥ १ ॥ गुणाः सर्वत्र पूज्यन्ते, पितृवंशो निरर्थकः । वासुदेवं नमस्यन्ति, वसुदेवं न मानवाः ॥ २ ॥ तथाच–केतकीकुसुमं भृङ्गः, खण्ड्यमानोऽपि सेवते । दोषाः किं नाम कुर्वन्ति, गुणापहृतचेतसः ॥ ३ ॥ शरीरस्य गुणानाञ्च, दूरमत्यन्तमन्तरम् । शरीरं क्षणविध्वंसि, कल्पान्तस्थायिनो गुणाः ॥ ४ ॥ सुगुणेष्वेव कर्त्तव्यः, प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि, नेश्वरैरगुणैः समः ॥ ५ ॥

ईदग्गुणकलितोऽस्मद्राजकुमारोनिखिलधैर्यौदार्यादिगुणशालिनांधुरि महनीयकीर्त्तिर्वरिवर्त्ति, इत्यसदीयमहेभ्यानांमुखकुहरात्कनकध्वजकीर्त्तिसमाकर्ण्य मकरध्वजनरेशोऽतीव मुदितोऽभवत् । ततस्तान्महेभ्यपुङ्गवान्विविधवस्त्रालङ्कारैः सत्कृत्य प्रत्यहं युष्माभिः समागन्तव्यमिति निवेद्य स विसर्जयामास, समासादितराजसत्कारास्तेऽपि निजोत्तारके गत्वा स्वोचितव्यापारोधता बभूवुः, ततोऽतिमोदमेदुरितमानसेन मकरध्वजनृपेण विजितवाचस्पतिमतिनिजमन्त्रिणं सुबुद्धिं सद्यः समाहूय कनकध्वजवृत्तान्तस्तदग्रे न्यवेदि, यतोगुणवति को न रज्यते ! मेधावी मन्त्री जगौ–राजन् ! मुधेदंवृत्तान्तंमे कुतः श्रावयसि ! कनकध्वजस्वरूपश्रवणे सर्वथा मदीयंमानसंनोत्कण्ठते । निर्हेतुकंवाचिकं न श्रोतव्यं न ध्यातव्यञ्च.

अन्यत्राप्युक्तम्—अव्यापारेषु व्यापारं, यो नरः कर्त्तुमीहते । स नरो निधनं याति, कीलोत्पाटीव वानरः ॥ १ ॥

तस्मादव्यापारभूतमिदंवृत्तान्तं सर्वथा हेयमेव, किमनेन वृथाचिन्तनेन ! राज्ञा भणितं–मन्त्रिन् ! प्रेम्लालक्ष्म्याः कृते वरचिन्तात्वस्माकं चेतसि सततं जागर्त्ति, इदानीमप्रार्थितोऽयमुचितवरसंयोगः संप्राप्तः, अयंसंबन्धोऽतीव योग्यो मे प्रतीयते, ईदग्विधंसम्बन्धंकोमतिमानुपेक्षते ? ईदग्गुणोऽपरोवरोऽस्मिन्भूतले प्रायेण दुर्लभः, अतोऽयंसम्बन्धोभवते रोचते चेत्तेनसार्द्धंकुमार्या

विवाहंकुर्मः । मन्त्रिणाऽवादि–महाराज ! अविदितकुलानांवैदेशिकानां वाक्प्रपञ्चः कथंविश्वासास्पदंभवेत् ! बहवोवैदेशिका वितथवादेनाऽकुटिलाञ्जनान् वञ्चयित्वा गताः श्रूयन्ते; साधुरसाधुर्वा स्वकीयः सर्वेषांवल्लभोभवति, निर्गुणानामपि दूरस्थायिनां विशेषतः प्रशंसा जायते, निजाम्बांडाकिनीं स्वमुखेन कोऽपि किं ब्रूते ? स्वदेशजाःकण्टका अपि प्रियतमा भवन्ति, अन्यदेशीयसुरभिकुसुमान्यपि न रोचन्ते, अतस्तेषांवणिजांवचनेषु कथंविश्वासोविधीयते ? यतोमायाविनस्तद्देशवासिनोवर्त्तन्ते, वैदेशिका अपि मध्यस्थभावमापन्नाः परश्लाघांकुर्वन्ति चेत्तत्र प्रत्ययोभव्यानांजायते इति मन्त्रिणोऽभिप्रायंविदित्वा भूपेन तदुक्तंवचनमङ्गीकृत्य निजतनयाञ्च विसृज्य स्वल्पानुचरेण वरतुरङ्गमारूढेन राजपाट्यांनिश्चक्रमे, पवनातिपातिवाहेन पुरोव्रजता कियन्तमध्वानमतीत्य तेन भूरिभिः श्वापदैःसमाकुला पादपान्तरितभूप्रदेशा नवपल्लवप्रभारुणितविरलभागोपलक्षिताऽतनुरागा वरवर्णिनीवैका महाटवी प्रपेदे,तत्र च मृगयाभिरतेन तेन बहवस्तृणवारिविहितवृत्तयःश्वापदाःसापदोविहिताः,तावन्निजमन्त्र्यपि तत्पदपद्धतिमन्वेषमाणस्तत्र समायातः, ततः सचिवसमेतोनृपतिर्वर्त्मश्रमोद्भूतस्वेदोदकेन क्लिन्नगात्रः शीतलोदकसंभृते समीपवर्त्तिन्येकस्मिन्सरसि सितच्छदप्रमुखविहगगणैर्निषेविते विश्रान्तये जगाम, तावत्तत्र पिपासापीडिताःकियन्तोव्यवहारिणोऽपि समागताः, मुक्ताफलानुकारिणाऽतिस्वच्छेन वारिणा तृषांनिवार्य सत्वरं ते पश्चाद्वलितास्तदामकरध्वजेन निजान्तिके समाहूय पृष्टाः, यूयंवैदेशिका लक्ष्यध्वेऽतो बहूनि कौतुकानि निरीक्षितानि भविष्यन्ति, तेषांकिमपिहृद्यंज्ञातव्यंभवति चेत्तन्निवेदयत, आकृत्याऽपि भवन्तोगुणवत्तरा ज्ञायन्ते, यदुक्तम्–आकृतिर्गुणसमृद्धिशंसिनी, नम्रता कुलविशुद्धिसूचिका । वाक्क्रमः कथितशास्त्रसंक्रमः, संयमश्च भवतां वयोऽधिकः ॥१॥

तस्मादपूर्वांवार्त्तांश्रावयित्वा मदीयंमनोरथंपूरयतेतिनरेन्द्रोक्तिंनिशम्य तुष्टमानसा नैगमिकास्तदन्तिके स्थित्वा स्वविज्ञातं-

वृत्तान्तंकथयितुंप्रारभन्त, महीनाथ ? वयंयात्रायै विनिर्गताः विविधपुरग्रामपत्तनानि परिभ्रमन्तःक्रमेण सिन्धुदेशंप्राप्तास्तत्र भूरमणीतिलकायमानायांसिंहलपुर्यांकनकरथाभिधेयोवसुधाधिपोराज्यंकरोति, तत्सूनुर्विजितमकरध्वजरूपःसर्वकलादक्षःशुभलक्षणलक्षितःकनकध्वजःसमस्ति, देशान्तरेषु प्रथितकीर्त्तिर्दीव्यमहिमा स कदापि भूमिगृहाद्बहिर्न निःसरति, सदैव भूगृहवासंनिषेवते, तत्रस्थितःस साहित्यादिशास्त्राणामवलोकनंकरोति, अतीवकोमलानि तदङ्गानि नीचैःकृतशिरीषसुमसुपमानि मरुत्स्पर्शमपि न सहन्ते, किंबहुना ? दिविषदांस्पृहणीयंतदङ्गपेशलत्वमनुपमंविभाति, परमद्यापि दीव्यदेहःस कुमारःकस्याऽपि नयनातिथिर्न जातः । महाराज ? आश्चर्यजनकमेतद्व्यतिकरमस्माभिःश्रुतमात्रमस्ति, अहीनप्रमोदोमहीनस्तदुक्तांव्यक्तवाचंपूर्ववन्निशम्य जातप्रत्ययस्तान् वैदेशिकान् सत्कृत्य विसृष्टवान्, योजिताञ्जलयस्तेऽपि निजमार्गमशिश्रियन्त, सर्वत्र विदितयशसा तेन कुमारेण सार्कंप्रेमलाविवाहोविधातव्य इतिविहितनिश्चयोनृपतिर्वर्त्मनि त्वरमाणःसायंनिजप्रासादमभ्येत्य निजमन्त्रिणंस्वमनोरथंव्यजिज्ञपत् । मन्त्रिणाऽभिहितं-स्वामिन् ? अद्यापि मे हृदयंशङ्कितंतिष्ठति, परम्परया श्रुतंकथंविश्वसनीयंजायते ? श्रुतमात्रमिदंसम्यक् निर्णयतांनावगाहते, अनिर्णीतंकिमपि कार्यं नोविधातव्यम् । दृष्टमेव सत्यंमन्यते, अतोऽस्मदीयसेवकास्तत्रगत्वा प्रत्यक्षतया सर्वंविलोक्य अत्र समागत्य तथैव कथयन्ति चेत्प्रतीतिर्भवेदन्यथा विवाहवार्त्ता कर्त्तुंनोचिता, इदंसामान्यंकार्यंनास्ति, यतोऽन्यजनकथनेन विधीयते, यावज्जीवमयंपाणिग्रहणसम्बन्धोविधातव्यस्ततःसम्यग्विनिश्चित्य विवाहकार्यंविधेयम् । अविमृश्य यद्विधीयते तत्परिणामे विपत्तिजनकंजायते, उक्तञ्चान्यत्र—

सहसा विदधीत न क्रिया-मविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव सम्पदः ॥

इत्थंमन्त्रिवचनंनिशम्य राज्ञापुनस्ते महेभ्या निजान्तिके समाहूताः, सादरञ्च पृष्टाः—भोःश्रेष्ठिपुङ्गवाः ! अस्माकमेकंकार्यंभवदधीनमापतितं यूयंतत्करिष्यथ ? वणिजःप्रोचुः—नरनायक ! युष्माभीरक्षिता वयंयुष्मदीया एव, सर्वदा भवदनुग्रहंकाङ्क्षामहे, अतोयत्किमप्यस्माकमुचितंकार्यंनिवेद्य प्रसादोविधीयताम् । येन सत्वरंतद्विधाय वयं कृतकृत्या भवामः । पार्थिवःप्राह—पटुवचनविन्यासैर्मत्साचिवैःसार्द्धंयूयंसिंहलपुर्यामधुनाव्रजत, कुमारस्वरूपञ्चतान्दर्शयत, कुमार्यनुरूपंतद्रूपंभवति चेत्तत्रैव श्रीफलंदत्त्वा विवाहोविधातव्यः, अस्यांकार्यनिष्पत्तौ भवतांमहान्तमुपकारंमन्तस्ये । कदाप्येतामुपकृतिंन विस्मरिष्यामि, ततोवणिग्भिर्भणितं—स्वामिन् ! कियत्कार्यमेतत् ? भवदाज्ञानुसारिणोऽस्मान्विजानीत, युष्मदन्तिके वयंवितथवादंप्राणान्तेऽपि न वदामः, पुरा यदस्माभिरदृष्टमपि कनकध्वजस्वरूपंनिवेदितं तत्तथैव विद्यते, यतोयुष्मत्कुमार्याःकनकरथसुतस्यचोभयोःस्वरूपसम्पत्तिःसमानैव, नात्र किमपि न्यूनत्वंप्रतीयते, तस्मात्तयोरुचितसंयोगेऽनुकूलमायासं वयं करिष्यामः, निजमन्त्रिणोऽस्माभिः साकंसुखेन प्रेषय, अस्मद्गृहोचितांतेषांसेवांविधास्यामः। ततोमहीपालेन समादिष्टाश्चत्वारो मतिशालिनःप्रधानपुरुषा महेभ्यसमेताःसिंहलपुर्यां समाजग्मुः।

॥ इति श्रीचन्द्रराजचरित्रे द्वितीयोल्लासे द्वितीयसर्गः ॥ २ ॥

अथ व्यवहारिणोविहितादरास्तान्निजावासंनिन्युः, अभ्यङ्गोद्वर्त्तनादिना विनीताध्वश्रमाःसर्वे विविधरसवतीस्वादमनुभूय गृहीतताम्बूलबीटका आस्थानभूमौ स्थिताःपरमसन्तोषमवापुः । ततःसायन्तनंविधिंसमाप्य महेभ्यास्तान्समादायकनकरथभूपान्तिकमागताः, मन्त्रिचतुष्कंबहिःस्थापयित्वा महेभ्या नरेन्द्रमभ्येत्य विहितप्रणामाञ्जलयःप्रोचुः, महीनाथ ? क्रयाणकानि विक्रेतुंवयंदेशान्तरंप्रयातास्तत्र मकरध्वजभूपस्य कन्यका विजितरतिरूपा प्रेमलालक्ष्मीत्यभिधाना समस्ति, सा चास्माभिःस-

म्यग्विलोकिताऽस्ति, यदीयंसौकुमार्यंनिरीक्ष्य निर्जररमण्योऽपि त्रपावनता भवन्ति, युष्मत्कुमारेण साकंतस्या विवाहार्थंतन्मान्त्रि चतुष्टयमस्माभिःसह समेतम्, अधुना ते युष्मत्प्रसादाकाङ्क्षयाद्वारभूमौ तिष्ठन्ति, तान्सत्वरंप्रवेशयेतिभूपादिष्टेन दौवारिकेण शीघ्रं-मन्त्रिणःप्रवेशिताः। समयविदस्तेऽपि नरेन्द्रक्रमाम्भोजयोःकृतप्रणामाःक्षणमेकंतत्प्रशंसांकुर्वन्तस्तस्थुः, पुरैव विदिततदागमनव्यतिकरेण प्रभूतप्रमोदमाविभ्रता नृनाथेन विहितार्हणाश्चत्वारस्तेनिजोचितस्थानमलञ्चक्रुः। ततोमेदिनीपतिना कुशलवृत्तान्तंपृष्ट्वाऽऽगमनप्रयोजनजिज्ञासया भणितम्—कस्माद्देशाद्यूयंसमागताः? क्वगन्तव्यमस्ति? केनचित्प्रेषिता वा स्वेच्छयाऽत्र समागताः? किंकार्यमुद्दिश्य यात्रारम्भोयुष्माभिर्विहितः? इत्थंनरेन्द्रोक्तिमाकर्ण्य तेषामेकोवाग्मी प्रावोचत्, महीपते! वयंसौराष्ट्रदेशीयाः, अस्मत्स्वामिना मकरध्वजनरेशेन भवत्सन्निधौ प्रेषिताः, एभिस्तवनगरवासिभिर्महेभ्यैरस्मत्स्वामिनोऽग्रे भूयसी भवदीयप्रशंसा विहिता, दीव्यकान्तिमतस्त्वदङ्गजस्य कनकध्वजस्य च रूपमहिमा बहुधा वर्णितः, नराधीश! प्रतापोर्जितस्य भवतःसूनुस्तादृग्रूपवान्स्यात्तत्र किमद्भुतम्!। यतो हंसकुले हंसा एवोत्पद्यन्ते।

यतः—यादृशो जनको यस्य, तस्य पुत्रोऽपि तादृशः। न ह्याम्रबीजतः क्वाऽपि, निम्बवृक्षस्य संभवः॥ १ ॥

अस्माकमधिपतेःसुता प्रेमलालक्ष्मीःकुमारिका रूपमहिम्नालक्ष्मीरिवयुवतिजनतिलकं समस्ति, युष्मत्तनुजेन समं-चिरं सा विलसत्विति दृढमनोरथेनमकरध्वजेन भूपेन वयमत्र प्रेषिताः, अस्मिन्कार्ये समानौजसा त्वया किञ्चिदपि न विमनायितव्यम्। यतः सोऽपि सौराष्ट्रजननायकः, भवानपि सिंहलभूभामिनीवल्लभः, उभौ समानवैभवौ लोके प्रतीतौ, विवाहविधौ चोभयोः समानता प्रशस्यते, उक्तञ्च—

समानशीलश्च समानवित्तं, बलं समानश्च कुलं ययोःस्यात् । मैत्री विवाहश्च तयोर्विधीयते, समानभावेन सदा सुखी स्यात् ॥१॥

पुनस्त्वमपि सर्वथाऽभिज्ञोऽसि, दूरदेशादिममर्थंसाधयितुंवयंसमागताः, अतस्तत्कार्यंप्रतिपाद्यैव गमिष्यामः, एवंमन्त्रिगिरंसमाकर्ण्य भूपतिर्बभाषे—युष्मदुदितंसकलंवृत्तान्तंमया विदितं, सर्वं भव्यं भविष्यति, त्वरिता मा भवन्तु, त्वरमाणानांकार्यनिष्पत्तिर्नियता न भवति, सद्यःकार्यसाधने मिष्टफलंनासाद्यते, विलम्बंसहमाना मिष्टफलंभुञ्जते । युष्मत्स्वामिनिदेशेन भवन्तोऽत्र समागतास्तत्साधु विहितम् । भवदुक्तंसर्वंमया शिरसि निहितम् । इदानींयूयं स्वस्था भवत, सम्यग्विचार्य भवतांप्रत्युत्तरंदास्यामि, दूरदेशादागतान् भवतोनिराशान्कर्त्तुंनेच्छामि, किञ्चास्मत्सुनुरद्याऽपि वयसा लघीयान्वर्त्तते, अधुना विवाहस्य वार्त्ताऽपि कीदृशी ? यदा स विवाहयोग्यांदशांप्राप्स्यति तदा विवाहंकरिष्यामि, तेन कुमारेण मदीयंगृहाङ्गणमपि नावलोकितं भूमिगृहस्थित एवाधुना स विलसति, उत्सङ्गे निधायास्माभिर्न लालितः स कुमारः । युष्मत्स्वामिनः पुत्री कीदृशीति नास्माभिर्विलोकिता, तर्हि विवाहस्तयोःकथं कर्त्तुमुचितः ? युष्माकंस्वामिनोऽचिराद्विवाहविधित्सा तदा सुखेनान्यंवरंशोधयित्वा विवाहोविधीयताम् । नैतावताऽस्माकंकापि क्षतिः । एवंनिजाऽभिप्रायंनिवेद्य नृपेण समुचितोत्तमावासे मन्त्रिणःप्रेषिताः, ततो नरेन्द्ररत्न ? सद्योमांसमाहूय रहसि नृपेण भणितं—हिंसक ? ब्रूहीदानीं किंविधेयम् ? कुमारविवाहार्थमिमे वैदेशिकास्त्वरयन्ते, मुधा मधुरोक्त्या कियत्कालमस्माभिस्ते रक्षितव्याः ? कूटकर्मणा कोऽपि न प्रतारणीयः, न्यायवेदिनोवयमपि कुपथगामिनोभवेम तदा नीतिहीनमिदंजगद्व्याहन्येत, निजकान्त्याऽधरीकृतरतिमूर्त्तिर्युवतिजनश्लाघनीया नरेन्द्रसुता क्व ? पुनरस्मदीयः कुष्टाभिभूतवपुस्तनयः क्व ? कोकिलाध्वाङ्क्षयोरिवानयोःसम्बन्धःकथंविधीयते ? खलजनोचितमिदंकूटकर्म मह्यंसर्वथा न रोचते,

मायाविनोनिजसुकृतंहारयित्वा केवलंदुःखभागिनोभवन्ति, उक्तञ्च—

विधाय मायां विविधैरुपायैः, परस्य ये वञ्चनमाचरन्ति । ते वञ्चयन्ति त्रिदिवापवर्ग-सुखान्महामोहसखाः स्वमेव ॥१॥
मायामविश्वासविलासमन्दिरं, दुराशयो यः कुरुते हितेच्छया । सोऽनर्थसार्थं न पतन्तमीक्षते, यथा विडालो लगुडं पयः पिबन् ॥२॥

कुशलजननवन्ध्यां सत्यसूर्यास्तसन्ध्यां, कुगतियुवतिमालां मोहमातङ्गशालाम् ।
शमकमलहिमानीं दुर्यशोराजधानीं, व्यसनशतसहायां दूरतो मुञ्च मायाम् ॥ ३ ॥

अतोऽव्यसननिकेतनमिदंकूटकर्म नोचितमस्माकमनिन्दितात्मनांमुनीनांमिथ्यात्वमिव, मायावल्लीवितानं यस्मिन्नराधमोपवने विलसति तदचिरेण दुर्यशोवज्रकुठाराभिघातैकभोग्यं जायते, सर्वक्रियासु परवञ्चनक्रिया निकृष्टतमाऽभिगीयते । सुकृतैकवल्लीकुठारश्च सैव निगद्यते, तस्मादिमान्मन्त्रिणोयथातथंबोधयित्वा स्वदेशंविसृजत, किञ्चपुत्रदोषंजानद्भिरप्यस्माभिर्दोव्यदेहा राजसुता कुष्ठिना सह परिणाय्य मा कदर्थीक्रियताम् । पुरा जन्मनि बहूनिच्छलानि समाचरितानि भविष्यन्ति, ततोऽयंकुष्ठिसूनुःसमासादितः, पुनरस्मिन्भवे कपटजालंरचयामि चेत्तत्फलानि कीदृशानि भवन्ति ? ततोऽहं तादृक्कर्मवैधुतानलाद्बिभेमि, कीदृशस्तवाशय इति पूर्वापरसम्बन्धंसम्यक् विचार्य स्पष्टंवद, इति विदितनृपाभिप्रायोऽहमवादिषं—स्वामिन् ! कुमारव्यतिकरमद्यापि कश्चिन्न जानाति, यद्येवमेव कर्तुंतव मनोरथस्तदा प्रथमतोभूगृहे स प्रच्छन्नतया कथंरक्षितः ? मूलत एव न्यायवेदिना भवता भवतापदोऽसत्पथः कथमङ्गीकृतः ? सकृदप्यनीतिभावना विहिता चेन्मनागपि पश्चान्न भेतव्यम् । यावद्विधिर्बलवाँस्तावत्सर्वंसुखसाध्यंजायते, पुनरिमे मन्त्रिणोयदभिलापया समागताःस मनोरथस्तेषांस्वामिना पूरयितव्यः, किञ्चास्माकमु-

चितोऽयंविवाहसम्बन्धोऽप्रार्थित एव संप्राप्तः, ततोऽयं सर्वथाऽङ्गीकर्त्तव्यः, कुलदेवतांसमाराध्य कुमारवपुर्वयंनीरुजंकरिष्यामः, कस्तत्र चिन्ताप्रसङ्गः ?, भवत्प्रसादेन सर्वसमीचीनंभविष्यति, अतोऽधुनाविवाहनिषेधो न कर्त्तव्यः, दैवलब्धपरित्यागो-मनीषिभिर्न विधेय इति नीतिविद्भिरनुष्ठितेऽध्वनि चरतां न काऽपि क्षतिः, "यतःप्रारब्धस्यान्तनयनंप्रथमंबुद्धिलक्षणमिति" संप्रधार्य विशेषतोऽयमर्थः साधनीयः, स्वामिन् ! अस्मिन्भूतलेऽसदुक्तिरपि मिष्टफलदायिनी सम्पद्यते, तथाकरणे प्रतिपक्षा अप्यनुकूलतांभजन्ति, ततोऽसदाचरणमनिष्टोदर्कमिति भयं मा शङ्कस्व, चौर्यैकरतचेतसामपि सहायिनोमीलन्ति तर्हिंनिग्रहाऽनुग्रहप्रभवोवयंकिञ्चिदपि किं न करिष्यामः ! कियन्मात्रमिदंकार्यं ? गोष्पदमात्रमिदंमन्ये, राजन् ! अस्मिन्कर्मणिकाऽपि चिन्ता भवता न कर्त्तव्या, इति मदुक्तिंनिशम्य भूपतिनाऽहंभणितः, मन्त्रिन् ! कूटकर्मणि मे मतिर्न प्रसरति, तुभ्यंयद्रोचते तत्कुरुष्व, येन यादृग्विधंबीजमुप्यते तादृशंफलंतेन लभ्यते, नहि बब्बूलबीजे समवरोपिते सहकारफलंसंपद्यते, अतोऽस्मिन्विषये स्थातुमहंनेच्छामि, स्वार्थसिद्धिसमीहया तत्त्ववित्कोऽनर्थसार्थंनिषेवते ? अनभ्यस्तसमयास्तु स्वार्थसमीहमानाःकृत्याऽकृत्यं न विदन्ति, अतएव तद्विवेकविकलाःकिं न कुर्वन्ति ?

यदुक्तम्—यदसत्यं वदेन्मर्त्यो—यद्वाऽसत्यञ्च सेवते। यद्गच्छति विदेशञ्च, तत्सर्वं स्वार्थसिद्धये ॥ १ ॥

इत्थमावयोर्विवादे जायमाने मकरध्वजमन्त्रिणःसमागत्य योजिताञ्जलयःप्रोचुः—पार्थिव ! इयन्तोवासरा वार्त्तालापेनैव मुधाऽस्माभिर्गमिताः, साम्प्रतमपि त्वं विचारवारिधौ निमग्नोदृश्यसे, न कोऽप्यस्माकंप्रत्युत्तरोदीयते, महाशय ! युष्मदनिच्छा-चेद्हठात्प्रीतिर्न भविष्यति, पुनरस्माकमेकंवचनंशृणु, यदि रोचतेतुभ्यंतर्हि तथैव त्वया विधीयतां नास्माकमाग्रहः। भवत्पुनु-

र्यधन्यांराजकुमारींपरिणेष्यति तर्हि कोऽस्माभिःसह विरोधः ? यदस्मन्नरेशपुत्रींनोद्वक्ष्यति ? राजपुत्रेण राजसुता परिणेतव्येति-
व्यवहारोलोकप्रसिद्धः, भवाँस्तु कामपि नूतनांरीतिंविधातुमुद्यतोऽस्ति, अस्माकं च राजकुमारी भवत्सूनोभार्यात्वेन प्रकल्पिता,
सेदानीमन्यस्मै राजकुमाराय प्रदीयते तद्युष्माकमपि लज्जाकरंकिं न भविष्यति ? लक्ष्मीदेवींस्वयमेव सज्जीभूय निजनिकेतनं-
समागच्छन्तींकोविज्ञोनिवर्त्तयेत् ? ततोद्वयोणाऽपि भ्रान्तचेतसा भवताऽद्याऽप्यस्मद्वचनंमाननीयम् । यतःप्राप्तावसरोविशेष-
विद्भिर्न हातव्यः । इति मन्त्रिगदितांगिरंनिशम्य मयाऽस्मद्भूपतिर्विबोधितः, स्वामिन् ? वैदेशिकानाममीषांमन्त्रिणामुचित-
प्रार्थनांविफलां मा कुरु, निराशीभूयैते पश्चाद्गमिष्यन्ति तत्रास्माकमपि का शोभा भविष्यति ? पुनःकनकध्वजकुमारःप्रेमला-
लक्ष्मींपरिणेष्यति चेदस्माकंविमलापुरीनरेंद्रेण साकं प्रेमवृद्धिःप्रत्यहंजनिष्यतीतिभूपतिंविज्ञाप्य तस्मिन्प्रतिकूलेऽपि मया
तत्सम्बन्धःस्वीकृतः । तदनु श्रीफलंप्रतिगृह्य पूगीफलताम्बूलदलानि सर्वेभ्यःप्रदत्तानि, तेन सिद्धमनोरथाःकनकरथमन्त्रिणो-
भूरिप्रमोदमचीकलन्, किन्त्वस्मन्नरेशाय केवलमिदंकर्म नारुचत् । अन्ये सर्वे कौटुम्बिकाःसंभूय प्रमोदमेदुराशया उचित-
सम्बन्धमिमंप्रशशंसुः । ततस्तन्मन्त्रिचतुष्टयी मामवादीत्, मन्त्रिपुङ्गव ? विवाहंस्वीकारयता भवता वयमनुगृहीताः, परन्त्वि-
दानीमस्माकंकुमारस्वरूपंदर्शय, येन वयमस्मत्स्वामिनोऽन्तिकंगत्वा यथास्थितंतत्स्वरूपंनिवेदयामः, वयमपि कुमारदर्शनम-
कृत्वाऽतृप्तमानसा इतोगन्तुमशक्नुमः, तस्मात्कुमारदर्शनेनास्माकंलोचनानिकृतार्थय, इति तेषामाग्रहंविदित्वा मायाजालंप्रसार्य
मयाऽवादि, भोमन्त्रितिलकाः ? कुमारदर्शनन्त्वस्माकमपि दुर्लभमस्ति, स त्वधुना तन्मातुलसद्मनि तिष्ठति, तच्चेतःसार्द्धशत-
योजनंदूरस्थंवर्त्तते, तत्सन्निधौ केवलातद्धुपमातैव वसति, तत्राऽपि स भूमिगृहस्थितोविलसति, अनिरीक्षिततदाननःकलाचार्योऽपि

बहिःस्थित एव तमध्यापयति, पुनर्युष्माकंतद्दर्शनाभिलाषाभूरुहोऽवकेशिभावंकथं न गमिष्यति ? प्रभाकरप्रभाऽपि तमवेक्षितु-
मिव परितःप्रसरन्ती विफलनिजसमीहिता दिनान्ते पश्चिमाशांसेवमाना तद्दिदृक्षुर्गृहीततपोव्रता सागरान्तर्निमज्जतीव ।
ततोभवदीयाऽऽशावल्ली मरुस्थल्यामिवाधुनिकस्थित्यांविकासभावं न गमिष्यति, इत्थंबोधिता अपि ते कुमारदर्शनमेव प्रधानं
कार्यमन्यमानास्तदाग्रहंनात्याक्षुः । ततस्तद्दर्शनैकपरायणांतांमन्त्रिच तुष्टर्यामद्गृहमहमनैषम्, ततोबहुलजलैर्विहितमज्जनाःसुरभि-
चन्दनादिना विलिप्तगात्रा महार्हवसनाभरणैर्विभूषिताङ्गा विविधपक्वान्नशालिदालीव्यञ्जनादिभिर्जनिततृप्तयस्ते परमसन्तोष-
मवापुः, अनल्पमणिरत्नादिप्रदानेन च तेषांमानसंप्रसन्नतरंविहितम् । तथाऽपि तैःकुमारदर्शनाग्रहोनाऽमोचि, प्रत्युत वर्द्धमान-
एवादृश्यत, पुनस्ते मामवोचुः–मन्त्रिन् ? कुमारस्वरूपंदृष्ट्वैव वयंव्रजिष्याम इति त्वं निःसंशयमवेहि, ततोमयाऽभाणि, मन्त्रि-
वर्याः ? असदाग्रहंविमुञ्चत, अत्युत्सुकताभाजां कार्याणि न सिद्ध्यन्ति, कुमारस्वरूपंदेवतानामपि विलोभनीयंप्रशस्यतरं विद्यते,
भुवनत्रयेऽपि तत्स्वरूपतुलनां न कोऽप्यर्हति, यया युष्मदधिपतिमानसमसन्तुष्टंभवेत्तादृशींप्रवृत्तिंवयंकथंकरिष्यामः ?, सप्तभिर्गल-
नकैर्गालितंपयोऽस्मभ्यंरोचते, न वयंमृषावादंब्रूमहे, सर्वथा निर्मायिनोऽस्माञ्जानीत, मायाविधानेन युष्मान्वञ्चयितुंनास्माकमु-
पक्रमः । प्रतारणीयाश्चेदन्ये बहवोविद्यन्ते, अत्रतु सत्यवार्त्तैव विधीयते, सर्वजनविश्रुतंमाररूपंकुमारं के न जानन्ति,
दीव्यरूपवैभवःकुमारोदिगन्तकीर्त्तिरनेकदेशेषु प्रशस्यते, अस्माभिर्युष्मदीयं वचनं प्रतिपन्नंतत्सम्यक्विचार्यैव स्वीकृतम्,
अस्मिन्कार्ये भवतांप्रयासः सकलजनश्लाघनीयोभविष्यति, यद्यप्ययंसम्बन्धोबलैश्वर्यविशेषशालिनामस्मत्स्वामिनांयोग्योनास्ति
तथापि शुभशकुनबलेन समागतानां युष्माकं वचनमस्माभिर्नव्यलोपि, तस्मादेवाऽयंसम्बन्धोजातः, शुभदैवेनैव भवतां

मनोरथभूरुहःसफलीभूतः । प्रेमलालक्ष्मीश्च भाग्यवती दृश्यते, तयाऽवितथभावेन हिमवत्सुताऽर्चनंविहितमन्यथा दीव्यरूपशान्येताद्दृशोवरःकुतोलभ्यते ? साम्प्रतं भवद्भिः कुमारदर्शनाग्रहोदूरतः परिहार्यः, अस्माभिरपि रोट्टकस्यकृतेऽर्धट्टविक्रयोविहितः, प्राक्तनकर्मप्रभावेणैवायं सम्बन्धोऽजनि, ततोऽस्मिन्विषये युष्माभिर्निःशङ्कतया स्थेयं किमपि विपरीतं नो वाच्यम् । एवंबहुधाबोधिताअपि ते निजकदाग्रहान्न विरतास्तदा तेभ्यश्चतुर्भ्यः प्रत्येकंकोटीधनं वितीर्य शान्तिनीतास्ततस्ते किञ्चिदपि न प्रोचुः, अहोजगति धनप्रभावोबलीयान्, येन बुद्धिमन्तोऽपि सद्योवशीभवन्ति.

उक्तञ्च—जाई[1] रूवं विज्जा, तिण्णिवि निवडंतु कंदराविवरे । अत्थुच्चिय परिवड्ढउ, जेण गुणा पायडा हुन्ति ॥ १ ॥

समाश्रयन्ति सर्वेऽपि, प्रायेण विभवं गुणाः । गुणश्चटति चापेऽपि, कोटिद्वयसमन्विते ॥ २ ॥

तथाच—"गुणेषु सर्वेषु धनंप्रधानमिति" स्मृतिकारः। ततोऽयःशलाकाऽङ्कितललाटाइवते सर्वे शीतला बभूवुः, ततोद्रव्येण दासीभूतास्ते मामवादिषुः, लग्नवासरोऽधुनैव निर्णेतव्यः, इतितेषांवचनंसमाकर्ण्य प्रमुदितोहं तान्समादाय सद्यः सिंहलाधीपमयासम् । विदितैतद्वृत्तान्तो नृपतिर्दौवारिकेण शास्त्रवेदिनोगणकानाकारयामास, विहितमज्जनादिसदाचाराः कुङ्कुमादिविलेपनैश्चर्चितभालस्थलाःस्वच्छवसनधारिणस्तेऽपि नृपान्तिकमागत्य शुभाशीर्वचनेन भूपतिंसंभाव्य तदादिष्टानि विष्टराणि भेजुः, ततोनृपभणितलग्नप्रश्नमवधार्य मौहूर्त्तिकैःषण्मासान्ते शुभलग्नसमयोनिष्कासितः । सपरिवारोभूपतिः सर्वेषां समक्षं तल्लग्नं निर्धार्य महार्हैर्वस्त्राभरणैस्तान्गणकादीन् सत्कृत्य विसर्जयामास, अथ ते प्रधाना अपि भृशंमोदमाना मौनमाधाय निजदेशं-

[1] जाती रूपं विद्या, त्रीण्यपि निपतन्तु कन्दराविवरे । अर्थ एव परिवर्द्धतां, येन गुणाः प्रकटा भवन्ति ॥ १ ॥

जिगमिषवस्ततोनिरगमन्। अस्माभिःप्रदत्तंसकलंधनन्तु तैः प्रागेव निजस्थानंप्राहीयत, क्रमेण ते निजराजधानींगत्वा नरेन्द्रं प्रणम्य कुमार्या विवाहसम्बन्धंव्याचख्युः। कुमारस्य प्रशस्तरूपगुणानतीव वर्णयामासुः, तद्वचनविन्यासंसमाकर्ण्य मकरध्वज-नरेशोऽपि भूरिप्रमोदमाकलयन् प्रधानचतुष्टयींलक्षसुवर्णदानेन सन्मान्य चिरंसमागतांस्तान् विज्ञाय निजावासंगन्तुंविसृष्टवान्। निश्छलमिदंकार्यंसमीचीनंजातमिति नृपतिना व्यज्ञायि, मन्त्रिणांकूटरचना तेन न ज्ञाता। अथविवाहयात्राया उपक्रमोऽस्मदीयनृपादेशेन राजलोकैर्विरच्यतेस्म, तथैवगजतुरङ्गमरथादि चतुरङ्गबलं तत्तदधिकारिणः सज्जयामासुः। वरयात्रिका अपि भूषणादिश्रृङ्गारान् सज्जीकर्त्तुंलग्नाः, इत्थमनेकविधां विवाहसामग्रींविलोक्य स्मिताननाः पौरजनाः कमपि नियोगिनं पृच्छन्तिस्म, अकालिकोऽयमलौकिकः समारम्भः किंनिमित्तकः? तेन भणितं—यूयं किं न जानीथ? साम्प्रतं नृपकुमारः परिणेतुं यास्यति, ततःश्रुतकुमारलग्नमहोत्सवाः पौरजना अपि भूरिप्रमोदेन रोमाञ्चकञ्चुकंबभ्रुः। इदानीञ्च कुमारदर्शनमस्माकमदृष्टपूर्वं भविष्यतीति विचिन्तयन्तः सर्वे जनास्तद्दर्शनैकलोलुपा अभूवन्। इत्थं सकलसमारम्भं निरीक्ष्य सिंहलभूपो मां रहसिनीत्वा सोपालम्भमचीकथत्, रेकूटकारिन्! स्वेच्छाचारिन्? जनोपहास्यविधायिनाऽनेन समारम्भेण दीव्यरूपाया राजकुमार्या जन्म वृथा कर्त्तुंकथमुद्यतोऽसि,? सुरक्षितमपि कूटकारिणांछद्माऽविदितं न तिष्ठति, चतुरिकामण्डपे कनकध्वज-स्वरूपंप्रकटीभविष्यति, तदा दक्षस्वभावा प्रेमलालक्ष्मीस्तंकुष्ठिनंकथंवरिष्यति? तदानीमसमञ्जसकारिणामस्माकंलज्जा कथंस्थास्यति? लोकेमुखञ्चकथंदर्शयिष्यामः? ततोऽहमवोचम्—स्वामिन्! न काऽप्येतच्चिन्ता भवता विधेया, कुलदेवतांत्वंसमाराधय, तेनाऽस्माकंसकलंकार्यंसेत्स्यति। परिहृतान्यकार्योनृपतिः स्वीकृतमद्वचनोनिजनिकेतने कुलदेवींसमाराधयितुमुपविष्टः,

तद्ध्यानाकृष्टा देव्यपि प्रत्यक्षीभूय तमवोचत्, नराधीश ? मुहुर्मुहुर्मां कथमाह्वयसि ? नेदृग्विधं सुभक्तानां लक्षणम्, नृपेण सविनयमभिहिता देवी, मातः ? मयि वारयत्यपि धृष्टेन मन्त्रिणेदंविवाहरूपमसमञ्जसंकार्यंप्रारब्धमधुना त्वत्प्रभावेणैवास्मदीयकार्यसिद्धिर्विधते ऽतोमयि कृपांविधाय केनाऽप्युपायेन कुमारंनिरामयंकुरुष्व, अन्यथा नास्ति मेऽमुष्माद्दुःखसागरादुद्धारः, त्वां विहाय कमपरंशरणंव्रजामि ? यतस्त्वं मे कुलदेव्यसि, अतोऽस्मदीयंदुःखंत्वयैवोपशमनीयम् । देव्याचख्यौ—जननाथ ? स्वयं विज्ञोऽसि किं न जानासि ? पूर्वार्जितकर्मणाऽयंकुमारोनिरामयो न भविष्यति.

यतः—पत्रं नैव यदा करीरविटपे दोपो वसन्तस्य किं, नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं, यद्भाग्यं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥ १ ॥

तथाच—ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः।
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे, सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ २ ॥

इह खलु विषमः पुराकृतानां, भवति हि जन्तुषु कर्मणां विपाकः । हरशिरसि शिरांसि यानि रेजु-र्हर हर तानि लुठन्ति गृध्रपादे ॥३॥ शशिनि खलु कलङ्कं कण्टका पद्मनाले, जलधिजलमपेयं पण्डिते निर्धनत्वम् । स्वजनजनवियोगो दुर्भगत्वं सुरूपे, धनवति कृपणत्वं रत्नदोषी कृतान्तः ॥ ४ ॥ कस्य स्यान्न स्खलितं, पूर्णाः सर्वे मनोरथाः कस्य । कस्येह सुखं नित्यं, दैवेन न खण्डितः को वा ? ॥५॥ कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाऽशुभम् ॥६॥ प्रचलति यदि मेरुः शीततां याति वह्नि-रुदयाति यदि भानुः पश्चिमायां दिशायाम् ॥ विकसति यदि पद्मं पर्वताग्रे शिलायां, तदपि न

चलतीयं भाविनी कर्मरेखा ॥ ७ ॥ यथा धेनुसहस्रेषु, वत्सो विन्दति मातरम् । एवं पूर्वकृतं कर्म, कर्त्तारमनुधावति ॥ ८ ॥

तथाऽपि तव चिन्तां नाशयिष्यामि, राजन् ! कुमारस्य लग्ननिशायांदैवप्रेरित आभापुरीनरेशश्चन्द्रराजोनिजविमातरं भार्यांश्चानुसरन्विमलापुरीं समेष्यति, प्रेमलालक्ष्मीश्च स एव परिणेष्यतीत्यहंसाधयिष्यामि त्वदनुचिन्तितम् । तस्मात्त्वंधृतधैर्यो-विवाहमहोत्सवंसमारभस्वेतिनिगद्य देवी तिरोबभूव, ततो लग्नवासरे निकटवर्त्तिनि समायाते भूरिप्रमोदमादधता सिंहलाधीशेन सविस्तरंलग्नोत्सवःप्रारभ्यत, निर्णीतप्रयाणघस्रे स समादिष्टवान्निजानधिकृतपुरुषान् । यथा यूयंसत्वरंसकलंसामन्तवर्गंसपरिवारंधृतसारनेपथ्यंमेलयत, ध्वजपताकाभिःसमलङ्कृतायांपुर्यांमहोत्सवंप्रवर्त्तयत, कुमाराय हिरण्यरत्नकुथोपशोभिनंप्रधानंद्विरदरत्नंसमानयत वयंयेन विवाहस्थाने, व्रजामः । प्रमाणंदेवस्याज्ञेति भणित्वा यथाधिकारंराजनियोगिनोनिजस्वाम्यादेशंयथादिष्टं-संपादयामासुः । ततःसमारूढप्रसाधितधवलसिन्धुरेन्द्रश्चन्द्रोज्ज्वलपटान्तरितदेहसीमा, प्रभञ्जनसमाहतध्वजांशुकाविभूषितकाञ्चनमयस्यन्दनसमारूढेनोद्भटशृङ्गारधारिणाऽहमहमिकया समायातेन राजलोकेन परिवारितः, प्रमोदभरभासुरसुराङ्गनानुकारि-नृत्यत्तरुणीजनावरुद्धसमृद्धराजपथो, वाद्यमानचतुर्विधमङ्गलातोद्यहृद्यविविधरवापूरितदिक्चक्रः, कनकरथसंस्थितेन कनकरथ-भूपेनाऽनुगम्यमानो ज्यायसीभिःकुलाङ्गनाभिराशिःशतैःसंभाव्यमानः प्राकारभवनोपरिसंस्थितजनतया निजाङ्गुलिभिर्मुग्धजना-न्दर्श्यमानः कनकध्वजकुमारो महताडम्बरेणराजमार्गमुल्लङ्घयन् क्रमेण विमलापुरीमिमांसमागात् । मकरध्वजनृपतिरस्मदागमनं-समाकर्ण्य रोमाञ्चितवरतनुःसपरिवारोऽस्माकंसंमुखंसमेत्य सोत्साहंसंमील्य निवासाय वरमेकंवराय सोपस्करंप्रासादंप्रदत्तवान्, अन्येषामपि यथोचितवासस्थानानि प्रदत्तवान् । ततश्च—

पक्वान्नकं स्वादुरसार्द्रकाणि, सौरभ्यरम्यौदनसूपसर्पिः । सुधासुधाकारिपयो दधीनि, सुव्यञ्जनानि क्षितिभृद्घनानि ॥१॥ नानाविधं स्वादिमखाद्यखण्डं, मृदुश्च मृद्वी वरदाडिमानि । पूगीफलैलाऽमरपुष्पचूर्ण–घनानि ताम्बूलदलानि चारु ॥ २ ॥

एवमनेकविधांरसवतींसद्योनिर्माय्य वरयात्रिकान् भोजयामास, अथाऽस्यांरजन्यांकनकध्वजकुमारस्य विवाहलग्नंनिर्धारितमस्ति, पूर्वोक्तः सकलोव्यतिकरोयोमयान्यवेदि, तत्र नो भवता मनागपि संशयितव्यं, राजन्? भवतःसविधे यदि वितथंभणामि चेदहं मदीयांजिह्वांन च्छिनद्मि? । अधुनाऽस्माभिः प्राक् समाराधितकुलदेवीवचनेनास्याःपुर्याःसप्तसु प्रतोलिकासु निजसंकेतं विज्ञाप्याप्तसेवकाः, उपवेशिताः. पुरैव कुलदेव्या निवेदितमेतत्—

प्रागाभायां द्वे स्त्रियौ मोदमाने, स्वर्गाभायां रात्रिचर्यां दधत्यौ। आगन्तारौ तद्गतिं वीक्षमाण-श्चैको वीरो दृश्यते सैव चन्द्रः॥१॥

इतिदेव्या भारती भवताऽत्रसमागतेन सर्वथा सत्यापिता । त्वद्दर्शनेनमहानानन्दःसमजनि.

तथैव—हर्षोद्रेको भवति सुलभः सङ्गमे जायमाने, सद्विद्यानां परहितकृतां प्रेयसां तथ्यवाचाम् । यद्यस्माकं सततसुखदं दर्शनं तावकीनं, जातं जातं किमधिकमहं जीवनं वच्मि तुभ्यम् ॥ १ ॥ सद्धर्माणां सुरतसुभगा कामिनी नैव मान्या, नीलाब्जानां शशधरकला नैव तोषं ददाति । क्षामाङ्गानां विषमरुजया भण्डनं नो सुखाय, नृणां शांतिर्न भवति मनोऽभीष्टलाभोज्झितानाम् ॥ २ ॥ तस्मात्सद्यो भव नरपते ! कार्यमेतद्विधाता, अस्माकीनं परहितकृते सज्जनाः सोद्यमाः स्युः । त्वय्यायत्तो विपुलविभवो राजकीयो विवाहो–योग्याऽयोग्यं कुरु वरमते ! सत्प्रवृत्तिं विचार्य ॥ ३ ॥

राजन् ! किंबहुनोक्तेन ? ष्प्रविलम्बेन प्रेमलालक्ष्मीं साक्षाल्लक्ष्मीमिवपरिणीय भवानस्मभ्यंददातु, नोचेत्त्वां नैववयंमो-

स्याम । अतोऽस्मदभ्यर्थनांत्वंसफलय, अस्मत्परिपन्थिनाञ्च हास्यभाञ्जि मुखानि मा कुरु; निग्रहाऽनिग्रहंकर्त्तुंभवान्समर्थोऽस्ति,

किञ्च—कोलाहलेन बहुना नृपसन्निवेशः, संराजते निकटवृत्तिरितो नरेश ! ।
वृत्तान्तमेतदखिलं तव रक्षणीयं, जानाति चेत्स नृपतिर्नहि तत्र शोभा ॥ १ ॥

अतोमौनमुद्रांसमाधाय कार्यमेतद्विधाय त्वं निवृत्तोभव, पुराऽपिमङ्गलकलशादिकैर्बहुभिर्जनैरेतादृशानि कार्याणि भाटकेन विहितानि, नत्विमांरीतिंत्वंप्रथमंप्रवर्त्तयसि. विहितेऽस्मिन्कर्मणि त्वंजुगुप्सां न गमिष्यसि । किञ्च—साध्यं सुकर्म बहवः प्रतिपादयन्ति, दुःसाध्यकर्मनिरताविरला धरायाम्। भ्राम्यन्ति कुम्भिनिवहा गिरिगह्वरेषु, सन्मौक्तिकानि दधते हि गजाः कियन्तः ॥१॥ अतोविकल्पजालंनिर्मूल्य मद्वचनं मानय, सृतमधुनाऽनल्पेनाग्रहेण, लग्नवेला यथा न विचलति तथा त्वया विधातव्यम्,

यतः— दुर्गम्ये विषमेऽपि कर्मजलधौ यादोभि रापद्गणै—र्भीमैर्भीमपराक्रमा निजधिया क्रामन्ति नौकल्पया।
नो कीर्त्तिर्गुणवत्त्वमत्र विदिता नैवोपकारश्रुतिः, हाहा ! भीरुकचेतसां किमपरं जीवन्मृतो गीयते ॥ ४ ॥

वृथाविवादेन यामिनी गमिष्यति, चिकीर्षितं कार्यं न सेत्स्यति, असमदीयः समारम्भोऽरण्यकुसुमवन्मुधाभविष्यति, अतः कुलदेवतागिरंसत्यापय. कनकध्वजसमानमेव त्वां वयं जानीमः, इत्थं सयुक्तिकंहिंसकमन्त्रिमन्त्रितं निशम्य चन्द्रराजःसिंहलेशं प्रावोचत्, भूपते ! अशिष्टजनसंस्तुतेयंप्रवृत्तिर्न्यायनिष्ठानां भवादृशानां सर्वथा नानुष्ठेया, यतः—सन्तः सदैव नयवर्त्म भजन्ति भद्रं, काकुत्स्थकीर्त्तिमनघामनुसर्त्तुकामाः । जागर्त्ति मृत्युभयमन्वहमङ्गभाजां, धीमान् क इच्छति धुरं कपटस्य वोढुम् ॥१॥ भ-

यतः सचिवस्याभिधानन्त्वन्वर्थमेव निरमायि, अहो ? स कीदृशंव्यलीककर्त्तुंव्यवस्थितः, मया त्वेतादृशं गर्हणीयमाचरणमश्रुत-पूर्वं तद्दर्शनंतु कुतः ? किञ्च मनोरमामिमामनवद्याङ्गीं राजकन्यां परिणीय तुभ्यंकथंददामि ? एवं कूटनीतिमनुपालयतोमे चात्रत्वंविलयंयाति, अतोऽहंनयहीनो न भविष्यामि.

यतः—नयनयनविहीनो बुद्धिमानप्यनल्पं, स्खलति सुजननिन्द्यो जायते क्षीणपुण्यः । परभवसुखलेशं विन्दते नैव काले, फलति कुलिसमानं देहिनां कर्मवृक्षः ॥१॥ तथा च—अनेन पापाचरणेन मत्कुलं, निन्दास्पदं केवलमेव जायते। तस्मादिदं नैव विधातुमुत्सहे, जानन् हि कः पापरतिं विदध्यात् ॥ २ ॥ किञ्च—स्वार्थैकमूढा यदि यूयमीदृश–मनर्थराशिं सहसा चिकीर्षत । अहन्त्वनार्योचितकर्मसिद्धये, निःस्वार्थकामः कथमुत्सुकः स्याम् ? ॥ ३ ॥

नरदेव ? अधमजनोचितामिमां कूटकल्पनांसन्त्यज्य विशुद्धमार्गमनुसर.

यतः—विशुद्धाऽध्वरता येषां, मनीषा पावनी सदा । ते नरा नरमूर्धन्या–वन्द्यन्ते त्रिदशैरपि ॥ १ ॥

इति चन्द्रराजेन बहुभिर्युक्तिभिर्बोधितावपि नृपमन्त्रिणौ निजाग्रहंनामुचताम् । पुनश्चन्द्रराजश्च तौ मिलित्वाऽनेकच्छल-विधया प्रसन्नीकृत्य निजाभिप्रायं ग्राहयामासतुः । ततश्चन्द्रराजेन दीर्घकालंविचिन्त्य परिणयनंस्वीचक्रे. अथसिंहलाधीशो-भृशंमोदमानःसत्वरंवरंप्रसाधयितुंवरघोटकसंभारञ्च कर्त्तुंसमादिदेश, प्राप्तनिजस्वामिनिदेशाः सचिवादयः स्वस्वकार्याणि प्रसाधयामासुः, प्रमोदवाद्यानि च परितोदध्वनुः। कनकध्वजस्तु निजावासे प्रच्छन्नतयातैः संस्थापितः। तत्प्रतिनिधिचन्द्रराजंपरि-कल्प्य सकलः समारम्भोऽक्रियत, चकोर इवाऽवसरज्ञश्चन्द्रराजोनिजचेतसि विवाहमहोत्सवं मन्यतेस्म. ततः सिंहलराजसमादिष्टा

अधिकृतपुरुषा अनर्घ्याभरणनेपथ्यैर्वरंविभूषयामासुः। प्रकृत्याऽपिचन्द्रराजंवर्णयितुममरेन्द्रोऽप्यप्रभुः, पुनरलङ्कारशतैरलङ्कृते तस्मिन् किमु वक्तव्यम् ? विचित्रध्वजतोरणैरलङ्कृताःक्षुद्रघण्टिकाभिर्नादिताःप्रजवितुरङ्गमवृषभवर्यैःसुयोजिताःस्यन्दनाः स्वच्छशिखरश्रेणयःप्रासादा इव परितोविरेजुः। रथानां रणद्भिःकिङ्किणीवृन्दैःसर्वतोनभोविवरंपूर्यतेस्म. विविधमौक्तिकमालावलम्बिन्योनरविशेषैर्वाह्यमानाःसहस्रशःशिविकाःप्रमोदवार्धौपर्यटन्त्योनौका इव लक्ष्यन्तेस्म. वरविभूतिंनिरीक्षितुंसहर्षं समागताविमानारूढादेवाङ्गना इवाऽभ्रंलिहप्रासादशिखरारूढा विविधवसनालङ्कृता भामिनीव्राताःसकौतुकंचेष्टयामासुः। पवनान्दोलितसितध्वजपटानिःस्वना झणत्कारैश्चन्द्रराजविवाहं सुरपतिं ज्ञापयितुमिव गगनाङ्गणंभेजुः। अनेकविधवाद्यनिनादैर्निरवकाशमम्बरं विदित्वा निर्जरेशोऽपि सशङ्कितोऽभूत्। समानरूपवयसोवरजना महिलावृन्दानि च प्रवरालङ्कृतिभिः सज्जीभूय वरघोटके निष्क्रामन्तिस्म. क्रमाद्वरघोटकोराजपथंसमासदत्। वरंनिरीक्षितुकामाः पौरजना निजकृत्यानि परित्यज्याहमहमिकया राजमार्गमसङ्कीर्णमपि सङ्कीर्णतांनिन्युः। आनन्दमेदुरा अदूरस्थिता जनव्राताः परस्परमित्थं व्याचख्युः, सखि ? विलोक्यताम् ? सिंहलराजकुमारः कनकध्वजोरूपेण विजितकामःप्रवरंकरिणमारूढःसमागच्छति, तमिस्रायां तं विलोकितुमपारयतांजनानांसौख्याय दिवाकरेण वरजन्यसमानाः प्रेषिता निजरश्मय इव सर्वतः सहस्रशोदीपा दीप्यन्तेस्म, तदानींदिनकरवाहनंसमारूढो निशाकरोऽलक्ष्यत। अहो ? वरघोटकंचन्द्रराजःसमारूढोऽस्ति, गीतानि पुनःकनकध्वजस्य गीयन्तेस्म, चन्द्रशोभाऽपि विपुलांवृद्धिंसम्प्राप्ता, केचिदेवंवदन्ति, नायं कनकध्वजः कोऽप्यन्योविद्यते, ईदृशंरूपंतस्मिन्कथंघटते ? पुनरपरे कथयन्ति, नास्माभिः कनकध्वजोदृष्टः केवलंश्रुतमात्रः, यादृशःस श्रुतस्तादृशस्तेजस्वीदृश्यतेऽयम्, ईदृगपूर्वरूपशालिपतिप्राप्त्या-

स्माकंराजसुता भूरिभाग्यवती कथं न गीयते ? अस्य कुमारस्य जनन्यपि धन्यवादमर्हति, यदीदृशंपुत्ररत्नंप्रसुषुवे । अहो ! अस्यरूपलावण्यम् ? अस्याग्रे देवस्वरूपमपि कियन्मात्रम् ? इत्थंजल्पमानेषु जनव्रातेषु दीव्यशोभाकलितोवरघोटकःशनैः-शनैःप्रचलञ्जनमानसानि रञ्जयँश्चमण्डपान्तिकंजगाम, प्रमदाजनोऽपि मण्डपस्य निकटवर्त्तित्वाद्गुरुप्रमोदपूर्वकंमङ्गलगीतानि द्विगुणितस्वरेण गायतिस्म, ततोवरराजोगजवरादुत्तीर्य सवयोभिःसमन्वितःसावधानतया तोरणस्य सन्निधौस्थितः ।

इतिश्रीचन्द्रराजचरित्रे द्वितीयोल्लासे तृतीयःसर्गः ॥ ३ ॥

अथ पूजनपात्रहस्ता, सधवाभिःपरिवारिता श्वश्रूस्तत्र समागता, गुरूपदिष्टेन विधिना तंपुङ्खयित्वा वरंवरमण्डपमनैषीत् । ततो वरोमातृकागृहंगत्वोपविष्टः । अत्रान्तरे प्रेमलालक्ष्मीमपि चिप्रंविविधालङ्कृतिभिस्तत्सहचर्यःसज्जयामासुः, यस्याः-श्रवणयोस्तत्कालसमागतमन्मथनृपरथचक्रयुगलमिव मणिमयकुण्डले विराजेते । यस्याःकण्ठकन्दले वदनशशिशङ्कया समागतस्तारकगण इव लम्बमानोनवमालोहारोभ्राजते । यस्यानितम्बबिम्बेऽतिविशाले गगनाभोगे सुरेन्द्रचापरेखेव पञ्चवर्णरत्नमयी काञ्ची विराजते, यस्याहृदये यावकरसरञ्जितचरणयुगलप्रतिबिम्बच्छलेन कुमाराऽनुरागोऽमानिव बहिःस्फरति, एवंसविशेषप्रसाधनसाधिता मत्तगजेन्द्रगामिनी मञ्जुमञ्जीरकासिञ्जनश्रवणेन समागतस्य मरालस्य गतिंस्खलयन्ती चेटीचक्रेण परिवृता नरेन्द्रतनयाऽपि वन्दनमालाऽलङ्कृते वरवेदिकाभवने समायाता, ततस्तत्क्षणसमागतैर्ब्राह्मणैर्हवनकर्मणि समारब्धे महर्द्ध्या पाणिग्रहणविधिःप्रावर्त्तत, तदानींवरकन्ययोःस्वजनपक्षाभ्यांप्रमुदितप्रमदाजनारब्धमङ्गलवादसनाथीकृत-शिष्टाचारोव्यरच्यत, सौरभ्यशालिकुङ्कुमविलेपनैस्तदधिकृतपुरुषा मण्डपगतान् जन्ययात्रिकान् रञ्जयन्तिस्म, ततोऽतिसुरभीणि

कुसुमदामानि समर्पितानि, केऽपि महामोदमयान् पटवासान्वितरन्तिस्म, केचित्कर्पूरैलादेवकुसुमकलितान्यहिवल्लीदलवीटकानि समर्पयन्तिस्म, अन्ये पुनरार्द्रपूगीफलचूर्णानि ददुः, ततोभूपतिर्विवेकतोमहार्हैर्विविधवसनैःसर्वान्संभावयामास, विशेषतोवरप्रीतये प्रवरतुरङ्गमाःकम्बुप्रमुखचेत्रसम्भूता मन्दभद्रजातीया महत्योगजघटाश्च व्यतीर्यन्त, अत्रान्तरे वेदिकायां लाजाहोमंविधाय भूरिप्रमोदेन वरकन्ययोश्चतुरिकामण्डले परिभ्रमणं समर्थितम् । उभयोर्योग्यतमंसम्बन्धंनिरीक्षमाणास्तत्रस्थिता लोका मिथोवदन्तिस्म, इदंवरकन्यामिथुनंपञ्चेषुरतितुलनामनुसरति, जगत्प्रभुरनयोःसौभाग्यंसदैव रक्षतु, अन्येऽपि सर्वे जनाःशुभाशीर्वचनैस्तयोः शान्तिमैच्छन् । तदानींवीरमतीगुणावल्यावुभेऽपि नगरचर्यांविलोकयन्त्यौवरंप्रेक्षितुंवरमण्डपे समागत्याऽनिमेषदृष्ट्या तंविलोकितुंलग्ने, तावच्चत्वारि मङ्गलानि वर्त्तितान्यभवन्, विधिपूर्वकंलग्नविधिःसम्पूर्णोजातः । गुणावली निजश्वश्रूमभाषत, भगवति ! अयंवरोमे परिचितोलक्ष्यते, प्रायस्तवैवाऽयंसूनुर्विद्यते, इत्थंतदीयवचनंनिशम्यासंभाव्यंतन्मत्वा वीरमती तदुपरिलक्षं न ददौ, पुनर्वरंप्रेक्षमाणा गुणावली दत्तावधाना भणतिस्म, मातृवर्ये ! मद्वचनमवितथंत्वंजानीहि, मत्पतिश्चन्द्रराज एवायमस्ति, अनेन लग्नमहोत्सवेनेयंप्रेमलालक्ष्मीर्मम सपत्नी जाता, यथाऽऽवयोःसमागमनमत्रसंजातं तथैवाऽयमपि केनचित्प्रयोगेणात्रसमागतः । मातः ? अस्मिन्विषये मदीयंमानसंसंदिग्धंवर्त्तते, इमं मे संशयंसद्योदूरीकुरु, ततोवीरमती जगौ, मुग्धे ! ईदृशमसमञ्जसंकिंजल्पसि ? मिथ्या संशयेन निजात्मानंकिंमलीनयसि ?, चन्द्रराजस्त्वाभापुर्यांसुप्तोऽस्ति, अयन्तु कनकध्वजकुमारोविद्यते, मया प्रागेव तुभ्यंकथितं, चन्द्रनरेशात्प्रशस्तरूपशालिनोबहवोमानवा वरिवर्त्तन्ते, तत्प्रतीतिस्तव संजाताऽधुना, दिवानिशंचन्द्रचन्द्रेति किंरटसि ? त्वत्पतिश्चन्द्रस्तु मन्त्रप्रभावेण मया भुजग इव निबद्धः शयनासने

निद्रासुखमनुभवति, तत्र गत्वाऽहंमोचयिष्यामि तदा स निद्रामुक्तोभविष्यति, मदीयामुक्तिंसत्यांमन्यस्व, ईदृशंग्रथिलत्वं मा विधेहि, यंकञ्चन विलोक्य चन्द्रचन्द्रेति मा वद, जगत्यस्मिन् समानरूपवयसोऽनेकेऽङ्गिनोदृश्यन्ते, इतिवीरमतीवचनानि निशम्य गुणावली मौनमुखी बभूव, तथाऽपि श्वश्रूवचसि तदीयंमानसमविश्वस्तंजातम् । यतः—

यो येन दृष्टो विशदः पदार्थः, स केन युक्त्याऽपि निवर्त्यतेऽत्र?। सत्यं हि सर्वत्र विकाशमेति, कियच्चिरं कूटकलाकलापः ॥१॥

अथ मकरध्वजभूपोनिर्जितमीनकेतनंवरंविलोक्य हर्षभरेणोद्भिद्यमानंरोमाञ्चभरंबभार, रमणीयरमणीजनवल्लभंकमनीयरूपलावण्याऽऽगारंजामातरंश्लाघमानोनिजात्मानंधन्यतमममन्यत, अहो ! ईदृक् तेजस्वी वरो विधिना मद्भाग्येनैव निर्मितोऽन्यथा समानगुणरूपयोर्योजना सुदुर्लभा, सकलगुणमञ्जूषा मत्पुत्री यथाविभाति, तथैवाऽस्या वरोविधिना संपादितः, उभयोःसाहचर्यंसततंसम्पद्यताम्, अनयोःसौख्यपरम्पराऽविकला प्रतिदिनंप्रवर्द्धताम्, गार्हस्थ्यस्थितिमनुभवतोरनयोःसौभाग्यमविचलमस्त्वितिस्वचेतसि भृशंमोदमानोनरेशोनिरावेशःकरमोचनसमये समयज्ञोमणिकुण्डलाकिरीटप्रमुखंमहार्हमाभरणराशिंगजाश्वरथवसनाऽशनभाजनकाञ्चनरजतशयनादिकंविविधंवस्तुजातंजामात्रे प्रदत्तवान्, येन नृपस्योदारता सर्वत्र प्रासीसरत् । ततोवरकन्याभ्यांकंसारादनाचारोऽक्रियत, निजस्वामिनोमुखारविन्दंविलोकमाना प्रेमलालक्ष्मीरपि भूयांसंप्रमोदंबभार, एतत्संपादने केवलंविधातुर्महोपकारं सा मेने। इतोभवितव्यताऽनुसारेण तस्यादक्षिणंलोचनमस्फुरत् । तेन सा भृशं चिन्तातुराऽजनि, अहो ! अकस्मादयमाघातोमांपीडयिष्यतीति निजचेतसि चिन्तयन्ती सा कस्याऽप्यग्रे तद्वृत्तान्तंनाऽचीकथत् । अथैवंपरितोषकरे विवाहमहोत्सवे निर्वृत्ते सिंहलाऽधीपेन विविधदानानि दत्त्वाऽर्थिजनाःसन्तोषिताः, प्रवराणि मङ्गलवाद्यानि परितः-

प्रणेदुः, लोकाश्च स्वधामानि प्रेक्षितुकामा अभवन्। अस्मिन्समये वरकन्ये रहसि सारीक्रीडां रन्तुमुपाविशताम्, प्रथमं चन्द्रराजःसुकुमारकरकमलेनाक्षान् गृहीत्वा नृपप्रमुखा यथा न जानन्ति तथैकां समस्यांपठित्वा प्रचिक्षेप.

तद्यथा—आभापुरम्मि निवसइ, विमलपुरे ससिहरो समुग्गमिओ। अपत्थिअस्स पिम्मस्स, विहिहत्थे हवइ निव्वाहो ॥१॥

इत्थंसमस्योक्तिनिशम्य प्रेमलालक्ष्मीश्चिन्तयितुंलग्ना, दक्षोऽप्ययमसमञ्जसंकथंभणति ? तद्रहस्यमजानन्ती सा तानेव पाशान्समादाय दक्षतया तदुत्तरंददौ, तद्यथा

वसिओ ससि आगासे, विमलपुरे उग्गमीओ जहासुखं। जेणाभिभूओ जोगो, स करिस्सइ तस्स निव्वाहो ॥ १ ॥

चन्द्रराजेन प्रथमंपठितम् ( आभापुरम्मीत्ति ) आभापुर्यां निवसँश्चन्द्रोविमलापुर्यामुद्गमितः, अर्थादागतः, तथाऽप्यप्रार्थितस्य प्रेम्णोनिर्वाहोविधिहस्तगतोभवति, अर्थादिदंप्रेमाऽयाचितंलब्धंतस्य निर्वाहस्तु दैवानुकूल्येनैव सेत्स्यति, इतिचन्द्रराजोक्तगाथाभावार्थमविदित्वा प्रेमलालक्ष्मीराभापुरीमाकाशंमन्यमाना तदुत्तरंदत्ते। ( वसिओससीत्ति ) नभस्तलवासी चन्द्रोयथासुखमिदानींविमलापुर्यामुदितः, येनोभयोर्योगोघटितः स एव तस्यनिर्वाहंकरिष्यतीतिभावार्थघटितांतदुक्तगाथांनिशम्य चन्द्रराजोऽन्यचिन्तयत्, यदियंमुग्धा दक्षाऽपि मत्पठितगाथारहस्यं न ज्ञातवती, अतोऽधुना स्पष्टंज्ञापयामीतिविज्ञाय पाशहस्तश्चन्द्रराजःसरसंपुनर्जगाद—पूर्वदिगङ्गनातिलकायमानायामाभापुर्यांचन्द्रराजोनिवसति नीतिनिपुणः, तद्धाम्नि क्रीडनार्हा अतिरमणीयाः सारीपाशा वर्त्तन्ते, तादृग्विधा अन्ये कुत्राऽपि नैव दृश्यन्ते, यद्यत्रेदानींते लभ्यन्ते तदातैः सप्रमोदमावांक्रीडावहे, अन्यथा वृथैव निशा निर्गम्यते, एवमभिधाय चन्द्रराजेन पाशप्रक्षेपोविहितः, ईदृग्विधानि तद्वचनानि समाकर्ण्य विशालबुद्धिःप्रेमलालक्ष्मीः

स्वचेतसि व्यचिन्तयत्—मतिमतांमान्योऽप्ययंसङ्गतिहीनंकथंभाषते ? सिंहलदेशललामभूतसिंहलपुरीतोमांपरिणेतुमिहाऽयंसमागतः तत्प्रशंसामकुर्वन्नाभापुरीस्थितानद्यान्वर्णयति, तत्र कोऽपि हेतुर्भविष्यति, आभापुरीपतिश्चन्द्रराजःप्राच्यांदिशि तिष्ठति, कनकध्वजस्तु सिंहलदेशे निवसति, उभयोर्नाऽत्रसम्बधोघटते, किंवा सिंहलाधिपसूनोःप्रतिनिधीभूय चद्रराजोऽयंमांपरिणेतुंकिंसमागतः ? इदंकार्यंभेदग्रस्तंनूनंदृश्यते, एवंध्यायन्त्यांतस्यांसारीक्रीडा समाप्तिमगमत् । दक्षमतिःसातु चिन्ताचान्तमानसा भृशं जज्ञे, अथचन्द्रराजोभोजनायोपविष्टः, यथाऽवसरंसमयविदा तेन पानीयंमार्गितम् । स्वच्छसुरभिशीतलंजलमानीय प्रेमलालक्ष्म्या स्वयमेवाऽदायि तस्मै,

यतः—स्त्रीणां स्वभर्त्तैव सदा निषेव्यो–यतः स तासां भजनीयदेवः । या स्वामिनं संभजते प्रमोदा–त्तस्यास्तु तीर्थानि गृहे वसन्ति ॥ १ ॥ तथाच—भर्त्तृसेवा महाभाग्यैः, सतीभि र्लभ्यते सदा । अन्ये भोगभरास्तासां, सुलभास्तत्प्रभावतः ॥२॥

ततश्चन्द्रोऽब्रवीत्, यदि जान्हवीतोयमासाद्यते तर्हिमहानानन्दोऽत्रभवेत् । तच्छ्रुत्वा सा व्यचिन्तयत्, नन्वयंसागरोपकण्ठंसिंहलदेशे निवसति, गङ्गाप्रवाहस्तु प्राचींदिशंपवित्रयति, दूरदेशास्थितांतांकथंस्मरति ? ज्ञातंमया ? तन्मातुलगृहंतत्र भविष्यति, अतस्तज्जलंसरतीति संप्रधार्य मनःसमाधानंतया विहितं, तथाऽपि तन्मानसमधिकतरावेदनाऽभजत्, निजपतिमानसञ्च मनागुद्विग्नंतयाऽबोधि। अथनिजकार्यसाधकःसिंहलेशश्चन्द्रराजंरहसि नीत्वा बभाषे, राजन् ? अधुना रात्रिःकिञ्चिदवशिष्टा विभाव्यते, संपादनीयंकार्यञ्च बहुलंविद्यते, दुर्लभमिमंसमागमंविहातुंतव मानसंनोत्कण्ठते, तथाऽप्यत्र विलम्बोविधातुंनयुज्यते, पुनरस्माकंसमागमःसहस्रशोभविष्यति, अस्मिन्स्थाने त्वया चिरं न स्थेयम्, सत्त्वरंनिर्गम्यतां, विलम्बेनास्माकंकार्यंविनङ्क्ष्यति,

यतः—कार्यदक्षनरो याव-त्कार्यहानिर्न जायते । तावत्तत्त्वधिया ज्ञात्वा, तं देशं परिवर्जयेत् ॥ १ ॥

इत्थं परुषाक्षरां तदुक्तिं चेतसि ध्यायँश्चन्द्रराजस्ततः प्रयातुं मनश्चक्रे, यतश्चोक्तम्—वीर्यं तदेव परकीयपराजयज्ञं, धैर्यं तदेव समता गुरुसङ्कटेऽपि । धर्मः स एव शुभचिन्तनमस्ति यत्र, दाक्ष्यं तदेव समयोचितवर्त्तनञ्च ॥ १ ॥

किञ्च तेजस्वी तुरङ्गमस्तर्जनां न सहते, जगज्जनाःसमरभूमौ विजितसुभटं शूरवीरं कथयन्तु नाम, पुनर्यथार्थशूरास्तु वचनमात्रमसहमाना एव निगद्यन्ते, विलोक्यतांवचनमात्रेण परिणीतां प्रमदां त्यक्तुमयं तत्परो जातः, किञ्चिन्मात्रमप्यौदासीन्यं स न जगाम, अथ तूर्णं सज्जीकृते रथे प्रेमलासहितं चन्द्रराजमुपवेश्य सिंहलेशो निजोत्तारकमचालीत्, वर्त्मनि व्रजन्नर्थिसार्थाननिवारितदानैरयाचकानकार्षीत् । वाद्यमानैर्मङ्गलतूर्यनिःस्वनैर्वन्दिजनोद्घुष्टजयजयारवैश्च दिगन्तान्बधिरयन्सभार्यःस्यन्दनारूढश्चन्द्रराजःप्रतिस्थानं जनमनांसि रञ्जयन् राजमार्गमयासीत्, तद्दर्शनोत्सुकाःपौरजना अपि प्राकारभवनानामुपरिभागेषु परस्परमङ्गोपाङ्गपीडनानि सहमानाःक्षणमनिमेषलोचना बभूवुः । कुमारदर्शनोत्कण्ठयोज्झितगृहकर्मणां पौराङ्गनानां विविधालापविभ्रमाश्च प्रावर्त्तन्त । कुमारस्वरूपं द्रष्टुं सत्वरं गन्तुमशक्नुवती काऽपि मुग्धाऽतिविशालं निजनितम्बाऽऽभोगं निन्दति, काचिदर्धप्रसाधितं निजपादमाकृष्य सहर्षमानसा मार्गभूमिं रञ्जयन्ती कुमारस्वरूपविलोकने कौतुकिता धावति, पीनघनस्तनभारेण प्रतिपदं प्रस्खलन्ती काऽपि गतिभेदमातन्वाना तरुणजनैर्हस्यते । काचित्कुङ्कुमभ्रान्त्या निजललाटपट्टं कज्जलेन मण्डयित्वोत्तानमना हसन्तमपि युवव्रजमगणयन्ती व्रजति, काऽपि निजसहचरीं भणति—त्रिलोकसुभगोऽयं मनोभवो देवो विद्यतेऽन्यथाऽस्य पृष्ठभागे रतिदेवी कथं स्थानं लभते ? अन्या वदति, मुग्धे ? मा वदेदृशमसङ्गतम्, यतस्तदङ्गमीश्वरेण दग्धं श्रूयते, कान्तिस्तु दूरे ।

अपरा भाषते–सखि ? भ्रान्तिं मा कुरु, एषोऽमरेन्द्रो ज्ञायते, एषा च तत्पत्नी पुलोमजा विराजते, इतरा भणति–बाले ? तव मतिविभ्रमः सञ्जातः, नूनमेष कनकध्वजकुमारः, एषा च प्रेमलालक्ष्मीः, रत्नावलीवैतस्या बाहुलतिका कनकध्वजस्य कण्ठपीठे लुठिष्यति, तस्मादेषैव जगति धन्या मन्यते, अन्या भणति–सपत्न्या दूषितेयं कथं धन्याऽभिधीयते ? यदस्या मेदिन्या अप्येष एव पतिः । एवंविदग्धतरुणीजनवचनानि शृण्वँश्चन्द्रराजः स्वभवनद्वारं प्राप, ततो रथादुत्तीर्य सभार्यः स विजनस्थाने संस्थितः, प्रेमलालक्ष्मीस्तमस्थिरमानसं विज्ञाय विचिन्तयति, यादृगानन्दो विवाहकालेऽस्य दृष्टस्तादृशोऽक्षक्रीडावसरे नाऽऽसीत्, इदानींतु तादृग्विधोऽपि न दृश्यते, प्राचीनाऽऽधुनिकप्रमोदे महान्विभेदः सञ्जातः, नात्र हेतुर्विज्ञायते, एवं ध्यायन्त्यां तस्यां हिंसकमन्त्रिणा करसंज्ञया चन्द्रराजः प्रबोधितः । अतिदक्षः स स्वचेतसि चिचेत, यदयं मन्त्री मां निर्गमनाय निवेदयति, परन्त्वियं रजनी प्रेमलायाः स्नेहश्च यावज्जीवं न विस्मरिष्यते, ईदृग्विधः स्नेहो मे क्व मिलिष्यति, इतो निर्गमनमपि दुःसहं मन्ये, तथाऽपि भाटकेन परिणीतायां स्त्रियां प्रेमविधानं निरर्थकम्, पुनर्मे विमाताऽपि वृक्षमारुह्य गमिष्यति चेन्मे का गतिर्भविष्यति ? स्वस्थाने गन्तुं न मे शक्तिः । इतिविचिन्त्य भोगी कञ्चुकीमिव प्रेमलामुपेक्ष्य सहसा स समुत्तस्थौ, तदा साऽवदत्–स्वामिन् ? क्व गमिष्यसि ? तेन भणितं–देहचिन्तायै व्रजामि, वारिकलशं गृहीत्वा प्रेमला तमनुचलिता, चन्द्रेण निवारिताऽपि किमपि व्यलीकमस्तीतिविज्ञाय सा तत्पृष्ठं न मुमोच, चन्द्रराजो देहशुद्धिं विधाय पुनर्निजस्थानमाजगाम, ततो हिंसकेन तस्मै श्राविताऽन्योक्तिः । निशाभूप ? सत्वरमितः पलायस्व, यदि दिनकरस्त्वां द्रक्ष्यसि चेत्तव रूपं प्रकटीभविष्यति, चन्द्रराजस्तदुक्तिरहस्यं विज्ञाय प्रयातुमनाः पुनःपुनर्द्वारान्तिकं जगाम, विज्ञाततदभिप्राया प्रेमला सुगन्धः कुसुममिव तत्पृष्ठं न जहाति, सोऽपि

तां वञ्चयितुं बहूनुपायानकरोत्तथापि गमनाऽवसरं न लेभे, ततोऽतिहर्षग्रथिला सा निजकरकमलेन तं समाकृष्य शयनासनेऽस्थापयत्, ततोऽनेकधा स्नेहविलासान् दर्शयन्ती सा मधुरवचनैरवोचत्, स्वामिन्! प्रतिक्षणं त्वया गमनागमनं कुतो विधीयते? आद्यसमागमे भवतामीदृशः प्रपञ्चो न युज्यते कर्त्तुम्। यद्यारम्भकाले ईदृशंवैमनस्यंस्वीकृतं तदाग्रे स्नेहसद्भावः कथं स्थास्यति? प्रथमग्रासे मक्षिकापाते भोजनस्वादः कुतो लभ्यते? क्रीडायाः प्रारम्भ एवेदृशो वेषो गृहीतस्तर्हि पूर्णतरा प्रीतिस्त्वया कथं पालयिष्यते? प्राणप्रिय! विकल्पकल्पं विहाय स्वच्छचेता भव, यतो निर्मलचेतसि जने प्रीत्यङ्कुराः प्रवर्द्धन्ते,

तद्यथा—विस्तारं व्रजति स्नेहः, स्वल्पोऽपि स्वच्छचेतसि। व्याप्नोति तैललेशोऽपि, सरः सर्वमपि क्षणात्॥ १॥

न जाने ते चित्तं, किमु भवभयात्खिन्नमतुलं, गतिं दैवीं लब्ध्वा, किमुत विजय ऽऽकाङ्क्षि बलिभिः।
किमन्यां भूजाने? स्मरति सुदतीमात्मनिरतां, मदुत्कण्ठां पूर्णां, कुरु निजसुयोगेन सततम्॥ २॥

तस्माच्चित्तचापल्यं परित्यज्य धैर्यं समाधेहि, त्वत्प्रतारकस्य मुखे धूलिप्रक्षेपो भवतु नाम, स्वामिन्! पुरात्वद्दर्शने भृशमुत्सुकाऽहमभवम्, सैव मदुत्कण्ठा विधिना सफलीकृता, तथाऽपि त्वय्यस्थिरतामापन्ने यथेच्छं समागमसुखं मे दुर्लभं जातम्, प्राणनाथ! त्वदुक्तगाथारहस्यमधुना मयाऽवेदि, अतस्त्वां सर्वथेतो गन्तुं नात्रकाशं दास्यामि, मे जीवितं त्वदायत्तं जानीहि, नररत्न! मां निराशां मा कुरु, भवदाज्ञया सदैव वर्त्तिष्ये, त्वदुपानत्तुलनां वहामि, अतर्जनीयोऽयमबलाजनः, अस्मिन्भूतले मदीयं परमदैवतं त्वमेवाऽसि, मत्प्रार्थनाभङ्गं मा कुरु, दयां विधाय शरणागतां मां पालयस्व, विच्छायमुखारविन्देन भवता मौनमुद्रा कथं स्वीकृता? प्रसन्नीभूय वाङ्माधुर्येण मां प्रीणयस्व, सज्जनैर्विगर्हितेन विषादेन सृतम्, स्वामिन्! यदि मेऽविनयो-

जातस्तर्हि प्रसादं विधाय क्षम्यताम्, निजाङ्गनाऽपराधस्तु विज्ञेन विशेषतः सहनीयः ।

उक्तञ्च—अपराधसहस्राणि, क्रियन्तेऽहर्निशं जनैः । क्षमन्ते सज्जनाः सद्यो–नम्रीभूते जने सदा ॥ १ ॥

किञ्च—अबलाजनतर्जनप्रिया–जनयन्ति प्रकृतिप्रकोपभूतम् । अयशः खलु लोकगर्हितं, तदलं कोपधिया भवद्विधानाम् ॥२॥

भवतः सन्निधावहंतु स्वल्पमतिरस्मि, प्राणप्रिय ? अचिन्त्योऽयं भवत्सङ्गमो मे संजातः, अन्यथा क्क विमलापुरी, आभापुरी च क्क, ? अयं योगस्तु विधात्रैव प्रतिपादितः, भवदुक्तवचनतत्त्वमवेदि मया, नाऽहं तादृश्यविज्ञाऽस्मि, यतो गूढार्थं न जानामि ? पुनर्विज्ञातग्रहो न पीडयति, मदुपेक्षणेन तत्र का शोभा भविष्यति ? क्रूरभावस्त्वया न विधातव्यः, तव श्वशुरेण संप्रदायोचितदानविधौ न्यूनता न विहिता, तथाऽपि तत्सम्बन्धिनी या काचिदपूर्णता विद्यते चेत्त्वया प्रकाशनीयम्, यतो जामाता त्वतीव वल्लभो भवति श्वश्र्वादीनाम् । निर्हेतुकं रोषं विधाय तुष्णींस्थातव्यमित्यसांप्रतम् । भवादृशानांबालवदाचरणं लज्जाकरं जायते ।

स्वामिन् ! इयं दशा तु विज्ञाततत्त्वानां मुनीनामुचिता, भवाँस्तु संसारपथे स्थितः, अतः सम्यक्वार्त्ताविनोदेन प्रार्थयन्तीं मां रञ्जय, अक्षक्रीडाऽवसरे भवदुक्ता गूढोक्तिर्मा न विस्मरिष्यति, कदाचिन्मामनादृत्य भवानितो गमिष्यति तदप्यहं तव निवासभूतां पूर्वदिङ्मुखमण्डनमाभापुरीं जानामि, तत्र समेत्य भवद्दर्शनेन निजात्मानं तोषयिष्यामि, इत्थं तदीयवाग्विस्तरं समाकर्ण्य चन्द्रराजोऽब्रवीत्–सुमुखि, ! अकालिकोऽयं हठस्तेऽनुचितः, यद्भावि तद्भविष्यति दैवघटनामन्यथाकर्त्तुं कः समर्थः ?

यतः—प्राप्तव्यमर्थं लभते मनुष्यो–देवोऽपि तं लङ्घयितुं न शक्तः । तस्मान्न शोचामि न विस्मयो मे, यदस्मदीयं न हि तत्परेषाम् ॥ १ ॥ गजभुजङ्गमयोरपि बन्धनं, शशिदिवाकरयोर्ग्रहपीडनम् । मतिमताञ्च समीक्ष्य दरिद्रतां, विधिरहो

बलवानिति मे मतिः ॥ ३ ॥

ललाटपट्टे विधिना यल्लिखितं तदणुमात्रमप्यन्यथाकर्त्तुं कोऽपि न प्रभुः ।

तथैवोक्तम्—लिखिता चित्रगुप्तेन, ललाटेऽक्षरमालिका । तां देवोऽपि न शक्नोति, उल्लिख्य लिखितुं पुनः ॥ १ ॥

करोतु नाम नीतिज्ञो—व्यवसायमितस्ततः । फलं पुनस्तदेवाऽस्य, यद्विधेर्मनसि स्थितम् ॥ २ ॥

सुतनु ? त्वं सर्वं जानासि किंबहुनोक्तेन, सुखदुःखयोः प्रादुर्भावो देहिनां कर्मविपाकेनैव जायते—

यतः—विपत्तौ किं विषादेन, सम्पत्तौ हर्षणेन किम् । भवितव्यं भवत्येव, कर्मणामीदृशी गतिः ॥ १ ॥

प्रियतमे ! अनार्योचितमिदं कृत्यं मयाऽन्योपरोधेन विहितम्, सर्वथा तद्वृत्तान्तं गोपनीयमेव, बद्धमुष्टिर्लक्षमूल्या निगद्यते, सुदक्षत्वं ते क्व गतम् ? कथं भ्रान्तिपथमवलम्बसे ! हृदये स्थिरतामाधत्स्व, त्वत्स्नेहं त्यक्तुमहमसमर्थः । भुजगच्छुच्छुन्दरन्यायोऽयं प्राप्तः, व्याघ्रतटिनीन्यायतश्चात्र नास्ति मे कश्चिदुपायः । एवं तेन बहुधा विबोधिताऽप्यशान्तमानसा सा गृहीततद्वसनाञ्चला तत्रैव तस्थौ, चन्द्रराजस्तेन भृशं व्याकुलीभूतस्तथाऽपि तया गृहीताम्बराञ्चलो न मुक्तः । ततोहिंसकस्त्वरमाणस्तत्र समागत्य परुषवचनप्रहारं प्रकुर्वन् बलात्तद्वस्त्राञ्चलं मोचयामास, ततःप्रेमलालक्ष्मीर्मन्त्रिमुखमदृश्यमितिकृत्वाऽभ्यन्तरं गता, चन्द्रराजश्च वृतां भार्यां त्यक्त्वा बहिर्ययौ ।

अथ चन्द्रराजःसिंहलनरेशस्य सन्निधौ गत्वा बभाषे, राजन् ? भवदीयं कार्यं मया निष्पादितं किन्तु दुःसहं मद्वियोगमसह-

माना विलपन्ती सुन्दरी मया परित्यक्ता, तस्या लज्जा त्वया रक्षणीयेत्यभिधाय गृहीततदाज्ञःस खड्गहस्तः सत्त्वरं बहिरुद्यानभूमिमासाद्य तस्यैव सहकारस्य कोटरे प्रविश्य निलिल्ये ।

इति श्रीचन्द्रराजचरित्रे द्वितीयोल्लासे चतुर्थःसर्गः ॥ ४ ॥

ततो गृहीतकरकम्बा सवधूर्वीरमत्यपि तत्रागत्य प्रहरार्द्धशेषायां यामिन्यां ससंभ्रमं तमेव सहकारतरुमारूढवती, तत्कोटरस्थितं चन्द्रकुमारं साऽतित्वरया न विलोकयामास। अथ निष्पन्ननिजमनोरथा वीरमती कम्बाप्रहारेणाम्रतरुं नभोवर्त्मना चालयामास, ततो वीरमती निजमात्मानं पटुतरं मन्यमाना गुणावलीं भणति स्म—मुग्धे ? यदि त्वं मया सार्द्धं नागमिष्यस्तदा विमलापुरीकनकध्वजकुमारयोर्दिव्यं दर्शनं कुतोऽभविष्यत्, तथैव ते प्रत्यहं नूतनान्यलौकिकानि कौतुकानि दर्शयिष्ये, तव मनोरथांश्चपूरयिष्यामि, मदाज्ञाऽनुसारेण त्वया वर्त्तितव्यम्, कदाऽपि त्वया भेदबुद्ध्याऽहं न निरीक्षितव्या, मदन्योऽपरः कः इयन्तं द्राघीयाँसंनभोमार्गमुल्लङ्घयितुंसमर्थोभवेत् ? चारणमुनीनांनभोगतिः प्रथिताऽस्ति, पक्षिणोऽपि विशेषतो प्रत्यहंद्वादशयोजनानि डयन्ते, मदीया शक्तिस्त्वपरिमिता विद्यते, यस्मिन्प्रदेशे पवनोऽपि सञ्चरितुमशक्तस्तत्राऽप्यहंगन्तुंसमर्थाऽस्मि, अपरैरसाध्यमपि कार्यंसंविधातुं मे शक्तिर्विद्यते, इत्थंवीरमतीश्लाघावचनानि समाकर्ण्य गुणावली प्राह—मातस्त्वदुक्तं सर्वंसत्यंजानामि, साम्प्रतंत्वच्छक्तिर्मे विश्वसनीया जाताऽस्ति, पुनरेकस्मिन्कार्ये तत्र मतिविभ्रमोजातः, प्रेमलां यः परिणीतवान् स तु त्वदीयःसूनुर्नतु कनकध्वजः, इदं मे वचनं सत्यंजानीहि, यद्यस्मिन्विषयेऽन्यथात्वं स्याच्चेदहमुपालब्धव्या, ततो वीरमती प्रोवाच—सुमुखि ? इदानीमेव तावकीनं मतिचातुर्यं मया विज्ञातम् ? मत्पुत्रं वृथोपालम्भयसि, त्वन्तु यत्र यत्र रूपवन्तं नरं द्रक्ष्यसि

तत्र तत्र चन्द्रराजमेव कथयिष्यसि, मत्पुत्रमहं सम्यक् प्रत्यभिजानामि, यतः स मे वशवर्त्ती समजनि। इतः कोटरस्थश्चन्द्रराजो विमातृगदितवचनानि निशम्य चेतसि चिन्तयति, कदाचिदियं क्षुद्रबुद्धिरिहस्थं मां ज्ञास्यति चेदवश्यं मां पीडयिष्यति, तस्मात्सर्वथा मद्वृत्तान्तं न जानातीयं चेत्सर्वं समञ्जसं भवेत्, एवं वितर्कयन् स श्वश्रूवध्वोर्वार्त्तालापं शृणोति, अथाम्रतरुरपि नभोगतिं वितन्वन्ननेकनगरगिरिशिखराण्युल्लङ्घयन्व्रजति, क्रमेण संप्रयान् चन्द्रो दूरत आभापुरीमद्राक्षीत्। विभातां विभावरीं सूचयन्तश्चरणायुधा मधुरध्वनिभिर्दिङ्मण्डलं गर्जयन्ति स्म, ऐन्द्री दिग्वधूरानन्दमयी जज्ञे, एकतोऽरुणोदयोपक्रमोऽभूत्, अन्यतो रजनीकान्तोऽप्यस्तमितुमागतः, सहकारोऽपि निजोपवनं समासाद्य मूलस्थानं समापन्नः। ततो वीरमत्याभणितं—मुग्धे? अयमस्मदुद्यानः समागतः, वृक्षादवतर, इत्यभिधायोभे नीचैरवतीर्य स्वस्थानं चलिते, तदानीमपि ताभ्यां चन्द्रराजो न ददृशे दैवयोगात्। श्वश्रूवध्वौद्वेऽपि शरीरशुद्ध्यर्थंनिकटवर्त्तिनींपुष्कलजलांपुष्करिणींगतवत्यौ। ततश्चन्द्रराजोऽवसरंज्ञात्वा सहकारकोटरान्निर्गत्यलघुगत्यानिजावासमियाय, नैशिकंवेषश्चपरावृत्यनवीनंनेपथ्यंपरिधाय प्राग्वत् निजशय्यायांसुष्वाप, श्वश्रूवध्वावपि सहासंक्रीडमाने निजावासंभेजतुः। अथवीरमती कम्बांदत्वा गुणावलींचन्द्रराजसन्निधौ प्रेषयामास, वीरमती च स्वयंनिजविद्याप्रभावेण पौरलोकान्विनिद्रांश्चकार। जाग्रदवस्थामनुभवन्तःसर्वेऽपि नागरिकाःप्राभातिकानि स्वस्वकर्माणि विनिर्मातुमुद्यता अभूवन्। अनयोर्निशावृत्तान्तं कैश्चिदपि न विज्ञातम्। इतो त्वरितगमना गुणावली निजप्रासादमभ्येत्य निद्रितंस्वपतिमपश्यत्। कपटनिद्रितेन चन्द्रराजेनाऽपि निजान्तिकमागता सा विलोकिता, गुणावली तु निद्रायमाणंस्वपतिं विलोक्य निश्चिन्ता जज्ञे. पुनर्निजचेतसि सा विषादमप्यकरोत्, यतोऽहंकृताऽपराधा महापापिनी जाता, घोरनिद्रायामहो? मया

निजवल्लभःपातितस्तदसमञ्जसंविहितम् । इत्थंविचिन्तयन्त्या गुणावल्या निद्रापगमाय राज्ञःशरीरे कम्बाप्रहारास्त्रिर्विहितास्तेन नृपतिःस्वयंसकपटंगात्राणि मोटयितुंलग्नः । गुणावली निजभर्त्तारमुन्निद्रितंविज्ञाय सविनयंप्राह-प्रियपते ! रजनी व्यतीता, प्रभातः सञ्जातः । तद्यथा-यात्येकतोऽस्तशिखरं पतिरोषधीना-माविष्कृतारुणपुरःसर एकतोऽर्कः ।

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां, लोको नियम्यत इवैष दशान्तरेषु ॥ १ ॥

तथाच-अभूत्पिङ्गा प्राची, रसपतिरिव प्राप्य कनकं, गतच्छायश्चन्द्रो-बुधजन इव ग्राम्यसदसि ।

क्षणं क्षीणास्तारा-नृपतय इवाऽनुद्यमपराः, न दीपा राजन्ते, द्रविणरहितानामिव गुणाः ॥ २ ॥

अन्यच्च-द्रुमाः पाण्डुप्राया-धृतनिविडगर्भाः स्त्रिय इव, प्रफुल्लास्ते कुन्दा-नृपतिकृतमाना इव जनाः ।

पिको मन्दं मन्दं, हृदि मदननामानि जपति, प्रभोरग्रे पूर्वा-परिचितसभाकः कविरिव ॥ ३ ॥

तस्मादिदानीं प्राणप्रिय ? शय्यांविमुच्य समुत्तिष्ठ, अद्यतनी यामिनी तु मया वृथैव निर्गमिता, यतोऽहंजाग्रत्स्थितिका सकलांविभावरींव्यत्यगाँस्तथाऽपि भवान्निद्रासुखमनुभवन्नेवासीत् । बहुधा मया जागारितोऽपित्वंनाऽजागरीः, यदद्य स्वप्ने लब्धराज्येनेव किंवा परिणीतराजकन्येनेव भवताऽपूर्वनिद्रासुखमनुभूतंविद्यते. स्वामिन् ? अधुना निद्रा परिहर्त्तव्या, प्रभात-कालोऽयंमेधाविभिःकर्णभूपवद्दानेन कृतार्थयितव्यः, न निद्राव्यसनेन मुधा हातव्यः । सहस्ररश्मिरुदयाचलचूलांसमारूढः, तस्मात्स्वमुखमुद्रादर्शनेन मांप्रमोदयस्व, मौक्तिकाभं गङ्गोदकंदन्तधावनञ्चगृहीत्वा भवदर्थे संस्थिताऽस्मि, तस्मादञ्जसा शय-नासनंविमुच्य दन्तविशोधनंकुरुष्व, नाऽयंक्षणःशय्यासेवनस्य, अस्मिन्नवसरेराजकुमाराव्यायामशालायामङ्ग्व्यायामंवितन्वते,

राजसभावसरोऽपि सञ्जातः, ये नरास्तिग्मरश्मावुदितेऽपि निद्रासुखमनुभवन्ति, तेषांबुद्धिवलपराक्रमधैर्यादिगुणा विलयंयान्ति, किंबहुना ? निरुद्यमा जाड्यधियश्च ते भवन्ति, तस्मात् प्राणप्रिय ? आलस्यंदूरतःपरित्यज्य शीघ्रंसज्जीभव। प्रियपते ? भवतो विमाता यदीदंचिरन्तनस्वापवृत्तान्तंज्ञास्यति चेत्तवोपालम्भंप्रदास्यति। इत्थंगुणावलीवचनानि निशम्य चन्द्रराजःकपटनिद्रां-त्यक्त्वा ससंभ्रमंसमुत्तस्थौ, तेन च भणितं—निद्रितेन मया वहुसमयोऽव्यतीतः. सूर्योदयसमयोऽपि मया नावोधि, अद्यतन्यांत-मिस्रायामकालवृष्टिपातेन शीतार्त्तस्य मे वपुर्भृशंपीडितं तेनाहंचिरंसुप्तः, वल्लभे ? त्वयाऽपि सकलायांनिशायामुज्जागरणंविहित-मिति नवपल्लवाभलोचनयुगला त्वंविभाव्यसे, पुनरद्यदिने तु त्वया प्रथमतःसमारभ्यसविशेषस्नेहसद्भावोवितन्यते, वहुरससंभृता-ऽद्यतनी वार्त्ता तु नूतनस्वरूपैव विलोक्यते, यतस्त्वयाऽपि वणिग्व्यवहारःप्रपञ्चयितुंप्रारब्धः। मनोरमे ? अद्यतन्यांविभावर्यात्वया कुत्रचित्प्रदेशे क्रीडारसोऽनुभूत इति विज्ञायते, अद्यतनवृत्तान्तंविचित्ररूपंदृश्यते, निशि त्वं क गतेतिमांसत्यंनिवेदय अगोपनी-यंचेत्, पश्चाच्च जागरणवार्त्तासप्रमोदंब्रूहि, गुणावली भणतिस्म—स्वामिन्? भवदीयंत्रायकंचरणसरोजंविहायाऽन्यत्र कगताऽभ-विष्यम्। किमपि नूतनंरात्रिवृत्तान्तंनाहंजानामि, रात्रिचर्या च प्रमदाजनस्य सर्वथा निषिद्धाऽस्ति, परन्तु भवान् रजन्यां क्वाऽपि क्रीडाविलासंविधायाऽत्र समागत इतिस्पष्टमनुमीयते, भवदाज्ञानुबद्धाऽहंप्रासादाद्वहिःपदमात्रमपिधर्त्तुं कथंसमर्था भवेयम् ? तस्मात्त्वंस्वकीयांवार्त्तासत्यमयींमांब्रूहि, ईदृग्विधानि गुणावलीवचनानि समाकर्ण्य चन्द्रराजश्चेतसि व्यचिन्तयत, सरलमानसेयं तन्वङ्गी सर्वथा मयि सरागाऽदृश्यत, किन्तु रात्रिमात्रप्रसङ्गेन विशुद्धशीलेयंमहिषी मृषावादिनी जाताऽस्ति, अत्रविमातुरेव दोषोविद्यतेतराम्। श्रीफलजलंकर्पूरसंसर्गेण यथा विषायते, तथा साधवोऽपि दुर्जनसङ्गेन विकारंप्राप्नुवन्ति,

यन्त्रघटिकासङ्गतिवशेन झल्लरी प्रहारान्सहते, दुर्जनसङ्गतिःसर्वदाज्वलदङ्गारकसदृशीनिगद्यते, विमातृसङ्गतिरस्याःसर्वथा महाक्षतिप्रदैव, यतोदुर्जनसंसर्गःसर्वदा हेयएव—तद्यथा—

अहो ! दुर्जनसंसर्गा—न्महाहानिः पदे पदे। पावको लोहसङ्गेन, मुद्गरैरभिहन्यते ॥१॥ अन्तर्मलिनसंसर्गा—च्छ्रुतवानपि दूष्यति। यच्चक्षुःसन्निकर्षेण, कर्णोऽभूत्कुटिलाश्रयः ॥२॥ दुष्टतां दुष्टसंसर्गा—ददुष्टमपि गच्छति। सुराबिन्दुनिपातेन, पञ्चगव्यघटी यथा ॥३॥ तथाच—अणुरप्यसतां सङ्गः, सद्गुणं हन्ति विस्तृतम्। गुणो रूपान्तरं याति, तक्रयोगाद्यथा पयः ॥ ४ ॥ दुर्जनजनसंसर्गात्सज्जनपुरुषोऽत्र दोषमायाति। रावणकृताऽपराधा—ज्जलधेरपि बन्धनं प्राप्तम् ॥ ५ ॥ दुर्वृत्तसंगतिरनर्थपरम्पराया—हेतुः सतां भवति किं वचनीयमत्र। लङ्केश्वरो हरति दाशरथेः कलत्रं, प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥ ६ ॥ हंसोऽध्वगः श्रममपोहयितुं दिनान्ते, कारण्डकाकबककोककुलं प्रविष्टः। मूकोयमित्युपहसन्ति लुनन्ति पक्षा—न्नीचाश्रयो हि महतामपमानहेतुः ॥ ७ ॥ आहृत्य रक्ष्यमाणाऽपि, यत्नेनान्तर्विरागिणी। असन्मैत्री च वेश्या च, श्रीश्च कस्य कदा स्थिरा ? ॥ ८ ॥

पुनर्वनितावारिखञ्जलतानयनवाजिनृपतयोयथा वालितास्तथा वलन्ति निःसंशयमेतदिति विचार्य तेन भणितं—शशिवदने ! संप्रति वार्त्तान्तरेण सृतं, यामिन्यामद्यतन्यां क विहृत्य समागतेति सत्यंब्रूहि, विज्ञातनिजवल्लभाशया गुणावली तंवञ्चयितुमना मनःकल्पितं किञ्चिद्वृत्तान्तं कथयितुं प्रारभत। स्वामिन् ! अस्ति वैताढ्यनामा भूधरस्तत्र शालमानायांविशालायांनगर्यांमणिप्रभनामा विद्याधरोराज्यंप्रशास्ति। सान्वर्थनामा चन्द्रलेखेति तस्य भार्या विद्यते, उभौ दम्पती निजेच्छयाऽहर्निशं विलसतः, सर्वे विद्याधरास्तस्य शासनंमाल्यमिव शिरोभिर्वहन्ति, अथान्यदा निजगुरुमुखाद्यात्राऽधिकारंनिशम्य विज्ञाततन्म-

हिमा स मणिप्रभःसभार्यःप्रवरंविमानमारुह्य यात्रायै निर्गतः। यतो लब्धेऽप्युत्तमे मानवजन्मनि देवयात्रा महता पुण्येन लभ्यते, तद्यथा—देवयात्रा तथा शुद्धो-धर्मः सत्सङ्गमस्तथा। सुनिर्मलं यशो लोके, प्राप्यते पुण्ययोगतः ॥ १ ॥

इतिशास्त्रवचनमनुस्मरन् स सिद्धगिरिप्रमुखानेकयात्राःसंविधायाद्यतन्यांरजन्यांभासमानायामाभापुर्यांसमागतस्तावदाकस्मिकी मेघवृष्टिःसमजनि, पवनश्चपरितःप्रासीसरत्, तेन तद्विमानंगतिभङ्गंविधाय तत्रैवाऽतिष्ठत्, तदा जातकौतुकया तद्भार्यया पृष्टं—स्वामिन्! अद्याकालिकवृष्टिजनने कोहेतुः! सर्वत्राऽनिषिद्धगमनमिदंदिव्यंविमानञ्च कथंविहीनगतिकंसञ्जातम्! इत्थं निजपत्न्या प्रेरितोविद्याधरोऽवदत्—प्रिये! तत्सर्वमहंजानामि, परन्त्वेतद्वृत्तान्तकथनंसुतरामनर्हं परकीयवार्त्ताकथनेनाऽस्माकं कोऽपि लाभो न विद्यते, निर्हेतुकानि वाक्यानि पठितान्यपि कार्यसाधकानि न भवन्ति, इति तेन निषिद्धाऽपि कदाग्रहग्रस्ता सा विद्याधरी प्रोवाच—आर्यपुत्र! प्रसादंविधायेमांवार्त्तांब्रूहि, नोचेन्महाननर्थोजानिष्यति। इत्थंस्त्रीहठंमोचयितुमशक्तोविद्याधरस्तान्निवेदयितुंप्रारभत, अस्यामाभापुर्यांपौरान्प्रति कश्चिन्निर्जरोरुष्टोजातस्तेन नरेन्द्रमुपतापयितुंसमारुतेयंवृष्टिर्विहिता, राज्ञश्चमहता पुण्यप्रभावेणास्मदीयमिदंविमानंस्खलितमस्ति, विद्याधर्या भणितं—स्वामिन्? अस्ति कश्चिदेतादृगुपायोयेन तस्य नरेशस्योपद्रवो न स्यात्? यद्येवंविधंसामर्थ्यंभवतःस्याच्चेत्परोपकारेण जन्मसाफल्यंविधातव्यम्, परोपकृतितुल्यंनास्त्यन्यत्कर्त्तव्यंमानवलोके—तद्यथा—

परोपकारः कर्त्तव्यः, प्राणैरपि धनैरपि। परोपकृतिजं पुण्यं, न स्यात्क्रतुशतैरपि ॥ १ ॥ आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः। परं परोपकारार्थं, यो जीवति स जीवति ॥२॥ परोपकाराय फलन्ति वृक्षाः, परोपकाराय वहन्ति नद्यः। परोपकाराय दुहन्ति गावः, परोपकारार्थमिदं शरीरम् ॥ ३ ॥ भवन्ति नम्रास्तरवः फलोद्गमै-र्नवाम्बुभिर्भूरिविलम्बिनो

घनाः । अनुद्धताः सत्पुरुषाः समृद्धिभिः, स्वभाव एवैष परोपकारिणाम् ॥ ४ ॥ श्रोत्रं श्रुतेनैव न कुण्डलेन, दानेन पाणिर्नतु कङ्कणेन । विभाति कायः खलु सज्जनानां, परोपकारैर्नतु चन्दनेन ॥ ५ ॥ पद्माकरं दिनकरो विकचं करोति, चन्द्रो विकासयति कैरवचक्रवालम् । नाऽभ्यर्थितो जलधरोऽपि जलं ददाति, सन्तः स्वयं परहितेषु कृताऽभियोगाः ॥ ६ ॥

तस्मात्परोपकृतिं विधाय स्वजन्मनःसाफल्यंलभस्व, इत्थंनिगद्य तस्यांतुष्णींस्थितायांविद्याधरेण भणितं-देवि? तत्कार्यंनिष्पादयितुमहमशक्तस्तथापि तदुपायंकेवलंजानामि, मदुक्तंवचनंतद्विमाता करोति चेत्स नरेन्द्रोनिर्विघ्नतया स्वस्तिमान् भवेत्। ततोविद्याधरी निजभर्त्रासार्द्धमेवभवतोविमातुःसमीपंसमागत्य सविनयंबभाषे, भगवति? मातः? अस्मिन्नगरेमहानुपद्रवो जनिष्यति, अतस्तत्र सूनोर्हितायोपायमेकंमत्पतिर्ब्रवीति, तंदत्तावधाना त्वंशृणुष्व, ततोविद्याधरेण तेन व्याहृतं-हेराजमातृके? पावने भूमिप्रदेशे श्रीशान्तिनाथतीर्थंकृतोमहामङ्गलजनंकसर्वारिष्टोपशामकंविशुद्धबिम्बंस्थापयित्वा तदन्तिके पञ्चदीपकान्प्रज्वाल्य तदग्रे मत्पत्नीराजपत्नीभ्यां समेता त्वंभगवतस्तीर्थङ्करस्य गुणानुवादेन रात्रिजागरणंकुरुष्व, विभावर्यांञ्च विभातायामिमांमद्दत्तांवार्चिकींशाखांगृहीत्वा त्वद्वधूर्नृपान्तिके प्रेषितव्या, अनया कम्बया स्पृष्टस्तव सूनुःसज्जोभविष्यति, सर्वाणि विघ्नानि च द्रुतं, विनङ्क्ष्यन्ति, इतिविद्याधरोक्तवचनेन भवतोविमात्रा समाहुताऽहंतत्सन्निधिमगमम् । ततो विद्याधर्या सहास्माभिः सकला रात्रिस्तदुक्तविधिना जिनप्रतिमायाः सन्निधौ तद्गुणाऽनुकीर्त्तनेन निर्गमिता. ततो मया तत्समर्पितया कम्बया प्रहृत्य भवान् जागरितः, निष्पन्नकार्योविद्याधरश्च सभार्यः स्वस्थानं जगामेत्यसदीयां नैशिकीं वार्त्तामवेहि, सकलासु कलासु लब्धपाटवश्चन्द्रराजस्ततोऽवादीत् । चारुगात्रि? त्वया सत्यंनिवेदितं पतिव्रतानामयमेव धर्मोयन्निज-

स्वामिनोहितकर्मणि सदैव सत्प्रवृत्तिर्विधेया—

यतः—पत्यनुकूलं सुतरा–माचरणं संविधेयमनघानाम् । धर्माऽधर्मविवेको–जागर्त्ति हि लोकबन्धूनाम् ॥ १ ॥

कुतश्चित्प्रमदाजनोनिजपतिमनुकूलयितुमकृत्यमपि विदध्यात्, सत्कृत्यन्तु विशेषतः कुर्यात् । भार्या सततंपत्यनुरागिणी भर्त्तारमेव सेवते, मातातु पुत्रहितपरायणा भवेत्तत्र किमु वक्तव्यम् ? प्रिये ? मदर्थं त्वया सकलां रजनीं यावज्जागरणं विहितं तन्महोपकारंमन्ये, दम्पत्योः सत्यप्रीतेर्लक्षणश्चानेन व्यज्यते, तथाऽपि त्वमसत्यवादिनी ज्ञायसे, यदि त्वंमृषाभाषिणी भवेस्तदा वायसाः कृष्णवर्णा भवेयुः, यदि मत्कृते प्रभोरग्रे रासक्रीडां न कुर्यास्तदा जलनिधिः क्षारजलोभवेत्, तथैव हिमकरश्चतुषारराशिवमेत्, त्वामन्तरा मत्कृते रात्रिजागरणरता काऽन्या भवेत् ? यतोऽखिलमालवदेशकार्यभारश्चम्पादेव्यामापतित इत्युक्तिः सत्या प्रतीयते, सुमुखि ? त्वदुक्तां वार्त्तां सत्यां जानामि, मद्विश्वासस्त्वयि सदैव तिष्ठति. या सकलाऽपि विभावरी जिनेन्द्रगुणगानेन येषां व्यतीयते तेषामहोभाग्यंमन्ये,

यतः—जिनेन्द्रगुणगानेन, दिनान्यायान्ति यान्ति च । तेषां हि जीवनं सत्यं, जीवन्मृतोऽन्यथा स्मृतः ॥ १ ॥

जिनेन्द्रभक्त्या मानवाः संसारं गोष्पदसमं जानन्ति, कम्बुकण्ठि ? तीर्थकृतोगुणग्रामंस्मरन्त्या त्वया महोत्सवो यथाविहितस्तथामयाऽप्यर्द्धरात्रेस्वप्नएकोदृष्टः, यथा त्वं मदीयविमात्रासार्द्धमितोऽष्टादशशतक्रोशदूरवर्त्तिन्यां विमलापुर्यां गताऽऽसीः, तत्र चैकंगुणरूपशालिनं नृपपुत्रीं च परिणयन्तं पुमांसं विलोक्य जातकौतुकाऽत्र त्वं पश्चात्समायातेति, त्वद्वार्त्तायां मे स्वप्नस्य च महदन्तरं विद्यते, परन्तु स्वप्नस्य सत्यत्वं कथं ज्ञायते ? मिथ्याभूतः स्वप्नव्यवहारोबहुधा लोकेषु प्रचक्ष्यते, त्वया साक्षा

यदनुभूतं तदेव सत्यंप्रतीयते, यतः स्वानुभूतेऽर्थे न संशयोविधातव्यस्तथाप्युभयोर्मध्ये किं सत्यमिति तु जगत्प्रभुर्जानाति, वस्तुतः स्वप्नवृत्तान्तमविश्वसनीयं निगद्यते. पतिव्रतावचनञ्च सर्वेषांमाननीयं विद्यते. इत्थं निजपतिवचनानि सम्यगवधार्य जातविस्मया गुणावली स्वपतिं निरुत्तरीकर्तुं स्वप्नवृत्तान्तं कदाचिदसत्यं जायते इति समर्थयितुं प्राह—स्वामिन् ? एकः शिवपूजको निजशय्यायां सुप्तः स्वप्नाऽवस्थायां सकलं महेशमन्दिरं सुखादिकाखण्डैः संभृतं निरीक्ष्य जागर्त्ति स्म, ततः स व्यचिन्तयत्, किमनेन संग्रहितेन खाद्यखण्डेन ! अचिन्तितमिदमापतितमिति स्वप्नार्थं सत्यं जानता तेन तत्कालं सकलाः स्वज्ञातिबान्धवा भोजनाय निमन्त्रिताः, पुनः शिवालयमभ्येत्य विलोकयितुंलग्नस्तदा पक्वान्नशून्यंतद्दृष्ट्वा निर्विण्णमनाः स चिन्तयतिस्म, त्रिलोचनेन सर्वमिष्टान्नमपहृतमिति निश्चित्य मन्दिरान्तः प्रविश्य तद्द्वारं पिधाय स सुखशय्यामभजत्, अपरान्हसमये भोजनायसमस्तज्ञातिवर्गीयास्तत्र समागमन्, इतस्ततोविलोकयन्तस्ते काऽपि भोजनसामग्रीं नाऽपश्यन्, तं देवपूजकमपि तत्र न विलोकयामासुः, मन्दिरद्वारं पिनद्धं विलोक्य महता घोषेण सर्वैः पूजकः प्रबोधितः, जागरितेन समाहितमनसा तेन भणितं—भो भो ज्ञातेयाः ! यूयं धैर्यं समाधत्त, मया भोजनाय समाहूता यूयमतः कञ्चित्कालंप्रतीक्षध्वं, सहसा फलसिद्धिर्न जायते, शुभानि कर्माणि विलम्बेन सिद्ध्यन्ति, अतीतरात्रिवदधुनाऽपि मे स्वप्नः समागमिष्यति, सुखादिकाश्च विलोकयिष्यामि तदा युष्मान् सकुटुम्बान् भोजयिष्यामि, त्वरां मा कुरुत, लोकास्तमवदन्, रे ! मूर्खाधिराज ? स्वाप्निकाः सुखादिका भोजयितुं वयं किं समाहूताः ! ताभिः किं क्षुधितानां तृप्तिर्जायते ! यतस्त्वं ग्रथिलमानसोविभाव्यसे, एवंतमुपालभ्य सर्वे स्वस्वस्थानं जग्मुः, देवपूजकोऽपि स्वचेतसि भृशं पश्चात्तापमवाप, तस्माद् हे स्वामिन् ! स्वप्नवृत्तान्तन्तु वितथमेव प्रतीयते. स्वाप्निका

मनोरथास्तु मृगजलवन्नार्थसाधकाः । स्वप्नवार्त्ता कदापि कार्यसाधिका नैव जगत्रये जायते देहिनामित्याप्तवचनात्स्वप्नवृत्तान्तं वृथैव त्वंविद्धि, प्रियतम ? भवता विमलापुर्यां स्वप्नावस्थायामहंव्यलोकि. अहन्त्वत्रैव भवतः सन्निधौ परिचर्यापरायणा संस्थिताऽस्मि, पुनः सा नगरीतिवितोऽष्टादशशतक्रोशान् दूरं वर्त्तते, एतावद्दूरतरं प्रयाणमेकस्यां रजन्यां कथं सम्भवेत् ? ततोभवदुक्तिः सर्वथाऽमाननीयैव, अनुचितं वचनं कथं मन्यते ? चन्द्रराजोऽवादीत्, सुवदने ! अहन्तु त्वामुपहसामि, त्वदुक्तिषु मेऽतीव विश्वासो वर्त्तते, त्वामन्तरा मे प्रियतरं किमपि न विद्यते, इति गुणावलीं निजाभिप्रायं ज्ञापयित्वा पूर्ववत्सनरेशस्तया सार्द्धं समाचरत् ॥

इतिश्रीजगद्विभूषणशासनचक्रवर्त्तिस्वपरसमयपारगामितपागच्छनभोमणिप्रवलतरपुण्यप्रकाशकपूज्यपादमहोपकारिप्रातःस्मरणीययोगनिष्ठाऽध्यात्मज्ञानदिवाकरश्रीमद्बुद्धिसागरसूरिपुङ्गवशिष्यश्रीमद्—अजितसागरसूरीश्वरविरचितेचन्द्रराजचरित्रेगद्यपद्यात्मकेसंस्कृतप्रवन्धे चन्द्रराजसिंहलेशमिलनकनकध्वजकथाश्रवणभाटकपाणिग्रहणपुनराभापुरीगमनरूपाभिः कलाभिश्चतसृभिःसमन्विते प्रबोधनामद्वितीयोल्लासे पञ्चमः सर्गः समाप्तः ॥ समाप्तश्चायं द्वितीयोल्लासः ॥ २ ॥

# ॥ अथतृतीयोल्लासः ॥ ३ ॥

अक्षयं मोक्षदातारं, शिवधामाऽसिताङ्गकम् । स्वर्गिवन्द्यपदाम्भोजं, वन्दे पार्श्वजिनेश्वरम् ॥ १ ॥ चिदाकारं चिदानन्दं, चिज्ज्ञानघनसुन्दरम् । चिदाभासं कृपावासं, नमामि जगदीश्वरम् ॥ २ ॥ यदेव दर्शनं दृश्यं, दर्शनं तदनुस्मृतम् । अन्यथा प्रतिपत्त्यं वै, वदन्ति विबुधा जनाः ॥३॥ बालधी रचयत्येव, भङ्गजालमनेकधा । श्रम एव फलं तस्य, दर्शनाभास ईदृशः ॥४॥ त्रिभङ्गीललिताऽनेक–नैगमादिनयक्रमम् । शुद्धाऽशुद्धविवेकेन, भाषते हि जगद्गुरुः ॥५॥ कर्त्ताऽस्ति जगतः कश्चि–त्तेन किं फलमश्नुते ? नास्तीति कथनेनाऽपि, विशेषो नैव दृश्यते ॥६॥ बुद्धिमान्सारमादाय, सर्वशास्त्रविशारदः । आत्मारामदशां प्राप्य, ममत्त्वद्वेषमुज्झति ॥ ७ ॥ ममत्त्वेन मतोत्पत्ति–र्निर्ममत्त्वेन सिद्धयः । समभावेन ये धन्या–अनेकान्तमतं विदुः ॥ ८ ॥ समभावयुतः सरल–आत्मशक्तिसमन्वितः । स नरश्चन्द्रवन्नूनं, त्रिलोक्यां प्रथितो भवेत् ॥ ९ ॥ अथ चन्द्रनरेशस्य, तृतीयोल्लास ईर्यते । यस्य माधुर्यमास्वाद्य, शर्करा कर्करायते ॥ १० ॥ तुष्टये श्रोतृवर्गस्य, प्रबन्धो रच्यते बुधैः । विलासमन्तरा वार्त्तां, कः शृणोति कवेर्जनः ॥ ११ ॥ क्षयोपशमयोगेन, वक्ता वदति शक्तितः । श्रोता भेदविवेकज्ञो–दुर्लभोऽस्ति धरातले ॥१२॥

अथगुणावली चन्द्रराजस्याऽन्तिमानि वचनानि निशम्य किञ्चिन्मोदमाना तंप्रत्यवदत्–स्वामिन् ? स्वामिकःकदाग्रहो-भवता स्वयमेव त्याज्यः, यद्वृत्तान्तश्रवणेन रसास्वादोविवर्द्धते तथाविधांरसिकांवार्त्तांब्रूहि, भवदर्थे निशान्तंयावद्‌जागरणमस्माभिर्विहितं तदुपकारस्तु दूरास्थितः, प्रत्युत विपरीतभावना विहिता भवता, अस्तुनामास्मदीयंसमुद्योगंभवत्पटुताहेतुकंपरमकृपालुःसर्वज्ञोविजानाति, लोकेषु प्रसिद्धतरमेवत्–यत्तुरङ्गमोभूरिजवेन धावति तथाऽप्यश्वारूढनरस्तद्वेगं न जानाति, तद्वद्भवदीयमा-

चरणांविज्ञायते, अस्माकीनंसकलंवृत्तान्तंविदन्नपि भवान् हास्यस्थानमुपनयति, अतस्त्वया कुतोऽपि वणिक्कला शिक्षिता दृश्यते। अन्यथैतादृशोवाक्प्रपञ्चोभवन्मुखे न स्याद्, प्राग् मधुरांवार्त्तांविस्तार्य वाक्प्रहारेण मामाक्रोशसि, अहन्तु सरलस्वभावाऽस्मि, भवतःप्रपञ्चंकिञ्चिन्मात्रमप्यविज्ञाय सकलंनिशावृत्तान्तंमया न्यवेदि, किंबहुनोक्तेन, ईदृशमुपहास्यंकर्त्तुंभवते कथंरोचते, ? यतो हास्यकरणात्कथंञ्चिद्विपरीतमपि जायते, मुग्धमतिरहं क्व ? दूरवर्त्तिनी विमला पुरी च क्व ? तत्रस्थिताऽहं भवता कथंविलोकिता ? गृहद्वारंविमुच्य क्षणमात्रमप्यहमन्यत्र न व्रजामि, तर्हि भवदाज्ञांविना दूरस्थानं कथंयामि ? अतो मृषावादं विजहीहि, चन्द्रराजोऽवदत्—सुन्दरि ! अनुचितःकोपावेशो मा विधीयताम्, यथेच्छंगानंक्रियतां, सङ्गीतञ्च प्रवर्त्तयस्व, तत्र नास्ति मे विरोधः, मया तु स्वाभाविकंस्वप्नवृत्तान्तंनिवेदितं तेन तव मानसंकथंव्यथितम् ? हास्यविधानं मे प्रियतरमस्तीति मत्स्वभावं पार्श्ववर्त्तिन्यपि त्वंकिं न वेत्सि ? मदीयःस्वप्नस्तु कदापि मृषा न भवेदिति सत्यंजानीहि, श्वश्रूवध्वावुभे समानस्वभावे मिलित्वा यथासुखंप्रमोदेथाम्, परन्तु प्रसादंविधायत्वया कदाचिन्मामपि तादृग्विलासोदर्शयितव्यः। तस्मिन्विषयेत्वया मत्तःशङ्कानविधातव्या, तव कार्यप्रसङ्गेन ममाऽपि कार्यसिद्धिर्भविष्यति, सूपसङ्गता यथा ढोक्कलिका सिध्यति, किमधिकजल्पनेन कन्थातोगोरक्षोजागरित इति त्वच्चेष्टितमद्यैव मया विज्ञातम्। अद्ययावत् त्वत्प्रकृतिर्मयाऽकुटिलेन न विज्ञाता, यतःस्त्रीस्वभावोऽतीव दुर्ज्ञेयः। तद्यथा—

असत्यं साहसं माया, निर्दयत्वमशौचता। मूर्खत्वमतिलोभत्वं, स्त्रीणां दोषाः स्वभावजाः॥१॥ स्त्रियो ह्यकरुणाः क्रूरा–दुर्मर्षाः प्रियसाहसाः। घ्नन्त्यल्पार्थेऽपि विश्रब्धं, पतिं भ्रातरमप्युत॥२॥ वक्रचेतसांस्वाभाविकी या प्रवृत्तिःसोपायशतेनाऽपि न निवर्त्यते–

तद्यथा–यः स्वभावो हि यस्यास्ति, स नित्यं दुरतिक्रमः। यदि श्वा क्रियते राजा, तत् किं नाश्नात्युपानहम् ?॥ १॥

अन्यच्च—काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके, मूर्खः पण्डितसङ्गमे न रमते दासो न सिंहासने । कुस्त्री सज्जनसङ्गमे न रमते नीचं जनं सेवते, या यस्य प्रकृतिः स्वभावजनिता केनाऽपि न त्यज्यते ॥ २ ॥ उपाधिभिः सन्ततसंगतोऽपि, न हि स्वभावं विजहाति भावः । आजन्म उन्मज्जति दुग्धसिन्धौ, तथाऽपि काकः किल कृष्ण एव ॥ ३ ॥ तथाऽपि सुवनितानां शीलव्रतं रक्षणीयम् । तद्यथा—पाण्डित्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमो—ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्व्याजता, सर्वस्याऽस्य पुनस्तथैव जगतः शीलं परं भूषणम् ॥ ४ ॥

तस्माच्छीलवत्या स्वभावजा दोषाः सदैव परिहर्त्तव्याः, निजस्वामिनि भक्तिमती भार्या लोकेषु प्रशस्यते, इत्थंनिजभर्त्तुर्वचनमाकर्ण्य विलक्षीभूतमानसा गुणावली प्रत्यवदत्—प्रियतम ? निरागसंमामबलांकथंतर्जयसि ? अनेन तव वाग्विस्तरेण मय्यनुरागोलघीयान् जात इत्यसंशयंज्ञायते । एवंवक्रोक्तिभिरुपहसँस्त्वंमामकान्यस्थीनि भनक्षि, किंवा कश्चित्कर्णेजपस्त्वांमिलितोदृश्यते, येन मेऽसद्दोषास्त्वदग्रे प्रकाशिताः । स्वामिन् ? कदाचिदप्यहंकुटिलवृत्तिं न भजामि, सन्ततमसिधाराव्रतंवहामि, तथाऽपि त्वंवहमाने महोच्चे तीक्ष्णप्रहारमिव वृथा मांव्यथयसि, निजपतिंपरित्यज्य शिथिलाचाराःकाश्चिद्वनिताःस्वच्छन्दंक्रीडन्ते, तथाविधांमां मा जानीहि, इमांमदुक्तिंवितथां न मन्यस्व, दम्पतीस्नेहमविकलंसमीहमानेन त्वया प्रीतिभेदकानीदृशानि निष्ठुराणि वचनानि न वाच्यानि, पश्चाद्भवते यद्रोचते तत्क्रियताम् । एवं श्रुत्वाऽपि चन्द्रराजे मौनमाश्रिते गुणावल्यपि तुष्णींबभूव, ततःकतिपयवैवाहिकलक्षणलक्षितंचन्द्रराजवपुर्निरीक्ष्य जातसंशया गुणावली हृदि व्यचिन्तयत्, यदयंभूपतिःकेनाऽप्युपायेन विमलापुर्यामामनुसमागत्य प्रेमलालक्ष्मींपरिणीयाऽत्र समागतोदृश्यतेऽन्यथा ज्ञानिवदयंमद्वृत्तान्तंकथंवक्ति ! इत्थं-

विज्ञातसाराऽपि सा निजस्वामिनोऽन्तिके स्वकीयंरहस्यं न प्रकटीचकार, ततोनिजपतिंभोजयित्वा सत्त्वरं सा वीरमतीमभीयाय, ताश्चाभिवन्द्य चन्द्रराजनिवेदिंतंतत्सकलंवृत्तान्तंज्ञापयामास, भगवति ! त्वामुपालब्धुंसमागताऽस्मि, भवत्या सार्द्धंपर्यटनेनैका निशा मया व्ययिता, तेन मे पतिर्भृशंरोषारुणोजातोऽस्ति, तत्कारणंतु तदेव दृश्यते, यदावयोःसकलंवृत्तान्तंतेन विज्ञातमस्ति, मदग्रे त्वया निजदत्तता मुहुःप्रशंसिता, परन्तु त्वत्तोमत्पतिरधिकांविद्यांविजानातीतिसत्यंप्रतीयते, हेमातस्तदानीं मया कथितमासीत्, यदयंप्रेमलांपरिणयति स मत्पतिश्चन्द्रराजस्तत्त्वया न मानितम् । इदानींतदेव मद्वचनंसत्यं जातम् । अस्मिन्भूतले काश्चित्स्त्रियःकार्यविधाने दत्ता विद्यन्ते, तथापि पुरुषाणामग्रे तासां कियत्कौशलम् ? यद्यपि स्त्रीजातौ भूयसी दत्तताऽभिमन्यते, परन्तु पुरुषपटुत्वन्त्वलौकिकंविद्यते, तत्तुलनां काऽपि वनिता कर्तुं नार्हति, तं प्रतारयितुमावाभ्यांमहान्प्रयोगोरचितस्तथाऽपि सोऽस्मत्कलांनिजविद्यया विजित्यावांवञ्चितवान्, पुरैव मया त्वमभिहिता, लब्धकलाकौशलोमत्पतिःकेनाऽपि प्रकारेण प्रतारयितुमशक्यः । तथाऽपि दीनाया मे वाक्यं कःशृणोति ? यत्किमपि कार्यसम्यग्विचार्यैव विधीयते, तदेव सम्यक्फलजनकंजायते, यो हि भीरुजनभयजनके सङ्ग्रामाङ्गणे दृढीयांसंविक्रमंधारयति स नरमूर्द्धन्योवनिताभिःकथंवञ्च्यते ? त्वद्वचनविश्वस्ताऽहंत्वदाज्ञानुवर्तिनी विपद्भाजनंजातास्मि, नास्त्यन्यदधिकतरंममाऽतःकष्टम् । यत्कार्यंयस्यानुकूलं तस्मिन्नेव तस्य प्रवृत्तिर्विधातव्याऽन्यथासमादृशीमवस्थामनुभवेत् । श्वश्रूवर्ये ! तावकीना विद्याःकलाश्च त्वत्सन्निधौ तिष्ठन्तु, मम सृतं ताभिः, निजप्रभावंख्यापयन्त्यात्वया मन्दभाग्याया ममेवाऽन्यस्याःकस्याश्चित्स्वार्थविघातो न विधेयः । देशान्तरदिदृत्तया स्वपतिर्मया पराङ्मुखीकृतः । नासिकावेधमिच्छन्त्या कर्णवेधोविहित इतिलौकिकोक्तिर्विमूढमत्या मया सत्यापिता, अद्याऽपि तद्वचनं मया नमानितम्, विशालमतिना

येन यदस्मत्कर्म साचाद्दृष्टलोकि, तस्याग्रेऽसत्यजल्पनंमदीयंकियत्कालं तिष्ठति ? एवमसद्वचनप्रकाशेन निजभर्त्तुर्विलचीकरणे को लाभः ? तस्मादिदानींसत्यवार्त्तांब्रूहि, कीदृशोऽस्यदुःखस्योद्धरणे प्रत्युपचारोविधातव्यः ? । इत्थंगुणावलीवचनानि हृदि संप्रधार्य वीरमती निजगाद—मुग्धे ! अस्मिन्कार्यक्रमे त्वया काऽपिचिन्ता न विधातव्या, सर्वंसमीचीनंभविष्यति, अस्य प्रतिक्रियामहंकरिष्यामीतिप्रतिज्ञांविधाय क्रोधानलदीपितमानसा सा वैरधिया करे निशातनिस्त्रिंशंसमादाय सत्वरंचन्द्रराजान्तिकमगमत्, असमञ्जसञ्च जल्पन्ती सा तंनरेशं सहसा भूतले निपात्य तद्वक्षस्थलंसमारुह्य प्रोवाच—रे दुष्ट ! पापिष्ठ ! निर्बुद्धे ! सद्यो ब्रूहि, वध्वग्रे त्वया किं जल्पितम् ? अधुना मच्छिद्राणि विलोकयितुंप्रवृत्तोऽसि तर्हि वृद्धावस्थायांमांकथंपालयिष्यसि ? मत्तो देवा अपि शङ्कन्ते, तव तु का गणना ? पिपीलिका निष्कं संप्राप्य साभिमाना भवति, तद्वत्त्वमपि निजं कृतकृत्यंमन्यसे, यदहंनराधीशोऽस्मि, निष्कण्टकंराज्यमासादितंमया, मदाज्ञानुवर्त्तिनःसर्वेजना इति मा जानीहि, यद्राज्यादिकं सर्वं भुनक्षि तत्सकलंमयैव तुभ्यं वितीर्णमितिसत्यमवेहि, मद्विभूतिंत्वं न जानासि, सिद्धविद्याऽहंदिगन्तसम्पदमपि रचितुंसमर्थाऽस्मि, वक्रभावस्य तव प्रयोजनंनास्ति मे, तस्मात्त्वमधुना निजेष्टदेवतां स्मर, साम्प्रतमेव भवन्तं यमाऽतिथिंकरिष्यामि, एवंविमातृवचनंनिशम्य चन्द्रराजोभयभ्रान्तोजातः । जातरोमाञ्चा गुणावली च दीनानना विनयपूर्वकंतांप्रार्थयामास, हेमातः ! त्वयैव संवर्द्धितोऽयंनिजबालस्त्वया रक्षणीयः यतः—विषवृक्षोऽपि संवर्द्ध्य, स्वयं छेत्तुमसाम्प्रतम् । अयन्तु पुत्रतां प्राप्य, त्वदन्यं कं भजिष्यति ॥१॥

निजशिशावीदृशोरोपस्तेऽनुचितः, तुष्टा जननी सततंपुत्रंपालयति, तावदस्यैकमपराधंक्षमस्व, अन्यथा लोकेऽनावयोरुपहास्यंभविष्यति, अस्मिन्निजबालकेऽनार्योचितमीदृशंसाहसंकर्त्तुंनार्हसि, क्षमावतांसुखसम्पदश्चसदासुलभाः ।

यतः—नृत्योत्कण्ठितभावनो नटवरो लेभे महासम्पदं, सम्बोध्य चुभितो हि तापसमुखान्यद्वान्निजेच्छाऽधिकाम् ।
तेभ्यस्तद्वदनन्यशर्मजननीं धैर्यक्षमाधारकाः, सेवन्ते सुखवल्लरीं भवत भोस्तस्मात्स्वधर्मे रताः ॥ १ ॥

तथाहि—सुखसंपत्तिनिधानधन्यमहिमजम्बूद्वीपाभिधे द्वीपे, निभृतविविधवस्तुनिचये भरतक्षेत्रे, मध्यखण्डमखण्डमलङ्कुर्वच्छुभश्रेणिनिलयंशुभङ्करं नाम नगरंसमस्ति, तस्मिन्मानवधर्मपरायणोन्यायमार्गनिपुणोऽपि धनसञ्चयक्रूरग्रहगृहीतचेताःसततमर्थोपार्जनसंसक्तमतिर्धनवल्लभोनृपतिर्निवसति, प्रीतिपरायणा स्वजनेषु दक्षबुद्धिस्तस्य प्रीतिमती महिषी वर्त्तते, तत्कुक्षिसंभवःप्रियङ्करनामा पुत्रःसमभवत्, तदनु चन्द्रप्रभाऽभिधेया चैका तयोःपुत्री समजनि। अथ धनप्रियनामा तत्साचिवस्तस्यभार्यालक्ष्मीवती बभूव, तयोः सूनुःसद्बुद्धिनिधानः सुबुद्धिनामाऽभवत्। पूर्वपुण्यप्रभावनियन्त्रिताःसर्वे ते सपरिवारा अमन्दानन्दनन्दिता दिनान्यतिचक्रमुः । परन्त्विलापतिप्रधानावुभावपि स्वाभिधांयथार्थंसमर्थयन्तौ कृपणशिरोमणित्वंधारयन्तौ कार्यधुरांनिर्वहतः। दानादिकसत्कर्मणि कपर्दिकाप्रमितमपि धनव्ययं न कुरुतः, प्रत्यहमर्थवृद्धिःकथंभवेदितिचिन्ताचान्तचेतस्कौ नीतिमार्गमपि न स्मरतः । अन्येद्युरतिसमृद्धिसमन्वितंशुभङ्करंनगरंतत्ख्यातिश्च जगतीतले विस्तृतांश्रोत्रातिथीभूतांविधाय देशान्तरविवरेषु परिभ्रन्नात्यकलाकलापेषु लब्धकीर्त्तिःसाकेतपुरवास्तव्योजनप्रियनामा नाट्यकर्मकर्मठोवृहत्परिवारपरिवृतोनराधिराजान्प्रतिप्रदेशंरञ्जयँस्तत्र क्रमेण समागतः। चिन्तितश्चतेन जनप्रियेण—नराधिपा यत्र वसन्ति पत्तने, समृद्धिभाजोऽपि न तत्र गौरवम् । भजन्ति लोका विदितप्रभावका—स्तुष्टा हि भूपा वितरन्ति संपदः ॥ १ ॥

इत्थंविहितनिश्चयःस नटाधिपः सपरिवारोनृपरीतिमजानानोनृपसदसि समभ्येत्य नृपनिदेशतोविहितप्रणामाञ्जलिर्दत्ताशी-

र्वचनोमङ्गलोक्तिवादेन यथोचितस्थानमुपाविशत्, अनेकविधंस्वकीयकलाकौशलंदिदर्शयिषुःस नृपादिभ्यःपारितोपिकंजिघृक्षुरनेकधानृत्याऽऽतोद्यकलाकोविदंनिजमण्डलंसमुत्कण्ठयन्कियन्नृत्यक्रियांसमारभत, तैर्वर्ण्यमानंनिजयशोराशिंशृण्वानःपौरजनसहितोनराधीशोनृत्यकलामविकलांनिरीक्ष्य तेषांमहतामहेन प्रमुदितस्तान्प्रशंसितुंमुक्तकण्ठमवोचत्,

नटाधिप ? त्वं प्रवणोऽसि नाट्ये, कलाविदां मुख्यपदं बिभर्षि । तुष्टा वयं गीतकलाचयेन, धन्यस्त्वदीयः परिवार एषः ॥१॥

इत्थंनृपप्रमुखजनमुखाद्विनिर्गतांनिजप्रशंसांनिशम्य नटाधिराजःपरिजनसमेतोभृशंप्रमोदमवाप, भूपतिःकृतज्ञोविद्यते, पौराश्चदानशौण्डा ज्ञायन्ते, इतिचिन्तयन्नटाधिपोऽवदत्—भूपते ? वयंवैदेशिकाःसाम्प्रतमेव भवत्पत्तनंसमायाताःस्मः, तस्माद्योग्यावासभक्तपानादिप्रदानेनास्मान्कृतार्थय, एवंधनव्ययकारिणींतदुक्तिंसमाकर्ण्य कृपणमूर्द्धन्योधनप्रियनरेशःस्वचेतसि व्यचिन्तयत्, किमिदमसमञ्जसमश्रुतपूर्ववदत्ययंशैलूषोवचनम् ? अस्तुकिमनेन जल्पनेनाऽपीतिध्यायता तेन निजामात्यमभिलक्ष्य दृष्टिक्षेपोविहितः, प्रथमतएव संज्ञापितश्चामात्योनृपतेरधिकतरकार्पण्यात्प्रोवाच, नटाधिराज ? बहूनि वासस्थानानि नगरान्तर्भवदुचितानि मिलिष्यन्ति, भाटकेन तद्यथारुचि गृह्यताम्, भोजनादिव्यवस्थाऽपि स्वकीयधनव्ययेनैव त्वया विधातव्या, अस्मत्सकाशादधुना किञ्चिदपि धनं न लप्स्यते, यतोराज्यकार्यविधानेऽपारयन्तोवयमेतादृशंभवादृशानांकार्यंकर्त्तुंकुतोऽवसरंलभामहे ? भवतां वाञ्छितार्थसिद्धिस्त्वग्रे सुष्ठु भविष्यति, तद्विषये काऽपि चिन्ता युष्माभिर्नविधेया, निजकलाकौशल्येन पौरान्नृपजनांश्च रञ्जयत, येनप्रभूतसम्पत्तिरायतौभविष्यति, इत्थंसचिववाचंनिशम्य जातविस्रम्भःस्वार्थसिद्धिसमीहमानोनटराजोनिजपरिवारसमन्वितोमनसि व्यचिन्तयत्, भूयानर्थलाभोवदान्यान्तरयाचनाक्षोभक्षोभकोऽस्मादेवस्थानाज्जनिष्यति, इतिजानन्तस्ततस्तेवाद्यकारिणः-

प्रतिदिनंराजसभायांव्रजन्ति, मङ्गलोक्तिश्रावयित्वा विहितप्रणामाञ्जलयोवासरान्व्ययन्ति, नरेशस्तु दानबुद्धिं न करोति, धनाशाप्रतिबद्धमानसानांतेषामेकोमासोव्यतीयाय, स्वकीयंद्रव्यंसर्वंव्ययितंतैः, रिक्तपाणयस्ते विलक्षा जाताः, यतोवैदेशिकानामामुद्धारके कोऽपि व्यवहारंप्रायो न कुर्यात्, दैनिकोद्रव्यव्ययःकुत आनेयः ? नरेशस्तु द्रव्यव्ययलोभाकृष्टोनटपेटकस्यनाट्यकरणेनिदेशं न ददाति, अतोगरीयस्या धनाशया कष्टोपेता अपि नर्त्तका दिनानि वाहयन्ति,—

यतः—आशा गरीयसी लोके, जनानां जीवितप्रदा । आशाऽमरलता प्रोक्ता, सर्वकालसुखावहा ॥ १ ॥

ततस्ते राजदानजिघृक्षवोनिजाऽलङ्कारान्विक्रीयजीविकांकुर्वन्ति, कृच्छ्रेणाऽपि समयंयापयतांतेषांतृष्णातरलितचेतसांक्रमेणद्वादशमासा निर्गताः, तथापि धनप्राणोनृपतिर्नाट्यचिकीर्षूणांनर्त्तकानांमधुरवचनसंलापेन नाट्यविधाने विलम्बं दर्शयति, व्ययितमूलधनंनटमण्डलमुद्विग्नतांबिभ्रदेकदा राजानमभ्येत्य प्रावोचत्, नराधीश ? अत्रागतानामस्माकंद्वादशमासा जाताः, अधुना भोजनादिसाधनान्यपि नः क्षीणानि, यौष्माकीनप्रसादमन्तरा दुरवस्थामापन्ना वयंप्रतिवासरंदेवमुखंविलोकयामः, राजप्रसादजीविनामन्यच्छरणंकियन्मात्रम् ? इत्थंनटाधिपप्रार्थनांमनसि निधाय भूपेन कथितम्, नटाधिराज ? श्वस्तने दिने सपरिकरेण भवता नानारसमयंनाटकंसुखेन विधेयम्, पौरजनसमेता वयं सपरिवारास्त्वत्कलांनिरीक्षितुंसमागमिष्यामः, इतितंनिगद्य भृशमाश्वास्य च नरेन्द्रोनगरमध्येसर्वत्र जनानितिख्यापयामास, श्वोनर्त्तका नाट्यंविधातारस्तस्मात्तद्विलोकितुंसपरिवारैः सर्वजनैः समागन्तव्यम्, किन्तु मत्प्रसादात्प्राक्कश्चिन्नरो वा नारी नर्त्तकेभ्योदानंवितरिष्यति, तदा स दण्डाऽर्होऽवश्यंभविष्यति, इतिनिजेप्सितप्रकारंदृढीकृत्य नरेशः स्वास्थ्यमवाप, पुनर्नटाधिपोभूभृतंव्यजिज्ञपत्, महाराज ? दीपतैलादि

कियत्साधनमस्मभ्यंप्रदापय, सामग्रींविना वयंकथंनाट्यंकुर्मः ? श्रुत्वैतद्वचनंनृपेण प्रोक्तं—रे नटाधिप ? देशान्तरेपरिभ्रमँस्त्वं-विमूढोदृश्यसे, पूर्वंद्रव्यजिघृक्षा न कर्त्तव्या,

यतः—लोभेन बुद्धिश्चलति, लोभो जनयते तृषाम् । तृषार्त्तो दुःखमाप्नोति, परत्रेह च मानवः ॥ १ ॥

नाटकंस्थिरमनसा विधीयताम्, धैर्यं समाधेहि, इतिनृपवचनेन तुष्णींभूतास्ते स्वोत्तारके गताः, नाट्यसामग्रींश्च प्रगुणीकृत्य निशि नाट्यभूमिंसर्वेजग्मुः, पौरजना अपि नृपप्रमुखाः प्रेक्षणोत्सुकाः समागत्य सदसि न्यविशन् । ततस्ते स्फारनेपथ्या मृदङ्गादिवाद्यवादनतत्परा नर्त्तका नृपाग्रिमपौरजनसमक्षंनृत्यारम्भंविदधुः, नरेशप्रमुखाः सर्वेजनाः सारतरंसङ्गीतादिकलाकलितंनाटकंनिरीक्ष्य धन्यवादपुरःसरं तान् श्लाघयामासुः । परन्तु धनैकवल्लभेन भूपेन तेभ्यः किञ्चिदपि द्रव्यं न प्रदत्तम्, केवलंतेषामुत्साहवर्द्धनाय तेन कथितम्, आगामिनि वासरेऽपि युष्माभिर्नाटकंविधेयम्, भवादृशा नृत्यकलाकुशला नर्त्तकाः क्वाप्यस्माभिर्नदृष्टश्रुताः । भूपतिप्रमुखानांजनानामित्थंगिरंनिशम्य नटमण्डलंभृशंतुतोष, स्वमनसि व्यचिन्तयच्च, धराधीशः प्रमुदितोजातः, सारासारविवेकज्ञोऽयंविद्यतेऽतोस्माकंनाट्यप्रयासोमुधा न भविष्यति, श्वस्तने दिनेऽभीष्टदानेनास्मान्कृतार्थयिष्यति नरेशः, इत्याशाग्रस्तचेतसस्ते द्वितीयस्मिन्दिने बह्वाडम्बरपूर्वकंप्रभूतद्रव्यव्ययसाध्यंनाटकमकार्षुः, तथाऽपि तत्प्रशंसांकुर्वन्भूपतिः किञ्चिदपितेभ्यो दानंनायच्छत् । अन्ये सभ्यजना अपि तदाज्ञां विना तस्माद्भयमाशङ्कमाना दानबुद्धिं न कुर्वन्ति, तुष्टिभावंदर्शयन्नृपतिः पुनर्बभाषे, नृत्यकोविदाभवन्तः सर्वे स्वकलासु लब्धप्राविण्या दृश्यन्ते, युष्मत्कलावीक्षणेन वयंप्रमोदभाजोऽभवाम, पुनः पुनस्तद्विलोकनेनाऽधिकतरा तृष्णाऽभिवर्द्धते, अतः प्रत्यहंनाटकंयूयंकुरुध्वम्, इतितान्प्रमोदयन्नृपतिः स्वमनस्येवंजानाति,

चिरंनाट्यविधानेन परिश्रान्ता इमे स्वयमेव स्वमार्गमार्गयिष्यन्ति, एवञ्चधनव्ययोऽपि कश्चिन्मे न भविष्यति। नर्त्तकाश्च मनसैवंध्यायन्ति, चिरन्तनप्रयासेनास्माकंबहुतरद्रव्यलाभो न दुर्लभोभावी, एवमाशापाशनिवद्धचेतसस्ते नाट्यविदोबहून्वासरान्निर्गमयामासुः। चिरंविदेशभ्रमणेन श्रान्तानां तेषां मानसानि निजकुटुम्बपरिवारोभृशंदुनोतिस्म, ततोधृतधैर्यकुञ्चुकोनटवरस्तानबोधयत्, भो ! नर्त्तकाः ! अधुनाऽधैर्यं मा कुरुत, शान्तिद्रुमस्य फलानि मिष्टानि भवन्ति, मा मुह्यत, तुष्टे भूपतौ काऽपि चिन्ता न स्थास्यति, अचिरादेवास्माकंविषमः कालोविनङ्क्ष्यति, इत्थं सर्वान्नर्त्तकानाश्वासयता नटवरेण नाट्यषट्कं विहितम्, ततो नृपादेशेन सप्तमंचनाटकंतैः प्रारभ्यत, परन्तु मर्यादितंसकलंकार्यंविभाति, मर्यादातीतंसर्वंकार्यंनिरादरंजायते सर्वेषाम्, चिरन्तनमुधानर्त्तनश्रमेण निर्विण्णोनिराशमानसोनृत्यंकुर्वाणोनटः स्वक्रियाकरणे निरुत्सुकोयथाकथञ्चित्खेलयति। अत्रान्तरेऽस्यैवनगरस्य परिसरे नानातरुखण्डमण्डिते सुरम्ये मदकलकोकिलानादसन्नादिते चैकस्मिन्वनप्रदेशे भद्रावतीनामधेया भद्राऽऽपगा समस्ति, सारसकादम्बकलहंसादिविविधपक्षिश्रेणिविराजते तस्यास्तीरप्रदेशे कश्चित्तापसोद्वादशवर्षाऽवधिकंतपस्तेपे, तस्मिंस्तपसि वर्षद्वयावशिष्टे सत्येकदा तस्याः सरितस्तटे स तापसः संभोगासक्तंमकरयुगलंवीक्ष्य मदनेन व्याकुलितचित्तश्चिन्तयितुंलग्नः, अद्य खलु शुभङ्करनगरींप्रज्वाल्य राजकन्याञ्चमयि रागिणींविधाय तया सार्द्धंभोगसुखंसुखेनाऽनुभवामीतिनिश्चित्य भृशंकामार्त्तः स तमिस्रायांनगरान्तः प्रविवेश, राजवर्त्मनि समागच्छज्जनानांगमनाऽऽगमनंवीक्ष्य कौतुकितः स नाट्यभूमिं जगाम, मनोहरंनृत्यंकुर्वाणंनटपेटकंविलोक्य प्रेक्षणरसिकः स तत्रैव राजसभायामुपविष्टः। "प्रथमोपस्थितलाभः प्राज्ञैर्नपरिहर्त्तव्यः," चिकीर्षितं कार्यन्तु पश्चात्साधयिष्यामीतिविचिन्त्य प्रशान्तभावः स नृत्यविलोकनैकप्रहितेक्षणोनाटकंवीक्षते। तथैवचन्द्रप्रभाऽभिधेया प्राप्तयौवना

राजकुमारिका मनोभवनिशातशरलक्षीकृतलक्ष्या कृच्छ्रेण दिनानि निर्वाहयति, तथाऽपि तज्जनकोधनप्रियोद्रव्यव्ययभीतोऽसि-न्परस्मिन्वा वत्सरेपुत्रीविवाहंकरिष्यामीतिलोभबुद्ध्या कालंयापयति, एवंगच्छता कालेन चन्द्रप्रभा कुमार्येकविंशतिहायना समजनि, तथाऽपिभूपतिर्विवाहवार्त्तां न करोति, कुमारी स्वमनसि व्यचिन्तयत्, प्रौढयौवनां मां विलोकयन्नपि द्रव्यलुब्धो-मदीयजनकोविवाहचिन्तांमनागपि न करोति, निरपेक्षतया निद्रित एव तिष्ठति, जनकाज्ञाप्रतिबद्धाहंकियत्कालंप्रतीक्षे, भोगार्हे यौवने व्यतीतेसति परिणयनेनाऽपि किं फलम् ?

यतः—न यौवनं प्राप्य सुखैकसाधनं, सांसारिकं शर्म कुलोचितं यया। संसेव्यते जन्म तदीयमन्वहं, मुधैव दैवाहतया प्रकीर्तितम्॥१॥

मज्जनकोधनैकजीवनोमदीयमन्मथव्यथां न जानाति, अतोऽहंस्वयमेव शीलगुणसम्पन्नंकमपि कुलीनंयोग्यवरंवृणोमि, यद्भा-व्यंतद्भवत्विति कृतसाहसमतिः सा परिहितपुरुषनेपथ्या तमस्विन्यामेकाकिनी निजपरिजनमनापृच्छ्य रहःस्वप्रासादस्य गवाक्ष-मार्गाद्रज्जुप्रयोगेणाऽधस्तादवतीर्य केनाऽप्यलक्षिता यावद्राजपथंप्रयाति तावन्नटाद्भिर्नर्त्तकैराक्षिप्तचेतास्तन्नाटकंविलोकितुंतत्रैवो-पविशातिस्म। इतोनृपमन्त्रिणोःपुत्रौ स्वस्वजनककृपणत्वदोषेण भृशं पीडितौमिथोविचिन्तयतः, प्रियबन्धो ? भूपतिरमात्यश्चोभौ वित्तोपासकौ परस्परैकमानसौ स्वयंस्वेच्छया विलसतः। किञ्चेमे दीनावस्थामनुभवन्तोनटाश्चिरंनाट्यप्रयासंविदधति, अखिलां-नृपसभाञ्च प्रीणयन्ति, तथाऽपि ते कपर्दिकामात्रंपारितोषिकंनृपसकाशान्नलभन्ते, अहो ! कीदृग्विधोऽयमनयोःकार्पण्यदोषः!!! अनयोर्जीवतोर्नाऽस्मदीयःकोऽपि सत्ताऽधिकारोमाननीयोजायते, अत एव तदाज्ञांविना सर्पौरा वयंतेभ्यःकिमपि द्रव्यादिकंप्रदातुंन शक्नुमः। तस्मादद्यरजन्यांखड्गसहायावावांनाट्यप्रेक्षणमिषेण तत्र व्रजावः, तत्रोपविष्टौ भूपसचिवौ खड्गप्रहारेण यमसदन-

मावाभ्यांनेतव्यौ, एवंकृते राजसत्ताऽप्यावयोः स्वाधीना भविष्यति, इतिसंप्रधार्य तौ कुमारौ खड्गकरौ राजसभायांसमागत्य स्वस्वजनकपृष्ठभागे समुपविष्टौ, अथरङ्गभूमिमवतीर्णस्य नटस्य मनसि चिन्तासद्भावान्नृत्यंगीतञ्च प्रेक्षकाणांरुचिकारकंनाभूत्, तदसमञ्जसंनृत्यंविलोक्य नटाधिराजःसमस्यया तं नर्त्तकंविबोधयति—

तद्यथा—यातश्चेतन ! तेऽत्र भूरिसमयः कार्यं निजं कुर्वतः, स्वल्पः सम्प्रति विद्यतेऽधृतिमतो मा धेह्यनर्थप्रदाम् ।
धैर्यं सर्वजनेषु मित्रमनघं सर्वोपकारक्षमं, मा हार्षीस्त्वमुपार्जितोत्तमफलं चापल्यदोषात्क्षणात् ॥ १ ॥

इतिनटाधिराजगदितपद्यार्थंपरिभाव्य सैवनर्त्तकःसभ्यजनचेतोहरंखेलनंकरोतिस्म, तदानींस तापसस्तदुक्तंपद्यंनिशम्य स्वमनस्येवंव्यचिन्तयत्, हा ? मया मदनावेशवशात्किमिदमनर्थराशिप्रदंदुर्ध्यानंविहितम्, दशवार्षिकंकष्टोपार्जितंतपःस्वल्पतरसुखहेतवे कामवशगोऽहं हातुमुद्यतोऽस्मि, रेजीव ? धैर्यकवचमाधाय तपःसिद्धोभविष्यसि चेदीदृशराजकनीसमाना अनेकदीव्यवनितास्त्वां-सेविष्यन्ते, इतिनटाधिराजपठितकाव्यरहस्यंचिन्तयतस्तस्य सद्बोधःसमजनि, ततश्चिन्तितञ्च तेन, तपोमार्गात्पतन्तंमामयंनटाधीशःसमुद्धृतवानतोऽयंनटाधिराजोमे परमगुरुस्थाने सञ्जातस्तस्मान्महोपकारकारिणेऽस्मै दक्षिणा काऽपि मया प्रदातव्येति-विमृश्य द्रुतं तुष्टेन तेन तापसेन सर्वाभीष्टप्रदायकंस्वकीयमक्षयभाजनंनटाधिपाय प्रादायि । अथतापसवराल्लब्धाऽक्षयभाजना नटाःप्रमोदमेदुरा मुहुर्मुहुर्धन्यवादमुद्गिरन्तस्तापसगुणान्मध्येसभं वर्णयामासुः ।

धन्योऽयमेकस्तपसां निधानः, परोपकारैकमना धरायाम् । वितीर्य योऽक्षय्यममत्रमाशु, लोकान्तरक्षेमरतिं ततान ॥ १ ॥

इत्थंदानप्रशंसांसमाकर्ण्य भूपतिःक्रोधारुणलोचनोभृशंचुकोप, मदाज्ञामन्तरेण केन मुमूर्षुणा मत्तःपूर्वं दानविधानेकरः-

प्रसारितः ? रे दूताः ? गृह्णीत गृह्णीत, दानविधायिनंतमधमंपरिचारकं द्राक् प्रक्षिपत, इतिराजनिदेशमवाप्य नियोगिनस्तंपरिव्राजकंनिगडितावयवंकारागृहे निक्षिपन्ति, अत्रान्तरे पुंवेषधारिणी भूपकन्याऽपि विज्ञातनटाधिपोदितकाव्यतत्त्वा स्वयमेव प्रबुद्धा व्यचिन्तयत्, हा ! धिग्मां, लोकद्वयविनिन्द्यंकिमिदंमया कामार्त्तचेतसा ध्यातम् ? समयंप्रतीक्षमाणाया मे भूयान्कालोव्यतीतः, अधुना मदीयजनकोयस्मै कस्मै योग्यवराय मांप्रदास्यति, किंवाऽगामिनि परस्मिन्वा वत्सरे त्ववश्यं मे पाणिग्रहणमहोत्सवोभविष्यति, अस्मिन्विषये क्षुद्रजनोचिता काप्यधृतिर्मया न विधेयेतिविचिन्तयन्ती साऽपि गुरुबुद्ध्या तस्मै नटाधिपाय लक्षमूल्यंमौक्तिकहारंनिजकण्ठपीठादुत्तार्य वितरतिस्म, अमूल्यंतन्मौक्तिकहारंलब्ध्वा प्रमुदितहृदयाःसर्वे नटास्तत्प्रशंसांकर्तुंनव्यरमन्, तावन्निजकर्णयोस्तप्तत्रपुसमानि तत्प्रशंसावचनानि निशम्य भूभृतो मनोगृहं भृशंप्रदीप्तःक्रोधानलोदहतिस्म, निजशासनभङ्गकारिणींपुरुषवेषांस्वपुत्रीमपि क्रोधोद्धुरमानसोऽवनिपतिःसहसा स्वाधीनीचकार, तदानीं राजकुमारोऽपि नटाधिराजवचनंस्मरन्बोधमवाप, अस्मिन्संसारे पितृतुल्यंसुखप्रदंतीर्थं न विद्यते, पितृसेवनेन स्वच्छमतयःसुताःसुखिनोभवन्ति, पितरंनिहन्तुंसमुद्यतंमांधिगस्तु, यतोराज्यलोभादिसमाकृष्टेन मया दुर्जनोचिताऽसद्भावना विहिता, परन्त्वयंमे जनकश्चरमामवस्थामनुभवन्कियन्तंकालंजीविष्यति ? अधुना स्तोकतरमायुरवशिष्टंविद्यतेऽस्य, सर्वलोकैर्विनिन्दितमिदंपितृवधात्मकंदुष्कर्म विधातुमुद्यतोममेहाऽमुत्रातिघोराणि दुखान्यभविष्यन्निति ध्यायता तेनाऽपि सद्बोधदायिने नटाधिपतये निजाङ्गलग्ना अलङ्कारा वितीर्णाः । तथैवसंगृहीतनटराजवचनसारःप्रधानसूनुरपि नृपाज्ञामवगणय्य निजसत्काभरणादिप्रदानेन नाट्यकारान्प्रीणयतिस्म, ततस्तयोःकुमारयोर्दानप्रशंसांवितन्वतांतेषांनाट्येन रञ्जिताःपौराःसर्वे "यद्भावि तद्भवतु," चिरमत्रस्थिता निजधनेन दिनानि यापयन्तोदीना इमे याचमाना निराशा

न विधेया ' इतिध्यायन्तस्तेभ्यःकङ्कणमुद्रिकाराङ्कवादिविविधवस्त्राण्यर्पयामासुः। एवंसर्वतोनिरर्गलदानवृष्ट्या भूयान्द्रव्यराशिस्तत्र क्षणात्सञ्जातः, तदनर्गलवस्तुनिचयंविलोक्य नटपेटकंभृशंप्रमुदितंबभूव, विलोक्यतांदेहिनांधैर्यंकीदृग्विधं फलंजनयति ?

चिरं सोढं दुःखं, धृतवरमहाधैर्यकवचैः, निजाऽभीष्टं लब्धं, सुकलितकलाकर्मविभवैः।
नटद्भिः शैलूषैः, प्रमुदितजनेभ्यः फलमिदं, सदा सम्पत्पात्रं, भवति हि जनो धैर्यवसतिः ॥ १ ॥

सकलेऽपि सभ्यजने दानंवितीर्णे नृपतिःकाँस्कान्नरान्दण्डयेत् ? उपायशून्योऽपि स तदानींप्रथमं तं परिव्राजकंनिजसन्निधौ समाकार्य पृच्छतिस्म, तापसेश्वर ! अस्य नाट्यस्य विलोकनेन तव चेतसि तादृशःक आनन्दरसोजातः ? येन तुष्टीभूतेन भवता स्वकीयमक्षयपात्रमस्मै नटाधिराजाय प्रादायि, तदाकर्ण्य तापसःप्रावोचत्—नराधीश ! चिरंतपश्चरणंसमाचरता मया शैवलिनीतटवर्त्तिमकरमकरीमिथुनंमैथुनासक्तंव्यलोकि, तेन व्याकुलितचेतसा मया व्यचिन्ति, अद्यतपोबलेननृपतिंनिहत्य तन्नगरीश्चप्रज्वाल्य राजकुमारींपरिणीय यथेच्छंविषयभोगानहंभोक्ष्यामीति दुर्ध्यानपरायणोऽहंयावन्निजाश्रमान्नगरान्तःप्राविशं, तावन्नृत्यगीतादिविधायकंनटमण्डलंतद्वीक्षणैकदत्तावधानंजनसमूहश्च दृष्ट्वा निजकार्यभङ्गंविधाय सद्योहमत्रप्रेक्षकसभायांसंस्थितः। प्राप्तसमयेन नटाधिपेन पठितंप्रागुक्तंकाव्यंविबुध्य मन्मानसगेहादसत्यभावनादूतिःक्षणात्प्रणश्य क्वाऽपि न्यलीयत, अतोऽयं नटाधिराजोदुरन्तभवोदधौ निमज्जतोमे सद्बुद्धिदाता गुरुरितिविज्ञाय तस्मैमुदितेन मयाऽक्षयपात्रंवितीर्णम्, एवंपरिव्राजकवृत्तान्तंनिशम्य नृपसचिवौ परमंविस्मयंप्रापतुः। ततोदानदत्तांनिजकनींस्वान्तिके समाहूय नृपतिःप्रावोचत्—वत्से ! नाट्यंनिरीक्ष्यास्माभिर्दानप्रदानाय करकमलो न प्रसारितस्तथाऽपि त्वया केन हेतुना लक्षमूल्योहारोनटेभ्योवितीर्णः ? नृपसुता जगाद-

तात ! भवानतीव धनलुब्धोऽस्ति, तस्मात्कपर्द्दिकामात्रमपित्वंधनव्ययंनकरोषि, सचिवोऽपि त्वद्बुद्धिदायकस्तथाविधोमिलितः, अतःप्राप्तयौवनांमांविलोकमानस्त्वंविवाहचिन्तांनाकार्षीः, तद्दुःखेन दुःखिताऽहं कूपवापीसरोद्रहेषुक्काऽपिझम्पां दत्वा प्राणत्यागंविधातुंद्रुतंनिजप्रासादाद्रज्जुप्रयोगेण भूप्रदेशमधिगम्य राजपथमव्रजम्, तावन्नाटकंनिरीक्ष्य तद्विलोकनाय तत्रैवोपाविशम्। ततोनटाधिराजगदितकाव्येनाऽहमितिप्राबोधम्, दुःखमयःकालोमया बहुर्गमितः, अधुना स्वल्पःकालोमया सोढव्यः, तस्मात्साहसंकर्त्तुंसर्वथाऽनुचितमेव, स्वयमेव जनकःस्तोकसमयेन सद्दुःखंनिवर्त्तयिष्यतीतिसद्बुद्धिदायकोऽयंनटाधिराजोऽस्ति, अनेन नटराजेन स्वात्मघातोद्यताया मे जीवितदानंप्रत्यार्पितम्, अतोऽस्मै लक्षमूल्यंहारंवितरन्त्यामयाकिञ्चिदपि नदत्तमितिमन्ये। ततोनिजकुमारंसमाहूय नृपतिर्बभाषे-कुमारेन्द्र ! किमपेक्ष्य त्वया नर्त्तकेभ्योनिजाङ्गलग्ना अलङ्काराःप्रदत्ताः ! कुमारोन्याहार्षीत्-तात ! भवान्सचिवश्चोभौ भूरितरंकार्पण्यंभजतः, मरणावसरे युवां सकलंनिधिस्थितंद्रव्यंगृहीत्वैव किंलोकान्तरंगमिष्यथः ? यतः समयोचितंदानादिकर्मणि धनव्ययं न कुरुथः, केवलंतत्सञ्चयेनाकिम् ?

यतः—दानंभोगोनाश-स्तिस्रो गतयो भवन्ति वित्तस्य। यो न ददाति न भुङ्क्ते, तृतीया गतिर्भवति तस्य ॥ १ ॥

धर्मनिमित्तकोधनव्ययस्तु स्वाम्निकोऽपि युष्माभ्यां न रोचते, परंलुब्धमानसा एवं न विदन्ति, यद्धर्ममूला हि सम्पत्तयोमहता कष्टेन लब्धा अपि निजरक्षितारंभूमिस्थिता अधःपातयन्ति, तत्रस्थितास्ता मुधा नश्यन्ति, लोकान्तरेऽपि न सहायंकुर्वन्ति। यतः—धनानिभूमौ पशवश्चगोष्ठे, भार्या गृहद्वारि जनाःश्मशाने। देहश्चितायां परलोकमार्गे, धर्मानुगोगच्छति जीवएकः ॥२॥

अहो ! राजनीतिं वहमानयोर्युवयोरपि धर्मविमूढताकीदृशीविद्यते ? तथैव वांकृतघ्नतांविलोक्य ससचिवसुतुरहंव्यचि-

न्तयम्, इदंनटपेटकंचिरकालादस्मिन्नगरे द्रव्यकाङ्क्षया नृपनिदेशेन विविधनाट्यकलाःप्रदर्शयन्नृत्यति, तथैव निजद्रव्यव्ययेन भोजनादिनिर्वाहंकरोति, निर्गमितद्रव्या इमे दीनास्थितिमनुभवन्ति, तदपि भूपतिःसचिवानुमतःस्वयंकिमपि न दत्तेऽन्यानपि निषेधयति, इतिगुरुतरमन्यायंप्रवर्त्तयति सप्रधाने नरेशे लोकान्तरं यातेसति नटानांयथाऽभिलषितंदानंमिलिष्यति, राज्यसम्पत्तिरप्यस्मत्स्वाधीना भविष्यति, इतिसंप्रधार्य सचिवसूनुसमेतोऽहंखड्गसहायोयुवांयमसदनंनेतुंनिजस्थानान्निर्गत्य भवत्सन्निधौ यावत्समागतस्तावत्कौतुकितोनाट्यंविलोकितुमुपाविशम्। ततोनटाधिपोद्गीतकाव्यरहस्यंविज्ञाय स्वात्मानं विनिन्दितुंलग्नः, स्वपितृवधोद्यतंमामधमंधिगस्तु, साम्प्रतंपितृजीवितव्यंस्तोकमवशिष्यते, स्वयमेवायुःक्षयेण कालधर्मंगमिष्यति। मुधेदंदुरन्तदुःखजनकंदुश्चिन्तनंविहितम्, तात! अयंसद्बोधोनाट्यनिरीक्षणादावयोर्लब्धः। अतोऽयंनटराजोऽस्मन्महोपकारी सर्वानर्थनिवारकश्च समजनि, ततस्तेषांसर्वस्वदानमपि स्तोकतरमेव विभाव्यते। नृपतिःसचिवोऽन्ये द्रष्टारश्चेदमखिलवृत्तान्तंनिशम्य चमत्कृताः परमंविस्मयंमेनिरे। ततोभूपतिर्मन्त्रिणा साकंमन्त्रयति—कदर्यगुणकक्षीकरणेन भूरितरोऽन्याय आवाभ्यामुररीकृतः। अस्तु, अधुना किमपि न विनष्टम्, 'यदा जागर्त्ति तदा प्रभातः,' 'यतोविस्मृतिस्ततःपुनर्गणनीयम्,' एवमनेकधा कृतपश्चात्तापोभूपतिर्भृशंवित्तदानेन नर्त्तकानयाचकान्विनिर्ममे. ततोगृहीतराजसत्काराः प्रमुदितमानसा नटाः स्वस्थानंजग्मुः। तपस्विनश्च नृपो निर्बन्धनंविधाय निजाश्रमंव्यसृजत्। सोऽपि पुनः स्वाश्रमंगत्वा परलोकसुखावहंतपश्चरणंसमाराध. अथसन्तुष्टमतिर्भूपतिर्निजकुमारिकांशीलगुणजातिवयःसमानेन केनचिद्राजकुमारेण साकंसमहोत्सवंप्रभूतवैभवेन परिणाय्यप्रमुदितः पौरान्प्रमोदयामास। विषयव्यावृत्तात्मा धर्मकर्मणि समुद्यतोभूपोयोग्यवयसंनिजंकुमारंराज्यविष्टरे स्थापयामास. प्रधानपुत्रश्चनिजपितुःस्थानेनिवेश्य-

कृतकृत्योजज्ञे। अथभूपप्रधानौ निर्वृत्तिपथगामुकौ दानपुण्यानि कुर्वन्तौ शुद्धात्मानन्दरसिकौ तीर्थयात्राप्रभावेण स्वर्गसुखंभेजतुः। अस्य दृष्टान्तस्य सारस्त्वयानेव विभावनीयः, यत्साराऽसारविचारमकृत्वा येऽयोग्यनिमित्तैराकृष्टा विपरीतभावनाभाविताः साहसंविदधते, ते नराऽधमा इहाऽमुत्र भृशंदुःखिनोभवन्ति, ये च धृतधैर्याः शान्तवृत्त्या सत्याऽसत्ययोर्निश्चयंविधाय कार्यरता भवन्ति, ते निपुणधियोदुस्तरमापत्पयोधिंतरन्ति, राजसत्ताऽऽद्यधिकारंलब्ध्वाऽपि ये सदुपयोगतया वर्त्तन्ते तेषामेव मानवजन्मसफलमात्मकल्याणञ्च सुलभं भवेद्। अतः पूज्यमातृके ? यावदहंजीवामि तावन्मदीयंसौभाग्यमखण्डितमस्त्विति त्वया प्रसादोविधीयताम्। प्रतारितोत्सङ्गाऽहंमुहुस्त्वांप्रार्थयामि, भर्त्तृमत्यै मे कृपादानंदेहि, जननि ? तव क्रोधानलज्वाला मया नसह्यते, दौर्भाग्यमेतन्मे प्रकटितंमन्ये, यदनेन तव छिद्राणि गवेषितानि, मूढधिया मयाऽपि भाविनी स्वाऽनर्थश्रेणिर्न चिन्तिता, यतस्तद्वृत्तान्तंत्वदग्रे प्रकाशितम्। कार्यदक्षाऽप्यहमन्यासङ्गेन विमूढमतिर्जाता. अधुना त्वद्वञ्चिताऽहंकिं करोमि ? क गच्छामि ? कमप्युपायं न वेद्मि, अधुना भूयान् पश्चात्तापो मे जायते, भगवति ? पुत्रः कुपुत्रो भवति, माता कुमाता न भवति—

तदुक्तमन्यत्र—जगन्मातर्मातस्तवचरणसेवा न रचिता, न वा दत्तं देवि ? द्रविणमपि भूयस्तव मया।
तथाऽपि त्वं स्नेहं, मयि निरुपमं यत्प्रकुरुषे, कुपुत्रो जायेत, क्वचिदपि कुमाता न भवति ॥ १ ॥

हे मातस्त्वमतिदक्षा विद्यसे, अयन्तु बालवयास्त्वदग्रे गण्यते, जगद्व्यवहारविधुरोऽयं कार्याऽकार्यंनावैति. पुनस्त्वंकमप्यनर्थंकरिष्यसिचेदनेन राज्यवैभवेन मे किंफलम् ? मम जीवितं सकलंधूलिग्रस्तंभविष्यति, तस्मात्सर्वथामत्पतिंविमुच्य प्रसादंविधेहि, मयि कृपालुर्भवसि चेदस्मै जीवितदानंदेहि, एष स्वमनसि ज्ञास्यति चेदियदपि न्यूनं न जातम्। पिपीलिकामुद्दिश्य

कटकरचना न घटते, अयन्तु तव सूनुर्लालनीयः परिपाल्यः, त्वयि विद्यमानायामयंनिश्चिन्तमनास्तिष्ठति, किमपि तव कथनीयञ्चेन्मांसुखेन कथयस्व, मत्पतिश्च मा पीडय, इत्थंगुणावलीप्रलापमाकर्ण्य वीरमती प्रोवाच, मदिराक्षि ? अज्ञाततत्त्वा त्वंदूरं याहि. ईदृग्विधेन सूनुना मे कृतम् । सर्वथा तमुद्धतं न विमोच्यामि, त्वदुक्तवचनानि शूलायमानानि न सहिष्ये, तेन सुवर्णेन किंफलम्? यद्धारणेन कर्णस्त्रुट्यति ! अस्य मुग्धस्य मनसि किमपि नायातं ? यतोऽयं ममैव च्छिद्राणि निरीक्षितुंलग्नः, अतोऽस्य फलन्त्वस्मै दातव्यमेव, एवमभिधाय रोषारुणनयना सा चन्द्रराजकण्ठपीठेऽसिधारांवाहयितुंयावत्प्रवर्त्तते तावद्विदितसमया गुणावली नेत्रयोरश्रुधारांवहन्ती मध्ये तयोरपतत्—ततः सा श्वश्रूकण्ठे विलग्य दीनमुखी बभाषे, हे मातः ! प्रसादंविधाय मे पतिभिक्षांदेहि, यद्यपीदंकार्यमनेनाऽविचारितंकृतंपुनरेवं न करिष्यति, जीवन्नयंयावज्जीवंत्वदुपकारंमंस्यते, कदाचिदिमंमारयिष्यसि चेदिदंराज्यभारं कोधारयिष्यति ! किञ्च सामान्यतोऽपि प्राणिहिंसनंमहतेऽनर्थाय जायते—

तद्यथा—हिंसा नैव विधातव्या, प्राणैः कण्ठगतैरपि । स्वकर्त्तव्यन्तु कर्त्तव्यं, प्राणैः कण्ठगतैरपि ॥१॥ राजदण्डभयाद्धिंसां, नाचरत्यधमो जनः । परलोकभयान्मध्यः, स्वभावादेव चोत्तमः ॥ २ ॥ हिंसासक्ते चेतसि, धर्मकथाः स्थानमेव न लभन्ते । नीलीरक्ते वाससि, कुङ्कुमरागो दुराधेयः ॥ ३ ॥ मनुजः कुरुते हिंसां, बन्धुनिमित्तं वपुर्निमित्तञ्च । वेदयते तत्सर्वं, नरकादौ पुनरसावेकः ॥ ४ ॥ अहो ? मानवाः साहसमकृत्यमपि न विदन्ति मोहमूढात्मानोऽचिरेण पापरताश्च भवन्ति—

यत्नेन पापानि समाचरन्ति, धर्मं प्रसङ्गादपि नाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोके, क्षीरं परित्यज्य विषं पिबन्ति ॥१॥

तथा च—धर्मस्य फलमिच्छन्ति, धर्मं नेच्छन्ति मानवाः । फलं पापस्य नेच्छन्ति, पापं कुर्वन्ति सादराः ॥ २ ॥

इत्थंगुणावलीगदितवचनानि समाकर्ण्य किञ्चिद्दयार्द्रभावा सा तदीयंवचनममन्यत, परन्त्वविनीतस्याऽस्य जीवितंनिष्फलं-विधेयमितिनिश्चित्य वीरमत्या मतिहीनया मन्त्रितोदवरकोऽदृश्यस्तत्पादे निबद्धः । यतः—

सद्बोधवाक्यानि हृदि स्पृशन्ति नो, स्पृशन्ति चेन्नैव सुकृत्यभाञ्जि !। हालाहलं भव्यसुधानुसङ्गतिं, लब्ध्वापि सौख्याय न जायते क्वचित् ॥ १ ॥ मन्त्रितेन तेन दवरकेण तत्क्षणंमनुष्यदेहंपरित्यज्य स कुक्कुटतामियाय, अहो ! मन्त्रमाहात्म्यम् ! मन्त्रप्रभावेण किंन सिद्ध्यति ? ॥ यादृशं बीजमुप्तं हि, तादृशं जायते फलम्। मन्त्रस्तु योजितः सर्वं, फलत्याशु समीहितम् ॥१॥

अथ चरणायुधस्वरूपंनिजपतिंनिरीक्ष्य निर्विण्णमानसा गुणावली गतसर्वस्वेव वीरमत्याश्चरणयोर्निपत्य दीनोक्त्या रुद्धकण्ठी भणतिस्म—श्वश्रूवर्ये ! किमिदंजनानर्हंत्वया विहितम् ? विभूषितराज्यासनो मे भर्त्ता रभसवृत्त्या भवत्या जनैर्निन्द्यमानमिदं-तिर्यक्त्वंप्रापितः, मातः ! मत्प्रार्थनया पुनस्तस्मै मानवत्वंदेहि, रोषभावंपरिहृत्य तस्मिन्कृपावती भव ! आवयोरक्षकोऽयमेक एव समस्ति, नाऽन्यस्मिन्नस्माकंदृष्टिर्विश्राम्यति, अतः सर्वोपायैः संरक्षणीयोऽयंनरोत्तमः । तद्यथा—

यस्मिन्कुले यः पुरुषः प्रधानः, स सर्वयत्नैः परिरक्षणीयः । तस्मिन्विनष्टे स्वकुलं विनष्टं, न नाभिभङ्गे ह्यरका वहन्ति ॥ १ ॥

भगवति ! त्वंबुद्ध्या वयसा च ज्येष्ठाऽसि, अहन्तुभयथा बालत्वमाश्रयामि, भवत्यै यद्रोचते तद्विधीयताम्, त्वदग्रेऽधिकं वक्तुमयोग्याऽस्मि, तथाऽपि मयि कृपांविधायाम्रुंमानवरूपभाजंविधेहि, यादृक्तादृगपि तवसूनुर्निगद्यते, राज्यस्थितिरप्यनेनैव स्थास्यति, तमन्तरा राज्यव्यवहारोविलयंयास्यति, राज्यकर्त्ता काऽपि विहगो नैव दृष्टः श्रुतोऽपि न—

अविक्रमं नैव नराधिपत्वं, नरोत्तमश्चैव धरां प्रशास्ति । विहङ्गराजोऽपि निदेशहारी, दृष्टःश्रुतो राज्यधरो न लोके ॥ १ ॥

इति गुणावल्याः प्रार्थितमाकर्ण्य भृशंकुपिता वीरमती जगौ, मानिनि ! साम्प्रतमधिकतरं मा ब्रूहि, अन्यथा जिह्वादोषेण तवाऽपि दुःस्थितिर्भविष्यति, भूरिप्रकोपनेन च तवाऽशुभंभविष्यति. यतः—

क्रोधानलो यत्र समुत्थितो द्राक्, प्रज्वालयत्यन्यनिजं न वेत्ति। बुद्ध्वैवमर्थज्ञजनेन तस्मा—त्कोपप्रदोषो न विधापनीयः ॥१॥

अतस्त्वमपि निजपतिजातिमनुसर्त्तुमिच्छसिचेदितोब्रूहि, इत्थं वीरमत्याः वचनपारुष्यंश्रुत्वा गुणावली विहितमौना दीनवदस्थात्। वीरमती च सत्वरं ततः समुत्थाय स्वस्थानमगमत्, ततोगुणावली व्यचिन्तयत्—अहो ! क्षणमात्रेण किंजातम् ! दैवगतिर्बलीयसी, " न जाने जानकीनाथ ? प्रभाते किं भविष्यति ?" इत्युक्तिरधुना सत्या जाता, दिगन्तकीर्त्तिरप्ययंभूपतिः पक्षित्वंप्राप्तः, विधातुर्लेखमन्यथाकर्त्तुकः समर्थः ? यदुक्तम्—भगवन्तौ जगन्नेत्रे, सूर्याचन्द्रमसावपि । पश्य गच्छत एवास्तं, नियतिः केन लङ्घ्यते ! ॥ १ ॥ किं करोति नरः प्राज्ञः, शूरो वाऽप्यथ पण्डितः । दैवं यस्य फलान्वेषि, करोति विफलाः क्रियाः ॥ २ ॥ स्वच्छन्दचारिणो विधेर्वैपरीत्यं कियदुद्घाट्यते ? केचित्कृतिनस्तथैव व्याहरन्ति—पिबन्ति मधु पद्मेषु, भृङ्गाः केसरधूसराः । हंसाः शैवालमश्नन्ति, धिग्दैवमसमञ्जसम् ॥ १ ॥

तथाच—अघटितघटितं घटयति, सुघटितघटितानि दुर्घटीकुरुते । विधिरेव तानि घटयति, यानि पुमान्नैव चिन्तयति ॥२॥

अन्यच्च—विकटाऽटव्यामटनं, शैलारोहणमपांनिधेस्तरणम् । निगडं गुहाप्रवेशो—विधिपरिपाकः कथं न संधार्यः ? ॥३॥

न हि भवति यन्नभाव्यं, भवति च भाव्यं विनाऽपि यत्नेन । करतलगतमपि नश्यति, यस्य हि भवितव्यता नास्ति ॥४॥

इति सम्यग्विधिविलासमवधार्यसा निजोत्सङ्गे कुक्कुटंनिधाय करेणतंमुहुः स्पृशन्ती नयनाम्बुधाराभिश्वस्नापयन्ती रुद्धकण्ठीबभूव।

॥ इति श्रीचन्द्रराजचरित्रे तृतीयोल्लासे प्रथमःसर्गः ॥ १ ॥

अथ विलपन्ती सा गुणावली प्राह—स्वामिन्! यस्मिन्मस्तके मणिप्रभाभिर्भासमानः किरीटोऽव्यराजत, तदधुना लोहित-पिच्छचूडांबिभर्त्ति, अहो ! चणेन तन्महिमाप्यलुप्यत—

यन्मौलिमालोक्य महाप्रभावं, वैरायमाणा अपि निर्विकाराः। क्व तद्गतं तैजसमद्भुतं प्रभो ? चित्राहि दैवस्य कृतिर्विलोक्यते ॥१॥

प्राणप्रिय ! योदेहोऽनर्घ्यालङ्कारवासोभिर्व्यरुचत्तादिदं ते वपुः साम्प्रतमवद्यपिच्छगुच्छैरावृतंदृश्यते, तथैवकटीप्रदेशे त्वंपुरा वैरिवारभयप्रदंयत्खड्गरत्नमधारयस्तत्स्थानेऽधुना शस्त्रायमाणा वक्रतामापन्ना नखावलिर्विलोक्यते। पुनःस्वमनसि सा व्यचिन्तयत्, पुरा योदिनमणावुदिते वन्दिजनैःस्तुतिगीतिमङ्गलैर्विबोध्यमानोमणिमयशयनं जहातिस्म, सोऽधुनायामिन्याश्चरमयामे प्रचण्डध्वनिभिर्लोकान्विबोधयन्विनिद्रोभवति, यःपुरा मनोऽभीष्टमधुरभोजनेन तृप्तिममन्यत, सोधुनाऽवकरचयाँश्चरणाभ्यामुत्खाय प्राणवृत्तिं विदधाति, यन्मुखेन योहृदयङ्गमानि वचनानि व्याहरँल्लोकप्रियोऽभवत्, सोऽधुनाऽमङ्गलसूचकान् शब्दानुच्चरति, यः पुरा रत्नसिंहासनमारुह्य सामन्तपरिवारवारितोमागधगणैःस्तूयतेस्म, सैवाधानर्हभूमौ परिभ्रमँल्लोके निन्द्यतमांस्थितिमापन्नः। यःपुरा सुवर्णदोलामारूढोऽनुजीविभिरसेव्यत, सोऽधुना पञ्जरस्थितो लोहशलाकामवलम्ब्य दोलनक्रीडा मनुभवति। हा ! दैव ! क्रूरतांद्योतयता त्वया किमिदंविहितम् ? आकस्मिकोऽयंवज्रपातःसुकुमाराङ्ग्या मया कथंसह्यते ? नूनंविधात्रा मे हृदयंवज्रमयंनिर्मितमन्यथा कथं न विदीर्येत ? एवं मुहुर्विलपन्ती सा मूर्च्छामवाप्य भूपीठेऽलुठत्। पार्श्ववर्त्तिना

दासीगणेन शीतोपचारैःसा लब्धचेतनाऽक्रियत, ततस्तांसान्त्वयितुं तत्सहचर्यःप्रबोधयामासुः । प्रियसखि ! अस्मिन्विषये कस्याऽप्यन्यस्य दोषोनास्ति, केवलंविधातैवोपालभ्यः। अन्यस्मै वृथा दोषः कुतस्त्वया प्रदीयते ? प्राक्तनदैवयोगेनेयंचिरपालिता राज्यलक्ष्मीरस्माभिरसेवनीया जाता, तत्र किमु विधातव्यम् ?, अत्र विमातुस्तवाऽपि च न दोषः, पुरार्जितंदैवमन्यथाकर्त्तुं न कोऽपि प्रभुः । विधिलिखितवर्णाली मुधा न भवति, पूर्वोपार्जितानि कर्माणि भोक्तव्यानि, तीर्थकृच्चक्रवर्त्तिनोऽपि कर्मवशगास्तान्यवश्यंभुञ्जन्ति, तर्ह्यन्येषांका कथा ? यतः—अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाऽशुभम् । न तान्यभुक्त्वा मनुजा—लभन्ते शान्तिमुत्तमाम् ॥१॥ यादृशंकर्म येन विहितं तादृशं तेन कर्म भोक्तव्यमेव—तस्मादधुना सन्तोष एव परमंसाधनम्—यदुक्तम्—सन्तोषाऽमृततृप्तानां, यत्सुखं शान्तचेतसाम् । कुतस्तत्तृप्तिहीनानां, शोकसंविग्नचेतसाम् ॥ १ ॥ हे स्वामिनि ! येन चागर्भ रक्षणं विहितं सैव विश्वपालकोऽधुनाऽस्माकंविघ्नविघातकोभविष्यति । तथाच—यो हि गर्भगतस्याऽपि, वृत्तिं कल्पितवान्स्वयम् । शेषवृत्तिविधाने च, स किं सुप्तोऽथवा मृतः ? ॥ १ ॥ मनीषिभिरचिन्तितदुःखाक्रान्तिमालोक्य विषादो न विधातव्यः, चक्रवत्सुखासुखान्यतिवर्त्तन्ते—यथाच—अचिन्तितानि दुःखानि, यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये, दैन्यमत्राऽतिरिच्यते ॥ १ ॥

अतोदैन्यावस्थांपरित्यज्य समवृत्त्या वर्त्तितव्यम् । यावदयंकुक्कुटरूपेण चन्द्रराजोनयनानन्दंजनयति, तावत्त्वंपतिवत्नी विराजसे, इतिमन्यमाना त्वंप्राप्तकालंतत्सेवनेन गमयस्व, पुनःकियान्समयस्त्वया प्रतीक्षणीयः, यतोऽतिहितकारिणी श्वश्रूस्तवकार्यसाधिका वर्त्तते ??? यद्येषा वृत्तान्तमिदंज्ञास्यति चेदत्र पुनरागत्य किमप्यनर्थान्तरंकरिष्यति, तस्मादिदानींतुष्णींभावःसुखकरः।

तद्यथा--मुखवाचालदोषेण, वध्यन्ते शुकसारिकाः । बकास्तत्र न बध्यन्ते, मौनं सर्वार्थसाधनम् ॥ १ ॥ प्रियसखि ! अविकृतचेतसा त्वया श्वश्रूसेवा विधातव्या, समयमनुपालयन्त्या भवत्याऽसौचरणायुधोयावज्जीवंपालनीयः । विचित्रा कर्मणां-गतिरितिजिनेन्द्रोक्तिःसत्यैव । यतः—क नु कुलमकलङ्कमायताक्ष्याः, क नु रजनीचरसंगमापवादः । अयि खलु विषमः पुराकृतानां, भवति हि जन्तुषु कर्मणां विपाकः ॥ १ ॥ क वनं गुरुवल्कभूषणं, नृपलक्ष्मीः क महेन्द्रवन्दिता । नियतं प्रति-कूलवर्त्तिनो--बत धातुश्चरितं सुदुःसहम् ॥ २ ॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वाधनं, तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् ।

तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः, कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ३ ॥

अन्यच्च—जातः सूर्यकुले पिता दशरथः क्षोणीभुजामग्रणीः, सीता सत्यपरायणा प्रणयिनी यस्याऽनुजो लक्ष्मणः ।

दोर्दण्डेन समो नचाऽस्ति भुवने प्रत्यक्षविष्णुः स्वयं, रामो येन विडम्बितोऽपि विधिना चान्ये जने का कथा ? ॥४॥

सांसारिकंसुखमभीप्सन्ती त्वं वीरमत्याःसम्बन्धमकार्षीस्तथाऽपि विपरीतफलभाजनंजाताऽसि, दुर्जनसंगतिः सर्वदा विपदन्ता निगद्यते, यतः—एकः खलोपि यदिनाम भवेत्सभायां, मोघीकरोति विदुषां निखिलप्रयासम् । एकाऽपि पूर्णमुदरं मधुरैः पदार्थै-रालोड्य रेचयति हन्त न मक्षिका किम् ॥ १ ॥ ते दृष्टिमात्रपतिता अपि कस्य नाऽत्र, क्षोभाय पक्ष्मसदृशा अलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना--ये कृष्णतां कुटिलतामपि न त्यजन्ति ॥ २ ॥ अधुनाऽयंतव भर्त्ता तिर्यक्त्वंप्रपन्नोऽस्ति, नास्यप्रत्युपचारविधानेऽस्माकंशक्तिस्ततोवीरमतींसेवस्व, तामन्तरा नास्माकंकार्यसिद्धिः, यदि मनुष्यरूपधारिणंनिजपतिमवेक्षि-

तुमिच्छसि चेत्तांपरिचर्यया प्रसादय, इमंकुकुटश्च प्राणतोऽप्यधिकंमत्त्वा परिपालय, समयान्तरे प्रसन्नीभूता कल्पलतेव सा तव मनोरथंपूरयिष्यति, संप्रति विषादकरणेन किमपि फलं न दृश्यते, एवंसखीजनेन बहुधा विबोधिता गुणावली गाढंनिःश्वस्य शनैःशान्तनिर्वेदाऽजनि, यतः--क्रमेण चीयते वारि, क्रमेण चीयते वपुः। क्रमेण चीयते शोकः, क्रमवश्यमिदं जगत् ॥१॥

ततः सा तंचरणायुधंचणमुत्सङ्गे निधाय क्रीडयामास, कदाचिद्वचसि तं सन्निवेश्य विरहार्त्तिंविजहौ, कदाचिन्निजहस्तेतं स्थापयित्वा च लालयामासेति तदाराधनतत्परा सा सारमेयादिक्रूरसत्त्वेभ्योनितरां तं रचतिस्म, विविधस्वादुफलानि तदग्रे ढौकयामास, सोऽपि तत्सर्वंफलादिकंनिजप्रियाढौकितमनिच्छन्नपि जिजीविषुर्बुभुजे ।

यतः—जीवञ्जीवयति हि यो-ज्ञातिजनं परिजनं च सुहृदश्च । तस्य सफला गृहश्री--र्धिगनुपजीव्यां धनसमृद्धिम् ॥ १ ॥

अथैकदागुणावली कुक्कुटंकरपञ्जरे निधाय वीरमतीसन्निधौ गत्वा तामभिवन्द्य दीर्घनिःश्वासपूरितास्या तदन्तिके निषसाद, तदा वीरमत्या सा भणिता—मुग्धे ? इमंदुष्टंसमादाय मदन्तिके कथंसमागता ? अदृष्टव्यमुखमिमंमद्दृष्टितोदूरमपनय, अद्याऽपीमंवल्लभदृष्ट्यात्वंनिरीचसे, तेनत्वंनिर्लज्जादृश्यसे, सकृत्प्रबोधेन यौनविजानाति स पशोरप्यधमः—यतः—उदीरितोर्थः पशुनाऽपि गृह्यते, वहन्ति नागाश्च हयाश्च नोदिताः । अनुक्तमप्यूहति पण्डितो जनः, परेङ्गितज्ञानफला हि बुद्धयः ॥ १ ॥

अधुनाऽयंतिर्यक्त्वंप्रापितोऽस्ति, अग्रे कीदृशींस्थितिमनुभविष्यतीतित्वंज्ञास्यसि, यतोऽयंमच्छिद्रान्वेषी जातस्तत्फलंसम्पूर्णमहमेनंदर्शयिष्यामि, अस्य मुखमुद्रां तु विलोकय ? किमयंराज्यंकरिष्यति ? अस्य भाग्यंराज्यार्हं न विद्यते, सत्वरमुत्तिष्ठ, इमंगृहीत्वेतो याहि, पञ्जरस्थितोऽयं त्वया रचणीयः, कदाचिदप्ययंमत्सन्निधौ नाऽऽनेतव्यः । ततस्तत्कालमेव गुणावली

कुक्कुटंगृहीत्वा तस्मात्समुत्थिता निजावासमेत्य सुवर्णपञ्जरेतंनिचिक्षेप, योग्योपचारैःप्रतिभक्त्या सा वासरानतिचक्राम, मिष्टान्न-द्राक्षादिस्वादिमपदार्थान्प्रत्यहं सा तं भोजयामास, सुवर्णभाजनेन जलपानंप्रतिसमयंकारयामास, कुङ्कुमवारिणा तदीयचरणौक्षालयामास, प्रतिवासरंमुहुःपञ्जराद्बहिस्तंनिष्कास्य निजोत्सङ्गे निधाय स्वामिस्नेहतः सा व्याकुलचित्ताऽवदत्—

स्वामिन्नहो ! दिनमिदं कुत एव योगा-त्संप्राप्तमुन्नतिहरं मम मन्दभाग्यात् । नासाद्यतेऽधमजनैः स्थितिरीदृशी हि, पुण्यक्षये सुकृतिनोऽपि भजन्ति कष्टम् ॥ १ ॥ तिर्यक्त्वमद्य भवता भवतापदायि, दैवादनर्थजनकादनुभूयते वै । तेनाऽपि किं जनिमतां कृतकर्मभाजां, विज्ञा विदन्ति सुखदुःखमभिन्नरूपम् ॥ २ ॥ स्वामिन्न तावकवियोगमपि क्षणार्धं, सोढाऽस्मि ते चरणभक्तिमनुस्मरन्ती । अङ्को हि मे तवपदाङ्कित एव भाति, पक्षित्वमेत्य मम शान्तिकरोऽस्तु नित्यम् ॥ ३ ॥ यद्यावयोः शुभविधिः क्रमतोऽजनिष्य-द्दैनं तदा सुखमहेतुकमागमिष्यत् । दैवेऽनुकूल इह सर्वसुखं सुलभ्यं, मानुष्ययत्न उचितोऽपि न सिद्धिदायी ॥ ४ ॥ आपत्तयोऽपि महतां विपुला भवन्ति, सम्पत्तयोऽपि सकला नु भवन्ति तेषाम् । लङ्केशवैरिणि धराधिपतौ हि रामे, सञ्जातमेतदखिलं भुवि कीर्त्तिकारम् ॥ ५ ॥ शीतोष्णरश्मिधरयोर्ग्रहणं प्रसिद्धं, तारागणस्य न हि तत्तुलनोज्झितस्य । सौख्यञ्च दुःखमतुलं महतामजस्रं, किं दीनतान्वितजनस्य महार्थलब्धिः ॥ ६ ॥ तस्माद्धेनन्दनान्दृयन्धो ! वीराग्रणीः ! प्रशुसारगासनीशंविधेहि-चिन्तां मा कुरु, यतः परमेष्ठिस्मरणेन भव्यंभविष्यति, धर्मप्रभावोह्यचिन्त्यः, विनापुण्यंसत्फलंनासाद्यते—यतः—धम्मेण कुलप्पसूई, धम्मेण य दिव्वरूवसंपत्ती । धम्मेण धणसमिद्धी, धम्मेण सवित्थरा कित्ती ॥ १ ॥ तथाच—न देवतीर्थैर्न पराक्रमेण, न मन्त्रतन्त्रैर्न सुवर्णदानैः । न धेनुचिन्तामणिकल्पवृक्षै-र्विना स्वपुण्यैरिह वाञ्छितार्थाः ॥ १ ॥

अपिच—व्यसनशतगतानां क्लेशरोगातुराणां, मरणभयहतानां दुःखशोकार्दितानाम् ।
जगति बहुविधानां व्याकुलानां जनानां, शरणमशरणानां नित्यमेको हि धर्मः ॥ २ ॥

एवंप्रजल्पन्ती गुणावली कुक्कुटराजंसान्त्वयन्ती सती स्वयंसन्तोषंमेने, तत्पञ्जरञ्चजिनेन्द्रमन्दिरवदमन्यत, क्षणमपि दूरंगता सा पक्षसन्ततिंकम्पयन्तंतंनिरीक्ष्य सत्वरमविश्वस्तेव तत्र समागत्य तत्परिचर्यापरा भवति, मुहुस्तत्पक्षान्स्पृशति करकमलेन, तद्गुणांश्च संस्मरन्ती मनस्तृप्तिं न मनुते । अथाऽन्यदा तत्रैकोमुनिराजोगोचर्यैसमागतः, आगच्छन्तं तं मुनिवरंविलोक्य गुणावली ससत्कारंतस्मै निरवद्यान्मोदकानयच्छत् । गृहीतोचितभिक्षान्नोमुनीन्द्रःपञ्जरस्थितंचरणायुधंविलोक्य गुणावलीमपृच्छत्–अहो ! किमर्थमिदंविहगवन्धनंत्वया निजवन्धनकृद्विहितम्, अनेन पक्षिणा कस्तवाऽपराधोविहितः ! येनासौ पञ्जरे निक्षिप्तः, मुग्धे ? त्वमेवंजानास्यसौसौवर्णपञ्जरस्थितः, परन्त्वसौ कारागृहवेदनामनुभवति, तस्मादिमंविहगंबन्धनाद्विमुक्तंकुरुष्व, हिंस्रप्राणिनःपालनमपि परिणामेऽनर्थजनकमेव प्रकीर्त्तितम् । प्रभाते चास्य मुखदर्शनमपि पापोत्पादकंजायते, तस्मादेवंविदित्वाकुतोऽसदाचारःसेवनीयः । इत्थंमुनीन्द्रोक्तिमाकर्ण्य ज्ञाततत्त्वा गुणावली प्राह--मुनीन्द्र ? भवतःसर्वंविज्ञातमेव, नायंजन्मना कुक्कुटः, अयन्त्वस्य गृहस्याधिपतिर्विद्यते, अस्या आभापुर्या मम च भर्त्ताऽयंविराजते, ममश्वश्र्वा मन्त्रबलेनायंकुक्कुटत्वं प्रापितः, तद्वृत्तान्तं तु बहुविस्तृतमस्ति । भवदग्रे कियत्कथयामि ! पूर्वजन्मनि मयाऽशुभंकर्म समाचरितं, तत्फलमिदानींलब्धमेतत् । मुनीन्द्र ! अतोऽहंपञ्जरस्थमिमंरक्षामि, प्रभो ! सामान्यमिमंताम्रचूडंमन्यमानेन भवता मे सदुपदेशोदत्तस्तद्युक्तमेवत्वया विहितम्, किन्त्वयंचरणायुधस्तु मत्प्राणतोऽप्यधिकोऽस्ति । मुनिना भणितं–शोभने ! इदंत्वद्वृत्तान्तमजानता मया सामान्यपक्षिणंमत्वा

तुभ्यमेतत्समुपदिष्टम्। वीरमत्येदमनुचितंविहितम्। चन्द्रराजस्योपमानं न विद्यतेऽत्र भुवने, तस्येदृग्विधाऽवस्था सर्वथाऽसम्भावनीयैव, तथाऽप्यस्मिन्विषये त्वया रोषविषादौ विमुच्य धर्माराधनं कर्त्तव्यम्। रोदनं च न कर्त्तव्यम्। तवशीलप्रभावेण सर्वसमञ्जसंभविष्यति, कर्मणामग्रे कस्याऽपि बलं न स्फुरति, कर्मनरेशःसर्वान् वशीकरोति, कर्मणा यत्क्रियते तद्विघातुंकोऽपि न प्रभुः, उक्तञ्च—कर्माऽधीनं जगत्सर्वं, कर्मरेखा बलीयसी। कर्मतः सम्पदः सर्वा,–स्तस्मादेव विपत्तयः ॥ १ ॥ तस्माद्विषादं परित्यज्य विशेषतोनिजाऽभीष्टसिद्धये धर्माराधनमेव कुरुष्व यतः—धर्मसिद्धौ ध्रुवासिद्धि–र्द्युम्नप्रद्युम्नयोरपि। दुग्धोपलम्भे सुलभा, संपत्तिर्दधिसर्पिषोः ॥ १ ॥

धर्मरागिणि ! मदीयोऽयमुपदेशस्त्वया सदैव हृदयगेहे संरक्षणीय इतितांकथयित्वा मुनिरन्यत्र विजहार। ततोगुणावली-मुनिराजवचनानि स्मरन्ती विशेषतोधर्माराधनंविदधाति, ताम्रचूडञ्च भक्तिपूर्वकंरक्षति, निजाऽज्ञानविहितमकृत्यंस्मृत्वा कदाचिदश्रुप्लावितंनयनयुगलंकरोति, अथकुक्कुटीभूतश्चन्द्रराजःप्रभातसमयंसूचयन्विरौति, तदा गुणावली निद्रांजहाति, कुक्कुट-शब्दानुचरन्तंनिजभर्त्तारंविलोक्य सा नेत्राम्बुभिर्वक्षस्थलंमौक्तिकहारविराजितमिवाऽकार्षीत्। स्वयंरुद्धस्वरा भणतिच–स्वामिन्! इमंविपरीतंशब्दंकुर्वतस्तवचेतसि किंविषादो न जायते ? त्वदीयंशब्दंश्रुण्वत्या मे हृदयंवज्राहतमिव द्विधा विदीर्यते, किमधिकं-स्मरामि तव चेष्टनम् ?। हे नाथ ! लोकाधिपते ! प्रभाते, श्रुत्वा ध्वनिं कौक्कुटमन्वहं प्राग्। विनिद्रितोऽभूस्त्वधुना विरावै-स्त्वमेव तैर्बोधयसि प्रजागणान् ॥ १ ॥ इदंसर्वमनर्हत्वंदुर्दैवेनसंपादितंप्रत्यक्षीकृतंमन्दभाग्यया मया, रेदुर्दैव ! निरपराधोऽयंत्वयामुधा कदर्थितः, धिगस्तु तव साहसमसमञ्जसकारिणः। रेदैव ! मत्पतिरधर्मपरः कदाचि–न्नाभूदहञ्च तव नाकरवं व्यलीकम्।

दुःखं तथाऽपि ददतेदृशमुत्कटं मे, भिन्नं कुतो न पविना सरुषा त्वया कम् ॥ १ ॥ हे प्राणपते ! भवतोच्चारितान् शब्दानाकर्ण्य भवद्धिमाता तु भृशंप्रमुदिताऽभविष्यत् । यतः—विरुद्धपक्षस्थितमानवानाः—मनिष्टताऽऽलोकनतोहि तृप्तिः । उलूकजातिर्निशि मोदते यथा, तथा न तिग्मांशुकरोज्ज्वले दिने ॥१॥ तानेव मर्मोच्छेदकान् शब्दान् शृण्वत्या मम हृदयंशतधा विशीर्यते। नाऽन्यदिह मे शरणंविद्यते. यतः—भर्त्रैव नार्याः प्रभुरस्ति लोके, तत्सेवनातः खलु सर्वसिद्धिः । भर्त्रा समं नो शरणं प्रदिष्टं, स्त्रीणां सदा शीलसमृद्धिभाजाम् ॥ १ ॥ अतोभर्त्तृसुखेनैव शीलवतीनां सुखं तद्दुःखेन दुःखमेव—यतः—दुःखं भजत्यनुदिनं स्वपतौ कुलीने, स्वप्नेऽपि सौख्यमबला मनुते न साध्वी। छत्रं विहाय खलुतापहरं विशालं, कोऽन्यो दधाति शकटीमनलप्रदीप्ताम् ॥१॥

स्वामिन्नतस्तादृगुच्चारं मा कुरु, तथाविधंशब्दंश्रुत्वा मे मानसंभृशंव्यथते, इतिगुणावलीवचनानि निशम्य तदभिप्रायंस्वयं विदन्नपि तिर्यक्त्वात्तदुत्तरंदातुमशक्तश्चेतसि विषण्णोभवति, अथैकदा पञ्जरस्थंकुक्कुटंसमादाय गुणावली निजप्रासादवातायने समुपविश्य समयमतिचक्राम, तदानीं तदधोभागे गमनागमनंकुर्वन्तोनागरिकास्ताम्रचूडेन निरीक्षितास्तेऽपि तंविलोकयामासुस्ततस्तेपरस्परंवार्त्तालापंकुर्वन्तिस्म, तज्जनताप्रवादंशृण्वानस्ताम्रचूडोगुणावलींलक्ष्यीकृत्य लोचनपुटयोरश्रूणिनिभर्त्तिस्म, ततोगुणावल्यपि नेत्रयोर्नभः प्रौष्ठपदौ दधार, लोकाश्च मिथोवदन्ति—अहो ? अस्माकमधिष्ठाता चन्द्रराजश्चिरात्कथं न दृश्यते ? औषधिनाथहीना यामिनीव विगतचन्द्रराजेयंनगरी नागरिकाणांनयनानन्दं न जनयति, ततोऽन्यः कश्चित्तत्वणंविमृश्य तत्सन्निधौ स्थितःकर्णजाहंजपति, बन्धो ! किं न जानासि ! विदितमन्त्रया तद्विमात्रा वीरमत्या चन्द्रराजस्ताम्रचूडत्वंप्रापितस्तस्मान्नैतादृशमस्माकंभाग्यं येनचन्द्रराजंवयंविलोकयामः, अहो ! वीरमत्या दुश्चरित्रंविलोक्यताम् ! निजसूनुमपीदृशीमवस्थां

या नीतवती, इत्यनेकधा वीरमतींनिन्दन्तः पौरगणाश्चन्द्रराजंस्तुवन्तिस्म, क्रमेणैषावार्त्तापरम्परया सर्वत्र प्रसिद्धिंप्रायासीत् । यतोग्राममुखे गलनकं न निबध्यते, यतः—

वार्त्ता हि कौतुककरी विदिता जनौघै–र्नो तिष्ठति क्षणमपि प्रबलैः सुगुप्ता ।
तैलस्य बिन्दुरचलो जलमध्यसंस्थः, संजायते किमु कदाचिदनन्यसङ्गः ॥ १ ॥

इत्यनेकरूपांजनोक्तिंनिशम्य चन्द्रराजोभृशंनिर्विण्णोऽजनि, तदानींराजपथमवतीर्णा राजलोका उच्चैर्मुखा राजप्रासादमभिलक्षितवन्तः । तत्रगवाक्षस्थितांसुवर्णपञ्जरकलितोत्सङ्गांगुणावलींपञ्जरस्थितंकुक्कुटश्च निरीक्ष्यायमेवचन्द्रराज इतिनिश्चितमतयस्ते बद्धाञ्जलयःप्रणामंचक्रुः, ततोविदितवद्वृत्तान्ता वीरमती तत्रसमागत्यरोपारुणलोचना ससंभ्रमंतामचीकथत्, अज्ञातसारे ? यद्यस्य जीवितमिच्छसि चेदितःप्रभृति पञ्जरंगृहीत्वा त्वया गवाक्षप्रदेशे नोपवेष्टव्यम् । मुग्धे ? किं न जानासि ? ईदृशी गुप्तवार्त्ता यत्नेन गोपनीया, गुप्तप्रकाशनेन शुभंफलंनाशायते ? अतोनिजगुडोनिजेनैव प्रच्छन्नतया भक्षणीयः । अन्यंविज्ञाते तस्मिन्दुरन्तपरिणामोजायते, तावकीनस्त्वयमेकोऽपराधोमया सोढः, पुनरपरमविनयं न सहिष्ये. मादृशी क्रूरस्वभावा काचिदन्या नास्ति, मद्विरुद्धप्रवृत्त्या त्वन्मनोरथो न सेत्स्यति, प्रज्वलिते दावानले तच्छान्त्यर्थंगण्डूषजलानि कियत्कार्यंसाधयन्ति ? सिद्धविद्याया ममान्तिके त्वदीयंवैदग्ध्यंकियन्मात्रम् ? यतः—

यः सिद्धदेववनिताऽनुमतो नु लोके, विभ्राजते विविधभूतिभृतो वरेण्यः ।
नैतादृशीं स्थितिमखण्डधियो लभन्ते, पाण्डोः सुता हि पदमिच्छिकमाभजन्किम् ॥ १ ॥

तत्राऽयंवल्लभस्तर्हि विविधाऽलङ्कारैस्तंविभूषय, तेनैव सार्द्धंक्रीडस्व, स्वादुतरपक्वान्नैस्तं भोजय, एतत्त्वया नविस्मरणीयम्, यत्कदाचिदपि तंसमादाय गवाक्षे न स्थातव्यम्। चन्द्रराजः कुक्कुटत्वंप्राप्त इति कस्याप्यग्रे त्वया न प्रकाशनीयम्। पौरजना इमं न पश्येयुस्तथा त्वया विधातव्यम्। एवंतामुपदिश्य तस्यांनिवृत्तायांतद्वचनंप्रमाणयन्ती गुणावली पञ्जरकरा तस्माद्गवाक्षात्सत्त्वरमुत्थाय प्रासादान्तर्जगाम।

यतः—विपश्चितां सदुपदेशः, प्रसरत्यञ्जसा हृदि। अश्मखण्डसमान्मूढा–न्न स्पृशत्युपदेशनम्॥ १॥

इतिश्रीचन्द्रराजचरित्रे तृतीयोल्लासे द्वितीयः सर्गः॥ २॥

ततोऽनुदिनं सा स्वकारितैर्नूतनैरलङ्कारैस्तंविभूषयामास, किंबहुना? प्रतिवासरंतस्यैव परिचर्यापरायणा सा समयंव्यनैषीत्। विश्वस्मिल्लोके सर्वेऽप्याशातन्त्रीनिबद्धा जीवनंवहन्ति, आशाधीनमिदंजगच्चक्रंपरिवर्त्तते दुःखिनामप्याशयैव दिनानि व्रजन्ति, गुणावल्यपि निजवासरानाशाबन्धनेनाऽतिक्रामति, स्वयंच जानाति तदेतादृशंसुदिनंसमेष्यति, यस्मिन्दिने इमंमनुष्यरूपंविलोकयिष्यामि, एवमाशातन्तुनिबद्धा सा दिवसानत्यवाहयत्। आशारज्जुनियन्त्रितंजगदेतदखिलम्—तद्यथा—आशानाम मनुष्याणां, काचिदाश्चर्यशृङ्खला। यया बद्धाः प्रधावन्ति, मुक्तास्तिष्ठन्ति पङ्गुवत्॥ १॥ तथाच—गिरिर्महान् गिरेरब्धि–र्महानब्धेर्नभो महत्। नभसोऽपि महद्ब्रह्म, ततोप्याशा गरीयसी॥ २॥ आशैव राक्षसी पुंसा–माशैव विषमञ्जरी। आशैव जीर्णमदिरा, तथाऽप्याशा बलीयसी॥ ३॥ तथैव—आशावलम्बोपचिता न कस्य, तृष्णा लता कस्य फलं न सूते। दिने दिने लब्धरुचिर्विवस्वा–न्मीनं च मेषञ्च वृषञ्च भुङ्क्ते॥ ४॥ आशाऽऽरामोजगत्यसुरक्ष्योऽलब्धार्थमालाकारैस्तद्यथा—आशा-

नामनदी मनोरथजला, तृष्णातरङ्गाकुला, रागग्राहवती वितर्कविहगा, धैर्यद्रुमध्वंसिनी । मोहावर्त्तसुदुस्तराऽतिगहना, प्रोत्तुङ्ग-चिन्तातटी, तस्याः पारगता विशुद्धमनसानन्दन्ति योगीश्वराः ॥ १ ॥ एवमाशावशीभूता समयंयापयन्ती वीरमत्याज्ञाञ्च पालयन्ती सा सम्यक्धर्माराधनं करोति, यतः—धर्मं प्रसङ्गादपि नाचरन्ति, पापं प्रयत्नेन समाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥ १ ॥

तथाच—धर्मे तत्परता मुखे मधुरता दाने समुत्साहिता, मित्रेऽवञ्चकता गुरौ विनयिता चित्तेऽतिगम्भीरता ।
आचारे शुचिता गुणे रसिकता शास्त्रेऽतिविज्ञानिता, रूपे सुन्दरता हरौ भजनिता सत्स्वेव सन्दृश्यते ॥ २ ॥
धर्मार्थकाममोक्षेषु, वैचक्षण्यं कलासु च । करोति कीर्त्तिं प्रीतिञ्च, साधुकाव्यनिषेवणम् ॥ ३ ॥

कदाचिद्वीरमत्या साकं तदाज्ञाऽनुसारिणी सा रसालतरुमारुह्य कौतुकान्वेषिणी देशान्तरंप्रयाति, तत्रानेकविधानि कौतुकानि सा विलोकयति, पञ्जरस्थंकुक्कुटमपि निजेन सहैव नयति, क्षणमपि तद्वियोगं न सहते, निजापत्यपोनिधितर्त्तुकामा सा जपोपवासादिकंसनियमंसमाचरति, यतः—

जपोपवासैर्दुरितानि नाशं, प्रयान्ति सद्धर्मसमाश्रितानाम् । सर्वज्ञसंकीर्त्तिततत्त्वबोध—स्तत्सेविनां सौख्यकरो हि लोके ॥ १ ॥

इतः परिणीतप्रेमलालक्ष्मीकश्चन्द्रराजःकिञ्चिन्निमित्तमुद्दिश्य विमलापुरीतोनिजराजधानीं यियासुर्विनिर्गतस्तमनुव्रजन्ती साऽपि प्रयाणंकर्त्तुंलग्ना । तदानींहिंसकनामा मन्त्री तदन्तिकमागत्य तां न्यवर्त्तयत् । पतिविरहमसहमानाऽपि श्वशुरालये प्रथमागमनेन लज्जांवहमाना सा निवृत्तगमना निजावासेऽतिष्ठत् । ततो मनस्येवश्चविज्ञातवती, मत्पतिःकारणान्तरमुद्दिश्यकाऽप्यन्यत्रगतः,

कियत्यपि समये व्यतीते निजवल्लभोनागतस्तदा निजचेतस्येवं सा व्यचिन्तयत्, कश्चिन्नरशिरोमणिरसौ नयनानन्दंमनोवि-
षादञ्च प्रदाय शैलूष इवादृश्योजातः। अहो ! अस्यांविशुद्धायांविमलापुर्यांषोडशकलाकलितश्चन्द्रःसमुदितोऽस्तञ्चप्रयातः,
तत्कृतसङ्केतो मया मूढधिया न विज्ञातः। एवंवितर्कयन्त्यास्तस्याःसन्निधौ हिंसकेन कनकध्वजःप्रेषितः, सोऽपि प्रमोदंदधानः
प्रेमलाया गुप्तावासे जग्मिवान्। दूरतःसमायन्तंपुरुषंविलोक्य निजपतिभ्रान्त्या सा सत्वरंविमुक्तासना तत्संमुखंसमागता,
स्वभर्त्तारमनवेक्षमाणा सा विलक्षमानसा तं पृच्छतिस्म, भोःकिन्नामाऽसि ? कुतःसमागतः ? अज्ञानतोऽत्रसमागतोदृश्यसे,
नेदंत्वदीयंनिकेतनम्, भ्रान्तिमापन्नोऽसि, तस्मादितःसत्वरंनिःसर, नाऽत्रत्वया स्थातव्यम्, इतिप्रेमलावचनमाकर्ण्य कनक-
ध्वजोऽवादीत्। सुदति ? नाहं भ्रान्तः, क्षणमात्रतस्तव किं विस्मृतिर्जाता ? अधुनैव परिणीतःस्वपतिस्त्वया नोपलक्षितः ?
इत्थमाचरन्त्यास्तव का गतिर्भविष्यति ? मनोहारिण्यामपि रूपसम्पत्तौ तव विज्ञानत्वं न दृश्यते, यतोगृहागतंभर्त्तारमपि नोप-
लक्षसीतिप्रजल्पन्स तदन्तिकेऽस्थात्। प्रेमलाऽपि विज्ञाततद्भावा पञ्चाननंगौरिव तं तर्जयामास,

यतः—कुसुमस्तबकस्येव, द्वे गती तु मनीषिणाम्। सर्वेषां मूर्ध्नि वा तिष्ठे-द्विशीर्येत वनेऽथवा ॥ १ ॥

शीलगुणसंपन्नानांसुसतीनांनिजपतेःसन्निधौ स्थितिःप्रशस्यते। उक्तञ्च—

सतीमपि ज्ञातिकुलैकसंश्रयां, जनोऽन्यथा भर्त्तृमतीं विशङ्कते। अतः समीपे परिणेतुरीष्यते, प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ॥१॥

अतः सुसतीनांवपुषोद्विधैव स्थितिःसंभवति, निजपतिस्तत् स्पृशति किंवा चिताग्निःस्पृशति, शीलवतीनामिदंविभूषणम्,
परपुरुषःस्वप्नेऽपि नावेक्षणीयःसतीभिः, पतिव्रतानां तृतीया गतिर्नैव विद्यते, इतिप्रजल्पन्तीं प्रेमलांप्रार्थयन् कनकध्वजोऽवोचत्—

मृगाङ्कमुखि ? मदन्तिकं समागच्छ, दूरस्थिता कथंवदसि ? सुखेन मया सार्द्धं हास्यविनोदं कुरुष्व, चिरं क्रीडाविलासेन नवयौवनं सफलय, मनोरमे ? चिन्ताचान्तमानसा मा भूः, असाधारणोऽयमावयोर्योगो दैवेन संपादितः, तस्य कृतार्थतां त्वं संपादय. इदं यौवनंचिरं न स्थास्यति.

यतः—आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री—रर्थाः सङ्कल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः ।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं, तस्माच्छीलं स्वकीयं सततमकलनं पालनीयं सतीभिः ॥ १ ॥

अतोनिरवद्यशीलमभीप्सन्त्या त्वया भर्तृसङ्गतिर्न हातव्या, भर्तृमत्याः पतिनिषेवणमिहाऽमुत्र सुखसमृद्धये जायते, प्रथममेव विमनस्कत्वंकथंद्योतयसि ? नावयोःसम्बन्धोऽनुचितः, त्वंसौराष्ट्राधिपतेर्दुहिताऽहञ्च सिंहलाधीशस्याङ्गजोऽस्मि, ईदृशो योगः प्राक्तनसुकृतेन लब्ध इतिवदन्स्वयमेव स सत्वरं समुत्थाय तस्याःकरंगृह्णाति तावत्सा परुषवचनैस्तंतर्जयित्वा भणतिस्म-रे दुरात्मन् ? मदङ्गं मा स्पृश, दूरतोयाहि, स्फुटितढक्कासमानस्त्वं दृश्यसे, मत्पाणिग्रहस्त्वया न विहितः, आजन्मजातकुष्ठोऽपि भवान् भूमिगृहे कथं रक्षितः ? भवादृशंपुत्रं प्रसूतवती त्वदीया जनन्यपि किं न लज्जिता ? इतस्तावच्छीघ्रं पलायस्व, मौक्तिकमालांधर्तुकामस्याऽपि तव वाञ्छितार्थलाभो न भविष्यति. मत्पल्यङ्कमारुह्य मद्भर्त्ता न भविष्यसि, सुवर्णकलशोपशोभिते महोन्नते देवमन्दिरशिखरे लब्धास्पदोबलिभुक् कदाचिदपि वैनतेयशोभां न लभते. रे मूर्खशिरोमणे ? दिव्यरूपांमामालिङ्गितुमुत्कण्ठितोऽसि, किन्तु प्राक्स्वमुखन्तु निभालय, मुधा कथमुत्सुकायसे ? एवं विवदमानयोस्तयोः कपिलाऽभिधा तस्य धात्री तत्र समागत्य वदतिस्म—चार्वङ्गि ? किमेवमसज्जनोचितंकरोषि ! निजस्वामिनः सान्निध्यंभजस्व, दूरस्थिता त्वं न शोभसे,

अयमेव तव भर्त्ताऽस्ति, अनेन नरशार्दूलेन सार्द्धं क्रीडस्व, मयि स्थितायामपि त्वया रतिसुखं सुखेन वोभुज्यताम्। निजपतेर्वचनं माऽवधीरय, पतिमन्तरा किमन्यः पतीयते ? एवं कपिलाया वचोनिशम्य प्रकटितकोपा प्रेमलाऽवादीत्—आकृत्या त्वं जरठा दृश्यसे, तव मुखमपि निर्दशनंजातम्, अतोऽविचार्य मा वद, ईदृशेन मुधाऽपवादेन स्वार्थसिद्धिर्न भविष्यति, यतः—

सत्येन तपते सूर्यः, सत्येन धार्यते धरा। सत्येन वायवो वान्ति, सर्वं सत्ये प्रतिष्ठितम् ॥ १ ॥

असत्यसमर्थने तव दत्तत्वंविद्यते, तथाऽप्यसत्प्रलापेन शीलवती स्वव्रतं न जहाति. इत्थंप्रेमलोक्तिमाकर्ण्य जातक्षोभा कपिला बहिरागत्य पूत्कारं कर्त्तुमारेभे, भो भो लोकाः ! धावत धावत, कुतोऽपि विद्यासिद्धंकञ्चिद्विपग्वरमाह्वयत, अस्मद्राजकुमारोनवोढायाराजकुमार्याः स्पर्शमात्रेण कुष्ठी जातः, एवमभिधाय साश्रुनयना वक्षस्थलंताडयन्ती सा रोदितुंलग्ना, तन्निशम्य संजातकरुणोगभस्तिमानपि तच्छद्मविलोकितुकाम इव पूर्वाचलशिखरमारूढः। ततः सभार्यः सिंहलेशो हिंसकेन सार्कं धावँस्तत्र समागतः। संजातविस्मया इव ते सर्वे हाहारवंचक्रुः, क्षणांलब्धावकाशा राज्ञी जगाद, पुत्र ! इदं तव देहस्य वैपरीत्यं कुतः सञ्जातम् ? नूनमियंविषकन्या ज्ञायते, तज्जनकेनापि भणितम्—कुमारेन्द्र ! सुकृतभाजस्तव सौन्दर्यदिदृक्षवोजनौघा देशान्तरात्समाजग्मुः, तादृशंतव रूपं क्वगतम्, इयंराजकुमारी पूर्वभववैरिणी तव सञ्जाता, अस्मिन्भूलोके मादृशोऽधन्यः कोऽन्यः ? अभाग्यवशादजानता मया दुष्टयाऽनया कुमार्या त्वंपरिणायितः, अधुना किंकरोमि ? क्वगच्छामि ? हा ? दैवेन वञ्चितोऽस्मि, इत्थंकूटवार्त्तांनिशम्य प्रेमलातु मौनीभावमापन्ना व्यचिन्तयत्। इदानींधैर्यमन्तरा मे किमपि शरणं नास्ति, अशक्तानांमौनमेव वरं—यतः कूटकारिण इमे सत्यमपि मदीयंवचनं न श्रोष्यन्ति.

१६

उक्तञ्च—वैपरीत्यं गते दैवे, बहूनामपि क्रोशताम् । वल्लभा नैव जायन्ते, नीतिमार्गानुवेदिनः ॥ १ ॥

क्षणमात्रतस्तेषामार्त्तध्वनिः परितः प्रासीसरत् । तद्वार्त्तांश्रुत्वा प्रेमलायाःपिता निर्वेदमापन्नस्तत्र समागमत् । जामातरञ्च कुष्ठिनंविलोक्य स्वयंनिर्विण्णो रुदतः सर्वान्सान्त्वयन् व्यलपत्, रे दैव ! आकस्मिकमिदंकिंजातम् ? प्रमोदाऽवसरे विषादोमया लब्धः, एवंविचिन्तयता नृपेणैतेषांकूटवृत्तिर्नज्ञाता, ततोहिंसकोऽब्रवीत्,–राजन् ! किमत्र वदामि ? यदत्र सञ्जातं तन्निवेदयितुं मे जिह्वा न प्रचलति, देशान्तरस्थायिनामस्माकं वार्त्ताकःसत्यापयिष्यति ? तथाऽप्यहं वच्मि, रूपेण निर्जितमकरकेतुरयं कुमारोनिशि भवताऽपि विलोकितः, दिव्यरूपोऽयंसर्वजनश्लाघनीयोऽभूत् । इदानीमस्माकं महदभाग्यंप्रादुर्भूतम्, यतोऽस्माभिरत्राऽयंसमानीतः, नृपते ! तव पुत्रीस्पर्शेनायंकुमारः सहसा कुष्ठी जातः, इयंभवतः सुता चिन्तामणिसमाना निजसद्मनि रक्षणीया, संप्रति कृपांविधायेमां निजालयं नयत, यूयमेवानया भाग्यवन्तोभवत, नास्माकं प्रयोजनम् । सर्वसमक्षमस्माभिर्निवेद्यते, अस्माकमहितकारिणीयंविषकन्या प्रत्यक्षा दृश्यते, ततोऽनया कृतमस्माकम्, इदं मन्त्रिगदितं सत्यं मन्यमानो मकरध्वजनरेन्द्रो निजपुत्र्यै भृशं चुकोप, सर्वैर्वार्यमाणोऽपि स कोपाध्मातस्तांमारयितुमधावत् । अहो ? राजानःश्रोत्रविहीना भवन्ति, केषामपि वल्लभास्ते न भवन्ति, यतः—

काके शौचं मद्यपे तत्त्वचिन्ता, क्लीबे धैर्यं स्त्रीषु कामोपशान्तिः । सर्पे क्षान्तिर्द्यूतकारे च सत्यं, राजा मित्रं केन दृष्टं श्रुतं वा ॥१॥

ततः प्रकुपितंराजानंविज्ञाय कनकध्वजः समुत्थाय तत्करंगृहीत्वाऽवोचत्–भूपते ! कोपं संहर, अस्मिन्कार्ये कस्यापि दोषो नाऽस्ति, मदीयदुष्कर्मणामुदयोऽयमजनि, तस्मात् क्रोधं मा कुरु, स्त्रीहननं महते पातकाय जायते ।

यतः—स्त्रीबालस्वामिमित्रघ्नो–गोघ्नो विश्वासघातकः । सुरापो ब्रह्महा चौरो–यान्त्येते सर्वनारकान् ॥ १ ॥

अतः स्त्रीघाताद्विरमेतिप्रार्थयन् स मकरध्वजंसान्त्वयामास, ततःशान्तकोपः स कनध्वजमवोचत्–कुमारेन्द्र ! त्वदीयवचनेनास्यै जीवितदानंददामि । अन्यथेमांदुहितरमपि भस्मशेषांकरोमीत्यभिधाय मकरध्वजोनिजावासमभ्येत्य सुबुद्धिनामानं निजमन्त्रिणंसमाकार्य सकलंवृत्तान्तंन्यवेदयत् । पुनश्च तेन प्रोक्तं मन्त्रिन् ! चिर्भटीतोविषज्वालेयंसमुत्पन्ना, यदियंपुत्री विषकन्या जाता, यस्याः स्पर्शमात्रेण कनकध्वजः कुष्ठी जातः, ईदृशी दुर्भगा कन्याऽस्मत्कुले कुतःसमुत्पन्ना ! बुद्धिनिधानः सुबुद्धिः सकलवार्त्तांनिशम्य प्राह–नृपते ! संभ्रान्तचेताः कथं जातोसि ! तं वरं प्रागहंव्यलोकयम्, जन्मतः स कुष्ठीति निःसंशयंजानीहि, इदानीमेवायमुपद्रवोजात इति कथं मन्यते ! तस्यशरीरन्तु भृशंदुर्गन्धमयंदृश्यते, तत्किमेकस्यां रजन्यां तादृशंजातम् ! अतस्तेषामयंकूटव्यवहारो ज्ञायते, भवतांपुत्री सर्वथा निर्दोषा वर्त्तते, एवंबहुधा बोधितोऽपि नृपतिर्नोपशान्तस्तदा तेन पुनर्भणितं–राजन् ! यद्भवते रोचते तद्विधीयतां, ते नकुलघातकब्राह्मणीवत् पश्चात्तापस्तु भविष्यति, इतः खिन्नभावा प्रेमलालक्ष्मीर्निजमातुरन्तिकमभिययौ, दौर्भाग्ययोगात्तन्माताऽपि तां विषकन्यामिति विज्ञाय दृष्ट्याऽपि न समभावयत् । सत्कारस्तु कुतो भवेत् ! । अथाऽतिक्रुद्धोमकरध्वजोनिजपुरुषैश्चाण्डालमाकारयत् । क्रोधान्धोमतिमानपि कार्याकार्यं न जानाति, क्रोधशत्रुः सर्वविनाशकोभवति–

यतः—क्रोधो हि शत्रुः प्रथमो नराणां, देहस्थितो देहविनाशनाय । यथास्थितः काष्ठगतो हि वन्हिः, स एव वन्हिर्दहते शरीरम् ॥१॥

तथाच—क्रोधो मूलमनर्थानां, क्रोधः संसारबन्धनम् । धर्मक्षयकरः क्रोध–स्तस्मात्क्रोधं विवर्जयेत् ॥ २ ॥

क्रोधेन बुद्धिश्चलति, निर्बुद्धेरशुभोदयः । अनायतेः कुतः सौख्यं, पश्चात्तापन्तु विन्दते ॥ ३ ॥

चाण्डालोराजानंप्रणम्य तन्निदेशमिच्छन्विहिताञ्जलिस्तस्थिवान् । राज्ञा स जगदे–वधार्हेयंमत्पुत्री वध्यस्थानंनीत्वा त्वया हन्यताम्, विलम्बं मा कुरु, ततस्तांसमादाय चाण्डालश्चलितस्तदानींसदोगृहंसंस्थिताः केऽपि तंनिवारयितुं न शेकुः । मन्त्रिणा पुनरपि भणितं–राजन् ? नियतिर्दुर्विलङ्घनीया, तथाऽपि भवद्भिचेष्टितंसाहसिकंमन्ये, अनेन कर्मणा पूर्वोपार्जितां कीर्त्तिमलीनयसी-तिबहुधाविज्ञापितोऽपि नरेशोनिजाऽभिप्रायंनामुञ्चत्। चाण्डालोऽपि राजकुमारीं पुरतोविधाय विपण्यांसमागतस्तदा विदिततद्वृत्तान्ताः पौरजनाः सम्भूय चाण्डालंनिवृत्य राजसुतांसमादाय नृपान्तिकमभिययुः, सविनयं प्रोचुश्च–नरपते ?॥ अविमृष्य कृतं कर्म, पश्चात्तापाय केवलम्। न न्यायवेदिनांयुक्तं, निजाऽपत्यविहिंसनम्॥१॥ जामाता कुष्ठी जातस्तत्र कुमार्याःको दोषः ? स्वकृतंसुखदुःखं स्वेनैव भुज्यतेऽन्यस्तु निमित्तमात्रः, यतः–येनैव यादृशं लोके, कृतं कर्म शुभाऽशुभम्। फलमेतादृशं भुङ्क्ते, सोऽवश्यं तद्वशं गतः॥१॥

अतःप्रसादंविधाय कुमार्यै जीवितदानंदेहि, निरागसंतां मा कदर्थय, विहितापराधमपि निजापत्यंपालनीयम् । निजबालिकायांप्राणान्तशिक्षा न घटते, वैदेशिकानां यद्वचनंत्वया सत्यापितं तद्रुचिरं न कृतम् । यतो वैदेशिका बहवोधूर्त्ताःपरिभ्रमन्ति, इत्थंमहाजनैर्विबोधितोऽपि क्रोधभुजङ्गमसन्दष्टोनरेन्द्रोनिजाग्रहान्नोपरराम, ततो निजापमानेन व्रीडांदधानाः सर्वे जना यथागतंजग्मुः । नृपेण स मातङ्गोऽभिहितः, कथंत्वं विलम्बंकुरुषे ? मदाज्ञया झटित्येतांवध्यभूमिं नय, विषकन्यामेनांसत्वरंजहि. ततःप्रमाणीकृतनृपाज्ञोमातङ्गः प्रेमलांवध्यस्थानमनैषीत्। पौरजना विच्छायवदनास्तद्दुःखेन दुःखिताःसर्वत्र हाहारवंचक्रुः, निर्दयत्वंप्रकटयन्मातङ्गोनिःकोशंनिस्त्रिंशमुद्गृह्य तां भणतिस्म–बाले ? निजेष्टदेवतां स्मर, यतो निष्कृपोऽहमिदानींराजाज्ञामनुरुन्धानः स्वजातिकार्यंसाधयामि, राजकन्ये ? नीचकुलोत्पन्नं मां धिगस्तु, येनाहंस्त्रीवधे समुद्यतोऽस्मि, पराधीनवृत्तयः कार्याऽ-

कार्यं न गणयन्ति. विशिष्टजनगर्हणीयमिदमकृत्यंविदन्नप्यहंनिरुपायः किं करोमि ! यतः—

कृत्याऽकृत्यं बुद्धिमन्तो विदन्ति, हेयाऽहेयं सज्जना जानते वै ।
साध्याऽसाध्यं तर्कयन्ते विधिज्ञा-विद्वांसं तद्धिक् पराधीनवृत्तिम् ॥ १ ॥

वयन्तु केवलंनृपाज्ञाऽनुकारिणः पूर्वोपार्जितदुष्कृतैर्नीचकुले जाताःस्मः, तेन पापकर्मणि प्रवृत्तिं कुर्मः, यतः—पूर्वार्जिता हि या विद्या, पूर्वार्जितञ्च यद्धनम् । पूर्वार्जितं च यत्कर्म, लभते तज्जनोऽवशः ॥ १ ॥ अस्मिञ्जन्मनीदृशंपापकर्मोपार्ज्य परत्र कांदुर्गतिंप्राप्स्यामीति नजानामि, उदरनिमित्तमस्माभिरीदृशानि पापकर्माणि विधीयन्ते,

यतः—अभिमतमहामानग्रन्थिप्रभेदपटीयसी, गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीवितानकुठारिका, दुष्पूरेयं जठरपिठरी करोति विडम्बनम् ॥ १ ॥

तथाच—हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं, व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां, यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥२॥

अन्यच्च—मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा, धृष्टः पार्श्वे वसति च सदा दूरतस्त्वप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाऽभिजातः, सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ३ ॥

हे स्वसः ! इदानींनिजधर्मंशरणीकुरु, इतिमातङ्गवचनमाकर्ण्य निजतेजसा तमस्तर्जयन्तींखड्गलतांनिरीक्षमाणा प्रेमला निर्भयमना अट्टहासंविधाय स्वकर्मणामेव दोषंविवेद, मातङ्गञ्च प्रोक्तवती-रे परप्राणापहारिन् ! त्वदीयराजनिदेशंसम्पादय, वि-

लम्बेन किंफलम् ? । पराधीनवृत्तौ त्वयि न मे सुखदुःखम्, " येन केन प्रकारेण स्वकार्यंसाधयेत् पुमान्, " इत्थंप्रेमलाया धैर्यंसमालोक्य विस्मितोमातङ्गस्तां पुनरुवाच–राजसुते ? विषादस्थाने तव हास्यकारणंब्रूहि, सा जगौ–मातङ्ग! तद्वृत्तान्तमिह कथयितुमसाम्प्रतम्, नरेन्द्रःस्वयंपृच्छति चेत्सविस्तरंसर्वंकथयामि, मत्पिता पूर्वं मां नोपृष्टवान्, मदुक्तिश्च तेन न श्रुता, वैदेशिकवचसा स्वयंविमूढोजातः, तदविचारितमिदं मे हृदि शल्यायते. तदुद्धरणे न जानाम्युपायम् । अधुना स स्वस्थचेताः मद्वार्त्तांशृणोति तदा सत्याऽसत्यंजानाति, मातङ्गः प्रेमलावचनंसत्यंमेने, ततस्तामन्यत्र रहसि स्थापयित्वा स सुबुद्धिमन्त्रिसमीपंजगाम, कृतप्रणामःस प्रोवाच, हे मन्त्रीश्वर ? राजसुताऽस्मत्स्वामिने किञ्चिन्निवेदयितुमिच्छति, तद्वार्त्तांभूपान्तिकंगत्वा निवेदय, प्रेमलालक्ष्मीर्विषकन्या नास्तीतिसत्यंविद्धि, तन्निर्णयोमया सूक्ष्मेक्षिकया विहितः, तस्मादविमृश्यकारिणंनृपंनिवारय. वैदेशिकानांवचसि योविश्वसिति स पश्चात्तापमवाप्नोति । मन्त्री तत्कालंततःसमुत्थाय नृपान्तिकंगत्वा तस्याऽविमृश्यकारित्वंसंलक्ष्य प्राह–नरेन्द्रचूडामणे ? प्रत्यक्षीकृताऽपिवार्त्ता बहुधाऽसत्यमूलानिष्पद्यते, तर्हिश्रुतमात्रमिदंवृत्तान्तंकथंसत्यंमन्यते ? अतःसम्यग्निश्चयंविधायैवभवता यद्योग्यं तद्विधेयम्, अन्यथाऽरिमर्दनवदतीवपश्चात्तापमवाप्स्यसि, नृपतिःपृच्छति स्म–कोऽयमरिमर्दनः, ? कथश्चानुशयी बभूव ? तत्सम्बन्धंमेकथय, मन्त्रीजगाद–विजितत्रिदशपतिपुरविभवा, महोन्नतमहर्द्धिकजनसमाश्रिता, सुरैरप्यगम्यांविविधांविभूतिमाबिभ्रत्यैरावतीनाम नगरीसमभूत्, ताञ्चाखण्डितविक्रमस्तेजसा विभावसुमनुकुर्वन्, यशोवितानेन तुलितशीतरश्मिर्ललितलक्षणैर्लक्षितविग्रहोविगतव्यसनःसद्गुणैःसनाथीकृतःसन्न्यायगेहसमासीनोऽरिमर्दननामाभूपतिःप्रशास्ति, सतीमतल्लिका निर्जितरतिरूपा दक्षस्वभावा कुसुमश्रीस्तस्यमहिषीविभाति, सर्वकार्येषु दक्षदृष्टिर्न्या-

यनिपुणश्चन्द्रसेननामा तस्य सचिवःसमस्ति, अथासौनृपतिःस्वोपार्जितपुण्यबलेन भोगसुखंभुञ्जानोराज्यंपालयति, अन्यदा संपन्न-
मनोरथःस सुरभिकुसुमपरिकरितंशयनंनिषेवितुमीहमानोनिजकर्मदक्षमेकंमालाकारंसमाहूय समादिशत्–सर्वर्त्तुसंभवैर्विचित्रैः सुरभि
सुमैर्मदर्हांशय्यामाशु विरचय। प्राप्तराजनिदेशःसोऽपि भूपतिंप्रणम्य झटिति रम्याणि पुष्पाणि सर्वतःसमानीय राजप्रासादंसम-
भ्येत्य दिव्यकुसुमैरिव तैःशय्यांरचयति, तावद्दिवानाथोऽस्ताचलमगमत्, सायंकालादनन्तरंनृपाणांशयनभवनेऽन्यपुरुषा न
तिष्ठन्तीति राजनीतिमनुस्मरन्मालाकारोवहुसाधिते तत्कार्ये स्वभार्यांनियुज्य द्रुतंनृपभवनान्निर्गत्य निजनिकेतनंययौ, रमणीय
रूपवैभवा निजकर्मविशारदा साऽपि तामपूर्णांशय्यांक्षणात्पूर्णीकृत्य मनोहारिण्यांतस्यामनुरक्तचेताःस्वचेतसि दध्यौ, इदानीं-
निर्जनस्थानमिदंविद्यते, शयनं च पुष्पप्रसाधितमेतादृशंपुनःक्वमे मिलिष्यति? यावत्कश्चिन्नायाति तावदहंशयनसुखनुभवामीतिवि-
चिन्त्य सा सत्वरंपुष्पशय्यायामस्वपत्, सुकोमलशयनसुखमनुभवन्तीसा शीतमन्दसुगन्धवातेन संवाह्यमाना क्षणात्सुखनिद्रा-
मवाप। इतो भूपतिःसान्ध्यंविधिसमाप्य शयनावसरञ्च विज्ञाय पार्श्वानुचरैःप्रदर्शितमार्गःशयनमन्दिरमियाय, द्वारमुद्घाट्य याव-
दन्तःप्रविश्य शय्यांविलोकयति तावत्तेन भूभृता प्रमदाऽधिष्ठितंकौसुमंशयनंविलोकितम्। चिन्तितञ्च तेन केनाऽपिकारणेनाऽद्य
महिषी मय्यनागतेऽपि प्रसुप्ताऽस्ति, सुखेन निद्रातु, इतिविज्ञाय सोऽपि तामनाबोध्य तस्यामेव शय्यायामस्वपत्। मुहूर्त्तादनु शयन-
सुखलालसा राज्ञ्यपि तत्र समागता, ततःपरप्रमदासंगतंनृपतिंनिरीक्ष्य कलुषितमानसा सा द्रुतंवहिरागत्य व्यचिन्तयत्–यद्यह-
मिदानीमेतमुद्बोधयिष्यामि तदाऽस्य जारत्वं न कोऽपि मंस्यते, स्वयञ्च मांदूषयिष्यति, अतःकोऽप्यस्मिन्विषये मया प्रतिभूर्वि-
धेयः। इत्थंविनिश्चित्य सत्वरपादसञ्चारा सा सन्निधिस्थिते हर्म्ये वसन्तं निजसचिवंवाढमुद्घोषणेन विनिद्रंविधाय पुनःसचिव-

समेता सा शयनभवनमभीयाय, सचिवोऽभाषिष्ट—स्वामिनि ! निशीथिन्यामहमेकाकी भवत्याःशयनस्थानंनागमिष्यामि, यत्कार्यंतन्निवेदय, बहिःस्थित एव सर्वंकरिष्यामि, निजभर्तुर्दुश्चरितंदर्शयितुकामा राज्ञी जगाद—मन्त्रिन् ! तुष्णींभूय सत्वरमभ्यन्तरमेहि, किमपि दृष्ट्या विलोकनीयमस्ति, तन्निरीक्ष्य सुखेन त्वंस्वस्थानंव्रज, अभ्यन्तरागमनेन तव का क्षतिः ? इति-राजपत्न्या मुहुरभिहितोऽपि स निजाग्रहंनाऽमुञ्चत्तदा सा तत्सन्निधौसमागत्य बलाच्चतदीयंकरंसमाकृष्य शय्यान्तिकं तं समानेतुंव्याकुलयत्तावत्सचिवस्याऽधोवसनंभूमौ पपात, क्षणाद्दिगम्बरत्वमनुभवन्स विलक्षीभूय स्थितः । अत्रान्तरे तयोर्विवादंनिशम्य विगतनिद्रोभूपतिः शयनादुत्थाय तत्र समागतः, राज्ञीसचिवयोर्व्यतिकरंवीक्ष्य भूपेन साक्षेपंगदितम्—प्रमदाऽधमे ? किमिदमशिष्टजनोचितंकर्म त्वया समारब्धम् ? ततोराज्ञ्याऽभाणि—स्वामिन् ! पुरा स्वकर्म विलोकय, पश्चात्परोपदेशकुशलो भव, यतः—आत्मनो विल्वमात्राणि, पश्यन्नपि न पश्यसि । अणुमात्राणि चाऽन्येषां, वीक्षितुं तत्परो भवान् ॥ १ ॥

इतिनिजपत्नीमुखाद्विनिर्गतवाग्बाणेन समाविद्धोनृपतिर्निजशय्यांयावद्विलोकयति तावत्तत्रप्रसुप्तांमालाकारवनितांदृष्ट्वा विपणोलज्जितश्चबभूव, ततोऽन्योऽन्येषांवार्त्तानिवेदनेन सत्यार्थंविज्ञाय ते सर्वे परमंविस्मयंप्रापुः, विज्ञातश्च तैः—प्रत्यक्षतया विलोकितमपि कार्यंमुधाभवति तर्हिपरम्परया श्रुतस्य किमु वक्तव्यम् ! । राजन् ! अतः कोपदृष्टिंसंहर, कुमार्या मुखतोवृत्तान्तंश्रृणु, अविचार्यकृतंकर्म परिणामे दुःखजनकंभवति, विनष्टंकार्यंपुनर्न सिद्ध्यति, वैदेशिकेषु न विश्वसितव्यम् । इयंविपकन्या नास्ति, तथाऽपि तांजवनिकान्तरेस्थापयित्वा तन्मुखात्सर्ववृतान्तंश्रुत्वा यथोचितंविधातव्यम् । सहसा प्रवृत्तिःकदाऽपि न विधातव्या. यतः—सहसा यत्कृतं कर्म, जनयेद्विपदां गणम् । विचार्य यत्कृतं कार्यं, तच्चिरं सुखदायकम् ॥ १ ॥

तथाच—उचितमनुचितं वा कुर्वता कार्यजातं, परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-र्भवति हृदयदाही शल्यतुल्योविपाकः ॥

दुर्गुणखानिरपि भवतःसुतासर्वजनमान्याऽभिधीयते, सर्वथा सा रोषधिया न तर्जनीयेति मन्त्र्यनुरोधेन राज्ञा भणितं-सा मे दृष्टिपथंनावतरति तथा त्वया विधीयताम् । सचिवस्तद्वचनानुसारेण प्रेमलांतत्र समाहूय प्रसारितजवनिकान्तरे निवेशयामास । नृपतिर्दत्तकर्णस्तत्सन्निधौ तस्थिवान्, ततोमन्त्रिणा भणितं-कुमारिके ? सत्यवादिनां सर्वत्र विजयः । यतः—

कुर्वन्ति देवा अपि पक्षपातं, नरेश्वराः शासनमुद्वहन्ति । शान्ता भवन्ति ज्वलनादयो य-स्तत्सत्यवाचां फलमामनन्ति ॥ १ ॥

तथाच—तस्याऽग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किङ्कराः, कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ।
पातालं बिलमस्त्रमुत्पलदलं व्यालः शृगालो विषं, पीयूषं विषमं समश्च वचनं सत्याञ्चितं वक्ति यः ॥ २ ॥
विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं, मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् ।
श्रेयःसंवननं समृद्धिजननं सौजन्यसंजीवनं, कीर्त्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ ३ ॥

अतोऽवितथंवचो निवेद्य निश्चिन्ता भवेतिमन्त्रिमुखेन नृपाज्ञांलब्ध्वा सा भृशंमुमुदे,

इतिश्रीचन्द्रराजचरित्रे तृतीयोल्लासे तृतीयः सर्गः ॥ ३ ॥

ततःप्रेमलालक्ष्म्याऽभाणि-हे जनक ! पूज्यपादानामग्रेऽसत्यवादं न वदिष्यामि, किन्तु पितुःसन्निधौ वक्तुं सोद्यमांमांलज्जा निवारयति, तथापि त्रपांधारयन्त्या मे कार्यहानिःस्यात्तेन यथाजातंवृत्तान्तंशृणुत, तात ! मम करग्रहीताऽयंवरोनाऽस्ति, सत्वा-

भापुरीपतिश्चन्द्रराजोऽभवत्। अयं कुष्ठीतु तदग्रे तृणसमानोऽपिनविद्यते, मत्पतिर्वीरसेननरेश्वरस्याङ्गजत्वेन विख्यातोऽस्ति, मदीयंवचनंनिश्चितंविद्धि, यद्यसत्यंभवेत्तर्हि स्तेनवदहंदण्डनीयेति सत्यप्रतिज्ञांसर्वसमक्षंत्रिधा करोमि। अथ सुबुद्धिमन्त्रिणा भणितम्—राजसुते ! त्वया कथमिदंनिरधारि ? तत्सर्ववृत्तान्तंनृपस्याग्रेविशदीकुरु, सा प्राह—तात ? मदीये पाणिग्रहणमहोत्सवेनिर्वृत्तेऽहं मत्स्वामिना सार्द्धं शारिपाशैःक्रीडितुमुपविष्टा तदा तेन व्याख्यातमाभापतेश्चन्द्रराजस्यसद्मनि येपाशाःसन्तितांश्चयद्यत्र कश्चिदानयति तदा महानानन्दोमे भवेत्, तदीयमेतदसंवद्धंवचनंसमाकर्ण्य मया चिन्तितम्, किमयं जल्पति ? आभापुरी प्राच्यां समस्ति, अयन्तु पश्चिमातः समायातः, अनेन चिन्तनेन मे किंप्रयोजनम् ? कस्यचिन्मुखादनेन तत्प्रशंसा श्रुतपूर्वा भविष्यति, किंवाऽस्य मातुलगृहंतत्राभविष्यत्तस्मादयंतत्पाशान्स्मरति, ऋजुस्वभावाऽहंतद्रहस्यंनाज्ञासिषम्। मयाचैवंविज्ञातमितस्ततसहचारिणीजाताऽसि, ततस्तद्व्यक्तिरग्रेभविष्यति, ततोभोजनावसरे स भोक्तुमुपविष्टः, मोदकादिकंपक्वान्नं च परिवेषितं तदनु सुगन्धमयंशीतलंजलंमया प्रादायि, तन्निरीक्ष्य तेन भणितं—यदि जान्हवीतोयमासाद्यते तदा मे तृष्णा निवर्त्तते, तद्वचनमपि तद्भावमजानन्त्या मे विस्मयकरंजातं यतो देवापगा पूर्वाशां पावयति, अयन्तु प्रतीच्यांनिवसति, तत्स्मरणंकुतःकरोति ? सुरापगाया जलंविमलंशुद्धिकरंसर्वेषांसंमतमतस्तत्तोयमयंस्मरतीतिध्यात्वाऽनाकर्णितमिवमया तदप्युपेक्षितम्। ततस्तेन मांनिजस्थानंजिगमिषुणाऽऽभापुर्या वर्णनमकारिष्ट, तद्भेदोऽपि मया तदानीं नाज्ञायि। पितः ! तद्वचनमाधुर्यंपरभृतागिरमतिशेते, भवदग्रे किमधिकंब्रवीमि ? यद्वर्णनेवाचस्पतिरपि कर्त्तुमक्षमः। स तु मरालवत्सारासारविभेदे पटीयानस्ति, अयन्तु कुष्ठार्दितावयवःकुथितवायसवच्चेष्टांकरोति, अतोऽयं न मे भर्त्ता। हे तात ? मत्स्वामिनाभापतिना चन्द्रेणसाकंरहसिप्रमोदमनुभवन्तींमांविलोक्य

हिंसकनामा तदीयमन्त्री मत्सन्निधौ समागतः, तेन मत्पतेःकश्चित्करसञ्ज्ञया सङ्केतोदर्शितः, विदिततद्भावःस मां परिहर्तुकामः समुत्थाय चलितः, अहमपि स्वामिवियोगमसहमाना तत्पृष्ठमगाम्, तदानींदुष्टमतिना हिंसकेन निरुद्धाऽहं मौनवती जाता,

यतः—प्रथमतो गमनं श्वशुरालये, जनयते ह्रियमुन्नतिदायिनीम् ।

नवविलासजुषां हि सुखास्पदं, भवति मौनमखण्डितसिद्धिदम् ॥ १ ॥

ततोऽहंलज्जया भूतलंविलोकयन्ती तत्रैवाऽतिष्ठम्, चन्द्रराजस्तु पुनर्मया न दृष्टः । कञ्चित्कालंमया प्रतीक्षितोऽपि स पश्चान्नागतः, तदानीमयंकुष्ठी मया सह क्रीडांचिकीर्षुर्मत्समीपे समागतः । माञ्च प्रियवचनैःप्रमोदयितुंलग्नः । तदाकृतिगुणान्निरूपयित्वाऽहंदूरस्थिता तद्वचनं न मेने । अथेदंवृत्तान्तंज्ञात्वा सत्वरंमदन्तिकमागत्य तद्धात्री कूटकारिणी हा ! हतेतिपूत्कारंचकार, तच्छ्रुत्वा सहसोपगतस्तत्परिजनोनिजसङ्केतानुसारेणविषकन्येयमिति मामाचख्यौ । तात ! मदुक्तमिदंसर्वंसत्यमेवजानीहि नाऽत्र संशयोविधातव्यः । सिंहलाधिपतिना वञ्चितस्त्वंमुधा मां पीडयसि, जनक ! मदुक्तिर्यदिरोचतेतुभ्यंतर्हि स्वीक्रियतामन्यथा यथाऽनुकूलंविधीयताम् । निग्रहानुग्रहेसमर्थोसि, पितुःकृपया पुत्रीभाग्यवतीनिगद्यते, पुत्रीपुत्रयोर्महान्विभेदोदृश्यते “ दुहिताधेनुश्च यस्मै प्रदीयेते तमनुव्रजतः, ” इतिलौकिकन्यायमनुसरन्ती भवदाज्ञाऽनुसारेण प्रतिबद्धाऽस्मि

यतः—सत्यंपितुर्वचनमात्महितङ्करं या, जानातिसोच्चपदवींलभतेऽत्रपुत्री ।

देवाङ्गना अपि तदीयगुणान् स्मरन्ति, सत्यंसदाविजयतेसमतोत्कटानाम् ॥ १ ॥

पुत्रस्तु तथाविधंप्रतिबन्धंपालयितुं न प्रभवति, मयि क्रोधबुद्धिस्त्यज्यताम् । धूर्त्तानामेतेषांकूटवचनंत्वया न मन्तव्यम् ।

...कस्मिकमिमं प्राप्तं दुःखार्णवंतरितुमुपायं न जानामि, कस्यान्तिकेगत्वा न्यायमार्गंपृच्छामि ? येन भवतःकीर्त्तिवल्ली सर्वत्र प्रसरति, परिणामे पश्चात्तापश्च न स्यात्तथैव भवता विधातव्यम् । अतोधिकंकिंवदामि ? एवंनिगद्य तस्यांविरतायां सुबुद्धि नृपतिं प्रत्यवोचत्–स्वामिन् ? कुमार्या कथितंसर्वंसत्यंप्रतीयते, अनेन दुर्भगेन कुष्ठिनाऽस्मत्कुमारिका न परिणीता, यावत्तन्निर्णयोन स्यात्तावदियंकुमारी निजप्रासादे रक्षितव्या, आभापुर्यांतच्छुद्धये दूतः प्रेषितव्यः, तत्र चन्द्रराजोवसति ? तेन चेयं कन्या परिणीता नवेति ? शुद्धिविधाने सत्यस्वरूपंज्ञास्यते, धर्मप्रभावेण सर्वंसमञ्जसंभविष्यति, अधुना तन्निर्णयमकृत्वा पुत्री वधोऽनुचितः, यथापराधंदण्डप्रदानंप्रशस्यते, राज्ञा भणितं–मन्त्रिन् ? पुत्र्यावचनेन वैदेशिकानां प्रपञ्चोज्ञायते, तस्मादिदानी मसौ भवद्गृहे रक्षणीया, सूक्ष्मधिया निरीक्षणेन सत्यनिर्णयोभविष्यति, पश्चादुचितंकार्यंकरिष्यामः। नृपवचनंप्रमाणीकृत्य सुबुद्धिप्रेमलां निजावासमनैषीत् । अहो ? दैवरक्षितस्य विपदर्णवोगोष्पदायते,

उक्तञ्च–अरक्षितं तिष्ठति दैवरक्षितं, सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथोऽपि वने विसर्जितः, कृतप्रयत्नोऽपि गृहे विनश्यति ॥ १ ॥ प्राप्तव्यमर्थं लभते मनुष्यो–देवोऽपितं लङ्घयितुं न शक्तः । तस्मान्नशोचामि न विस्मयोमे, यदस्मदीयं नहि तत्परेषाम् ॥ २ ॥ ईशः करस्थीकृतकाञ्चनाद्रिः, कुबेरमित्रं रजताऽचलस्थः । तथाऽपि भिक्षाटनमेव जातं, विधौ शिरःस्थे कुटिले कुतः श्रीः ॥ ३ ॥ स्वयं महेशः श्वशुरो नगेशः, सखा धनेशस्तनयो गणेशः । तथाऽपि भिक्षाटनमेव शंभोर्बलीयसी केवलमीश्वरेच्छा ॥ ४ ॥ दाता बलिः प्रार्थयिता च विष्णु–र्दानं भुवो वाजिमखस्य कालः । नमोऽस्तु तस्मै भवितव्यतायै–यस्याः फलं बन्धनमेव जातम् ॥ ५ ॥

तथा च—भ्रमन्वनान्ते नवमञ्जरीषु, न षट्पदो गन्धफलीमजिघ्रत् । सा किं न रम्या ? स च किं न रन्ता ? बलीयसी केवलमीश्वरेच्छा ॥ ६ ॥ विधौ विरुद्धे न पयः पयोनिधौ, सुधौघसिन्धौ न सुधा सुधाकरे । न वाञ्छितं सिध्यति कल्पपादपे, न हेम हेमप्रभवे गिरावपि ॥ ७ ॥ विहितभोजनांराजपुत्रींविस्रंभयन्मन्त्री जगाद, नृपाङ्गजे ? निश्चिन्तमनसा त्वया धर्माराधनं विधेयं शुभकालः समासादितः, अचिरेण ते पतिदर्शनंभविष्यति, तुष्टमानसोऽधुना तव पिताऽपि सञ्जातः, अतः संप्रति काऽपि चिन्ता त्वया न विधातव्या, एवमाश्वासिता प्रेमला सचिवगृहे यथासुखंतिष्ठतिस्म. तथाहि—प्रातः समुत्थाय जिनेन्द्रमन्दिरं, व्रजत्यपूर्वां वितनोति भावनाम् । शृणोति सर्वज्ञवचोऽमृतोपमं, ध्यायत्यजस्रं परमेष्ठिसद्गुणान् ॥ १ ॥ दयार्द्रचेताः प्रददाति नित्यं, दीनान्धकेभ्यो धनमन्नवासः । निवर्त्तयत्यात्महिताय हिंसां, प्रवर्त्तयत्यर्हदखण्डितोत्सवान् ॥२॥ इतोऽशुमालिनि पश्चिमाचलशिखरमारूढे सान्ध्याऽऽरुणितनभोमण्डले निशामुखे स्वनियममनुस्मरन्मकरध्वजनृपतिः सामन्तमन्त्रिसभ्यजनैः परिवारितोराजसभायां सिंहासनमधितष्ठौ, विदिताऽवसरः सुबुद्धिरवदत्—पार्थिवेन्द्र ? नीतिविदांराज धर्मःप्रशस्यः । यतः—यः कुलाभिजनाचारै—रतिशुद्धः प्रतापवान् । धार्मिको नीतिकुशलः, स स्वामी भुवि युज्यते ॥१॥ प्रजां संरक्षति क्ष्मापः, सा वर्द्धयति पार्थिवम् । वर्धनाद्रक्षणं श्रेय—स्तन्नाशेऽन्यसदप्यसत् ॥ २ ॥ आत्मानं प्रथमं राजा, विनयेनोपपादयेत् । ततोऽमात्याँस्ततो भृत्यां—स्ततः पुत्राँस्ततः प्रजाः ॥ ३ ॥ राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः । लोकास्तमनुवर्त्तन्ते, यथा राजा तथा प्रजाः ॥ ४ ॥ नृपाणाञ्च नराणाञ्च, केवलं तुल्यमूर्त्तिता । आधिक्यन्तु क्षमाधैर्य—माज्ञा दानं पराक्रमः ॥ ५ ॥ तथा च—प्रजां न रञ्जयेद्यस्तु, राजा रक्षादिभिर्गुणैः । अजागलस्तनस्येव, तस्य जन्म निरर्थकम्

॥ ६ ॥ अजामिव प्रजां हन्या-द्यो मोहात्पृथिवीपतिः । तस्यैका जायते तृप्ति-र्द्वितीया न कथञ्चन ॥ ७ ॥ प्रजापीडनसन्तापा-त्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणा-न्नादग्ध्वा विनिवर्त्तते ॥ ८ ॥ अन्यच्च—दुष्टस्य दण्डः स्वजनस्य पूजा, न्यायेन कोशस्य च संप्रवृद्धिः । अपक्षपातः स्थिरता च दृष्टेः, पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ ६ ॥

अतोऽस्मिन्कार्ये सत्यासत्यनिर्णयस्त्वामाधितिष्ठति, पुरा कुमार्या वरवीक्षणाय मन्त्रिचतुष्टयी सिंहलपुरींभवतापहारिणा भवता प्रैपिष्ट, ते च वरस्वरूपंविलोक्य समागताः, तेपामेव तत्स्वरूपंप्रष्टव्यं यथादृष्टं ते त्वांकथयिष्यन्ति, करस्थितकङ्कणस्य विलोकनायादर्शयत्नोनिष्फलः, सयुक्तिकमिदंमन्त्रिवचनमाकर्ण्य नरेंद्रेण विचिन्तितं—सचिवानांवचनंमाननीयम् । यतः—

स किं सखा साधु न शास्ति योऽधिपं, हितान्न यः संशृणुते स किं प्रभुः । सदानुकूलेषु हि कुर्वते रतिं, नृपेष्वमात्येषु च सर्वसम्पदः ॥१॥

तदानीमेव नृपेण चत्वारस्तेप्रधानाःसमाकारिताः, विहिताञ्जलयस्तेऽपि भूपतिंप्रणम्य निजोचितासनेषूपविष्टाः, नरेन्द्रोऽवादीत्, रे सचिवाः ? यथादृष्टं तत्स्वरूपं ब्रूत, कुमार्या विवाहार्थंयूयंसिंहलपुरींगतास्तत्र भवद्भिर्वरोविलोकितोनवा ? सत्यवार्त्तांनिवेद्य यूयंकृतिनोभवत, परिणामे सत्यमेव जयति, असत्यादपरंमहापापं न विद्यते, अतोऽसत्यवादःसर्वदाहेयः यतः—

नाऽसत्यवादिनः सख्यं, न पुण्यं न यशो भुवि । दृश्यते नाऽपि कन्याणं, कालकूटमिवाऽऽश्नतः ॥१॥

असत्यमप्रत्ययमूलकारणं, कुवासनासद्म समृद्धिवारणम्, विपन्निदानं परवञ्चनोर्जितं, कृतापराधं कृतिभिर्विवर्जितम् ॥२॥

यशो यस्माद्भस्मी-भवति वनवन्हेरिव वनं, निदानं दुःखानां, यदवनिरुहाणामिव जलम् ।
न यत्र स्याच्छाया-ऽऽतप इव तपःसंयमकथा, कथञ्चित्तन्मिथ्या-वचनमभिधत्ते न मतिमान् ॥ ३ ॥

एवं नृपतेःसुबोधवचनंसमाकर्ण्य मिथोविहितसङ्केतानांतेषांचतुर्णामेकोऽवादीत्—निग्रहानुग्रहं कर्तुं, समर्थानां महीभुजाम्। निवेद्य स्वकृतं पापं, शुद्धिमिच्छेन्निजात्मनः ॥१॥ स्वार्थिनः किं न कुर्वन्ति, किं न खादन्ति दुर्बलाः। विरुद्धाःकिं न जल्पन्ति, किं न जानन्ति पण्डिताः ॥ २ ॥ स्वामिन् ! भवदन्नेन पोषितोहंकृतघ्नपदवीं न श्रयिष्यामि, भवता समादिष्टा वयं चत्वारः सिंहलपुरींगत्वा तन्नराधीशं संमिल्य विवाहवार्त्ताकर्तुमुपविष्टास्तावदस्मदुत्तारके विस्मृतांमदीयांमुद्रिकांसमानेतुमहंगतवान्। विवाहनिर्णयस्तु मय्यनागतेऽप्येभिस्त्रिभिर्विहितः। नृपकुमारोऽपि मया नैव दृष्टः, राजन् ! यज्जानामि तन्मया निवेदितं, योऽत्र मेऽविनयःस क्षमापतिना क्षन्तव्यः। इत्थंप्रथममन्त्रिपठितांकृत्रिमांवार्त्तांश्रुत्वा नृपेण विज्ञातं—स्खलितेऽप्यस्मिन्साक्षिणि कुमारस्वरूपमनेन न दृष्टमितिनिश्चयोजातः, द्वितीयस्याऽभिप्रायोऽधुना श्रोतव्यः। द्वितीयोऽथ मन्त्री प्रवचनपटुः समुत्थाय प्रोवाच—भर्त्तुरग्रे हि को मूढः प्रलपेद्वचनं मृषा ?। हालाहलान्वितं वारि, जीवितेच्छुः कथं पिबेत् ? ॥ १ ॥ अतोऽवितथवादरतोऽहंकिञ्चिदपि व्यलीकंवक्तुंनेच्छामि, यतोभुजङ्गमोऽपि निजबिले प्रविविक्षुर्वक्रभावंजहाति, तस्मादहंभवतःसन्निधौ मृषोक्तिं न वदिष्यामि, नराधीश ! विवाहवार्त्ताकर्त्तुमुपविष्टेषुसर्वेष्वजीर्णान्नपीडितोदरोऽहंदेहचिन्तार्थं बहिर्गतः। देहशुद्धिंविधाय यावदहंतेषांमिलितस्तावत्तैस्त्रिभिर्मांविना विवाहकार्यंनिरधारि, मानिभिस्तैःसंख्यामात्रोऽप्यहं न गणितः, युष्मत्कुमारिकाया वरःकाणोगौरोवेति किमपि न जानामि—मदीयं गमनं राजन् !, श्वपुच्छमिव निष्फलम्। न गुह्याच्छादने दक्षं, न दंशमशकाऽपहम् ॥१॥

कुमारदर्शनेऽतीवोत्कण्ठितं मे मानसमासीत्तथाऽपि तन्मनोरथोमया न सफलीकृतः। इति तदीयांगिरंसमाकर्ण्य संशयदोलामारूढोमहीपतिर्व्यचिन्तयत्। अयमप्यसत्यवादी परन्त्वनेन कुमारस्तु नैव विलोकितोऽन्यथा स्वरूपवर्णनंकुतो न कुर्यात् ?

ततस्तृतीयोऽवादीत्–स्वामिन् ! ॥ कूटसाक्षी मृषावादी, यश्चासदनुशास्ति वै, ते मोहमृत्यवः सर्वे, तथा ये वेदनिन्दकाः ॥१॥

अतोऽहंसत्यंवदामि, विवाहंनिर्णेतुंसर्वे संमिलितास्तदानींसिंहलेशस्य भागिनेयः केनचिद्रोपितोनंष्ट्वा निजपत्तनमगमत्, तंनिवर्त्तयितुमर्हतेन नरेन्द्रेण प्रेषितः, चाटुवचनैस्तंसमादाय यावदहंतत्रसमागतस्तावत्तैस्त्रिभिर्विवाहोनिर्णीतः । अयंमे महानपराधोजातः, मदीयमिमंप्रमादंक्षमस्व, कुमारस्तु मया नेत्राऽतिथिर्न कृतः, भवतःसन्निधौ मृषोक्तिं जल्पित्वा शोचनीयदशामनुभवितुंनेच्छामि, यतोऽहंभवतश्छत्रच्छायायां सुखेन निवसन्गतकालमपि न वेद्मि, एकंगृहंडाकिन्यपि मुञ्चतीतिस्मरणान्मदुक्तिःसत्यैव विज्ञेया, इतितृतीयोक्तंयुक्तिमद्वचनंविभाव्यायमप्यसत्यवक्तेति जातनिश्चयेन नृपेण हृदि ज्ञातमनेनाऽपि कुमारोनैव प्रत्यक्षतोलक्षीकृतः । ततश्चतुर्थःसचिवःपृष्टः, मन्त्रिवर्य ! त्रयस्तु विकलवाचःस्वकर्त्तव्यविमुखाःसंजाताः, अधुना त्वंसत्यंब्रूहि–अन्यथाऽस्मच्छंशयशल्यस्योद्धृतिःकथंभविष्यति ? यदि मृषावचनंवक्ष्यसि तदा तत्फलमवश्यंभोक्ष्यसे, मयि रुष्टे सुखाशाकुतोभवेत् ? दण्डयानूशिक्षितुमहंसमर्थोऽस्मि, यतोनीतिमतामग्रे तथ्यवादिनोविजयन्ते, असत्यवादिनोजीवनं कियद्दिनमितिनृपोक्तिमाकर्ण्य तुरीयःसचिवोऽव्यचिन्तयत्–संप्रत्यसत्यवादेनाऽहं हास्यभाजनंभविष्यामि, तस्मात्सत्यमेव वक्तव्यंसत्यमन्तरा विजयाशा विफला, यतः—सूनृतं सर्वशास्त्रार्थ--निश्चितज्ञानशोभितम् । भूषणं सर्ववचसां, लज्जेव कुलयोषिताम् ॥ १ ॥

पुनस्तेनप्रोक्तं–पार्थिव ! भवदाज्ञाविधायकोऽहंप्राणान्तेऽपि वितथवादं न करिष्यामि, कृपांविधाय मदुक्तिःश्रूयताम्, तावद्वयंचत्वारःस्वाम्यनुज्ञांसत्यापयितुंसिंहलदेशमभिगम्य नृपान्तिकंप्राप्ताः, कथितश्चास्माभिः—राजन् ! अस्माकंस्वामिनःशुभलक्षणलक्षिता प्रेमलालक्ष्मीरित्येका कुमारी प्राप्तयौवना वर्त्तते, तद्विवाहार्थमस्मत्स्वामिना वयंप्रत्यादिष्टाः, तांविवोढुं-

भवत्कुमारो विश्रुतगुणोऽलमस्ति, भवतःकुलमपि निष्कलङ्कंविभाति, यतः—

कुले कलङ्कः कवले कदन्नता, सुतः कुबुद्धिर्भवने दरिद्रता। रुजः शरीरे कलहप्रिया प्रिया, गृहागमे दुर्गतयः षडेते ॥ १ ॥
कुलञ्च रूपञ्च सनाथता च, विद्या च वित्तञ्च वपुर्वयश्च। एते गुणाः सप्त वरे विलोक्या–स्ततः परं भाग्यवती हि कन्या ॥२॥

नृपतिलक ! एते सर्वे गुणाःसमकालमविरोधिनोयुष्मत्कुमारंसमाश्रिताः, गुणहीनस्तु वरोनाऽस्मत्स्वामिने रोचते. यतः–

प्रकटं मृदुनाम जल्पतः, परुषं सूचयतोऽर्थमन्तरा। शकुनादिव मार्गवर्त्तिभिः, पुरुषादुद्विजितव्यमीदृशात् ॥ १ ॥

अतोगुणिनेवराय कन्यारत्नंप्रदीयते, इतिबहुशोऽभ्यर्थितोऽपिनृपतिरस्मदीयंवचनंनाङ्गीकृतवान्। ततस्तत्रस्थितेन तन्मन्त्रिणा हिंसकेनास्माकंवचनंप्रतिपन्नम्। उक्तश्चास्माभिःसचिवेन्द्र ! कुमारंदर्शय, पश्चात्सम्बन्धंकरिष्यामः, वरमविलोक्य विवाहो न विधेय इत्यस्मन्नरेशितुरनुशासनंविद्यते, स्वामिवचनंवयंकथंविलोपयामः ? तदा हिंसकोऽब्रवीत्–भो मन्त्रिवराः ? अध्ययनाय राजकुमारोऽधुना निजमातुलसद्मनि तिष्ठति, विजितरतिपतिरूपःकुमारोजगज्जनानन्ददायकोविद्यते, सुखेन विवाहोविधीयतां, तद्विलोकनस्य प्रयोजनंनास्ति, निजमनोरथःसफलीक्रियताम्। पुनरस्माभिर्वरविलोकने बह्वाग्रहोऽकारि, तदेमे भेदसाध्याइतिविज्ञाय तेन प्रत्येकंकोटीधनंप्रदाय वयंनिराग्रहीकृताः, पश्चाल्लोभाभिभूतमानसैरस्माभिर्विवाहोदृढीकृतः। स्वामिन्नीदृशःप्रपञ्चोऽस्माभिर्विहितः, कुमारःकीदृश इति नास्माभिर्विलोकितः, केवलंकूटालयंहिंसकंजानीमः, इत्यस्मदीयंवृत्तान्तंसत्यमेव जानतांदेवपादाः। अयमस्माकमपराधोदुरन्तपरिणामोविद्यतेऽतोभवते यद्रोचतेतद्विधीयताम्। विश्वासघातिनोवयंकांकुगतिंगमिष्यामः ? धिगस्मान्कूटकारिणः,

यतः—विश्वास्य मधुरवचनैः, साधून्ये वञ्चयन्ति नम्रतमाः। तानपि दधासि मातः? काश्यपि? यावस्तवापि च विवेकः ॥१॥

एवमस्यचतुर्थस्यमन्त्रिणोवृत्तान्तं सत्यंविज्ञाय नृपोऽवोचत्, मन्त्रिन्? त्वमेव सत्यवक्ता, विश्वासपात्रं च त्वामेव गणयामि, अनुजीविभावस्त्वया सत्यापितः, इत्थंतद्वचनविश्वस्तोनराधीशोनिजाङ्गजांनिर्दोषांमत्वा भृशंप्रमोदमवाप। सुकृतोदये विरुद्धा अपि सानुकूलतांभजन्ति.

यतः—यन्मनोरथशतैरगोचरं, न स्पृशन्ति च गिरः कवेरपि। स्वप्नवृत्तिरपि यत्र दुर्लभा, लीलयैव विदधाति तद्विधिः ॥१॥

तथा च—अघटितघटितं घटयति, सुघटितघटितानि दुर्घटीकुरुते। विधिरेव तानि घटयति, यानि पुमान्नैव चिन्तयति ॥२॥

ततःसा मन्त्रिचतुष्टयी निर्दोषीकृत्य तेन विसृष्टा स्वस्थानमगमत्। पुनस्तेन सुबुद्धिरभाष्यत, सिंहलनरेशस्येदंसर्वंकपटंव्यज्यते, कुमारी सर्वथा निर्दोषा वर्त्तते, तत्पाणिगृहीताऽपरोराजकुमारः संभाव्यते, अनेन दुर्भगेन कुष्ठिना मत्पुत्री वृथैव विडम्बिता.

यतः—दैवे विमुखतां याते, न कोऽप्यस्ति सहायवान्। पिता माता तथा भार्या, भ्राता वाऽथ सहोदरः ॥ १ ॥

सुहृदो ज्ञातयः पुत्रा-भ्रातरः पितरावपि। नाऽनुस्मरन्ति स्वजनं, यस्य दैवमदक्षिणम् ॥ २ ॥

हरिणाऽपि हरेणाऽपि, ब्रह्मणा त्रिदशैरपि। ललाटलिखिता रेखा, न शक्या परिमार्जितुम् ॥ ३ ॥

अधुनाऽस्याःपरिणेतुःशुद्धिर्विधेयेतिनृपेणोक्ते, मन्त्री जगाद—स्वामिन्? यावच्चन्द्रराजस्य शुद्धिर्न लभ्यते तावदयंसिंहलेशः सपरिवारोऽत्रैव रक्षणीयः, इतिमन्त्रिवचनं प्रमाणीकृत्य तेन सिंहलेशो भोजयितुं निमन्त्रितः, सोऽपि सपरिवारोराजसद्मनि समायातः, सगौरवं सर्वान् भोजयित्वा कुष्ठ्यादिभिश्चतुर्भिरन्वितं सिंहलेशं स्वाधीनीकृत्यापरान् जनान् विसृष्टवान्। ततस्तेऽपि लब्धजी-

वना इव निजदेशाऽभिमुखा बभूवुः । सिंहलेशप्रभृतयः पश्चाऽपि कारागृहे स्थिता निजपापोदयं स्मरन्तः पश्चात्तापंप्रापुः ।

यतः—अविचार्य कृतं कर्म, पश्चात्तापाय केवलम् । आपदां स्थानमुद्दिष्टं, कूटकर्मविधायिनः ॥ १ ॥

इतिश्रीचन्द्रराजचरित्रे तृतीयोल्लासे चतुर्थःसर्गः ॥ ४ ॥

ततो मकरध्वज नरेन्द्रेण चन्द्रराजविशुद्ध्यर्थं सर्वत्र चारपुरुषाःप्रेषिताः । निजप्रासादान्नातिदूरे चैका विशाला सत्रशाला भूपतिना निर्मापिता, निजपित्रासमादिष्टा प्रेमलातत्रास्थिता प्रत्यहं दानंददाति, देशान्तराद्ये केचनजनाः समायान्ति तान्सर्वान् विवेकपूर्वकं सा दानेन तर्पयति, स्वजनकेन कथितश्च–कुमारिके ! यःकश्चिद्दानजिघृक्षुस्त्वदन्तिके समायाति स त्वया पृष्टव्यः, योह्याभापुरीवृत्तान्तंकथयति स नरोमत्सन्निधौ त्वया प्रेषणीयः। इतिजनकाज्ञांस्मरन्त्या त्वया तद्वृत्तान्तं नासादितम् । तथाऽपि साऽऽशापाशनिबद्धा तत्र स्थिता यथोचितंदानंप्रयच्छन्ती याचकजनमप्रीणयत्, दानदत्ता सा प्रत्येकं सन्तर्प्याभापुरीवृत्तान्तमित्यपृच्छत्–बान्धवाः! यूयंदेशान्तरचारिणो नवीनवृत्तान्तविदोऽभिधीयध्वे, अतः पूर्वस्यांदिशि काचिदाभानगरीगरीयसीदृष्टा ? तत्र पुरन्दरायमाणश्चन्द्रराजाभिधोनृपोनिवसति, स युष्माभिर्विलोकितः ! इत्थंपृच्छ्यमानाः सर्वेऽपि तांप्रत्यवदन्–प्रियभगिनि ! वयं तद्देशंकदाऽपि न गताः सा नगर्यपि न श्रुता तर्हि चन्द्रराजंकुतोजानीमः ! । एवंप्रत्युत्तरंनिशम्य सा निराशाऽभवत्। पति वृत्तान्तमलभमाना रहसि शोचमाना नेत्रयोरश्रुधारांवरीभर्त्तिस्म, निजपतिवृत्तान्तंश्रोतुकामा सोपायान्तरमजानन्ती धैर्यं समाधाय कियन्तंकालमतिचक्राम, परं निजदुःखनिवेदनेन कमपि न दुःखीचकार। अथाऽन्यदा विमलापुर्यामेकस्मिन्नुद्याने कश्चिज्जङ्घाचारणमुनिः समागतः, वनपालकःसद्यःसमागत्य मकरध्वजनृपतिंव्यजिज्ञपत्, स्वामिन् ! अस्मदुद्यानभूमिःकेनचिज्ज्ञानिमुनीश्वरेण

विभूषिता स्वर्गसम्पदंविभर्त्ति। वनपालाय तुष्टिदानंवितीर्य नरेन्द्रोनिजपरिवारपरिकरितः प्रेमलाञ्च समादाय तंवन्दितुंनिरगात्। सर्वेऽपि तंमुनिपुङ्गवंवन्दित्वा स्वोचितस्थानेषूपविष्टाः, मेघगम्भीरया वाचा मुनिना धर्मदेशना प्रारेभे ॥ दानं सुपात्रे विशदञ्च शीलं, तपो विचित्रं शुभभावना च। भवार्णवोत्तारणयानपात्रं, धर्मं चतुर्धा मुनयो वदन्ति ॥ १ ॥ धनं दत्तं वित्तं, चरणमपि चीर्णं चिरतरं, क्रियाकाण्डं चण्डं, रचितमवनौ सुप्तमसकृत्। तपस्तप्तं तीव्रं, जिनवचनमभ्यस्तमखिलं, न चेच्चित्ते भावस्तुपवपनवत्सर्वमफलम् ॥ २ ॥ चत्वारो धनदायादा—धर्मराजाग्नितस्कराः। तेषां ज्येष्ठापमानेन, त्रयः कुप्यन्ति बान्धवाः ॥३॥

एवं मुनिमुखाद्देशनामृतं निपीय बहवो भव्यात्मानःप्रतिबुद्धाः सद्गुरोःपादान्तिके प्रणताःसनियमंव्रतानि विविधानि जगृहिरे, प्रेमलापि शुद्धसम्यक्त्वधारिणी श्राविकाऽभवत्, केचिन्निरतिचारंसम्यक्त्वंप्रपेदिरे, ततो मुनिरन्यत्र विहारमकार्षीत्। पौरजना अपि सिद्धमनोरथाःस्वस्थानमग्रुः। प्रेमला जिनपूजादिधर्मकर्माणि विशेषतःकर्त्तुमुद्यताऽभवत्। नमस्कारमन्त्रंध्यायन्ती सा कतिचिद्वासरान्यापयति स्म, अन्येद्युर्नमस्कारमन्त्रमहिम्ना तुष्टिमापन्ना शासनदेवी प्रकटीभूय प्रेमलां भणति स्म—भगिनि? तव भर्त्ता, तव लग्नदिवसात् षोडशहायनान्ते त्वांमिलिष्यति नात्र संशयः, यतोदीव्यवचनंविफलं न भवति तस्मात्त्वयाऽधृतिर्न विधेया, परमेष्ठिनांभक्तिश्च सद्भावतस्त्वया प्रत्यहंविधातव्या। अथ विकसचेतसा तया निजपित्रोर्लज्जांशिथिलीकृत्य देवीवचनंनिवेदितम्, विज्ञाततद्वृत्तान्तौ तावपि क्षीणचिन्तौ जातौ। तत्प्रभृति प्रेमलाऽपि विदितपरमेष्ठिमन्त्रप्रभावा विशेषेण तदाराधनांचकार, यथाविधि जिनेन्द्रभक्तिशुद्धभावेन व्यरीरचत्। निजशक्त्यनुसारेण प्रत्याख्यानादिधर्मकर्माणि समुद्यताऽभवत्। अथैकदा वीणाराजितहस्तकमला काचिद्योगिनी पर्यटन्ती तत्र समाययौ, अवसरंलब्ध्वा विजितकोकिलरवा सा वीणांवादयन्ती गायनंप्रारेभे, प्रेमला

तां निजान्तिके समाहूय भणतिस्म—प्रियभगिनि ! स्वनिवासेन कं देशं विभूषयसि ? योगिनी जगौ, पूर्वस्मिन्देशे निवसामि, तव किं प्रयोजनमस्तीतिकथयित्वा काषायाम्बरधारिणी दक्षमतिर्वैराग्यवासितमानसा सा मनोहारिणींवीणांवादयन्ती चन्द्रराजगुणान-गायत् ॥ जनतापहरं भविकैर्विनतं, पृथिवीतिलकं नरनाथवरम् । मकरध्वजकान्तिमखण्डमतिं, भज चन्द्रमनिष्टहरं सततम् ॥ १ ॥ शुभशान्तिगृहं कमलाङ्घ्रियुगं, हृदयंगममूर्तिमनन्यगुणम् । स्मर चन्द्रनरेशमपूर्वविभं, वरविक्रमराजितकरकमलम् ॥ २ ॥ इत्थं निजभर्तृनाम निशम्य प्रेमला तां पृच्छतिस्म—भगवति ? तावकीनंदेशंकोनामनृपतिः पालयति ? इदश्च गुणकीर्तनं कस्य करोषि ? योगिनी जगाद—देशेऽस्मदीयेऽस्ति महीधरेन्द्र—श्चन्द्राभिधो लोकसुखानुशंसी । प्रत्यर्थिनो यस्य दिगन्तभाजो—वितन्वतो राज्यमनूनभासः ॥ १ ॥ निजौजसा भूमण्डलंदीपयन्तंचन्द्रराजंस्तवीभि, तद्भुजपालिताऽहं सदैव जीवामि । यतः—स्वामिनि शुभगुणानिलये, परकार्यरते दयान्वितेऽदुरिते । विरज्यते नयसारे, को मतिमान् क्षेमकारिणि क्षमायाम् ॥ २ ॥

स चाऽधुना तदीयविमात्रा केनाऽपि हेतुना कुकुटत्वंप्रापितः पञ्जरं भजति । असह्यपीडंतंविलोक्य शोकशङ्कुना क्षुभित-हृदयाऽहंदेशान्तरे बम्भ्रमन्त्यत्र समागताऽस्मि, कुत्राऽपि तत्समानःपुरुषोमया न निरीक्षितः, तद्वियोगार्त्या क्काऽपि सुखं न विन्दे, इत्थं योगिनीवचनेन निजभर्तुःशुद्धिंलब्ध्वा प्राप्तजीवितेव प्रेमला तां नृपान्तिकमनैषीत् । तयाऽपि स्वमुखेन तदीयं सर्ववृत्ता-न्तंराज्ञे निवेदितम् । मकरध्वजेन भणितं—सुपुत्रि ! ॥ भर्तुः कुलं मातृकुलं तथैव, पितुः कुलं सत्यवचःप्रभावात् । त्वया प्रकाशी-कृतमेव भूम्यां, गुणा हि सर्वत्र सदा प्रथन्ते ॥ १ ॥

त्वद्भर्त्ता भूरिभाग्योनिजनाम्ना प्रकटीभूतोऽपि दूरदेशे स्थितस्तस्मादधुना तत्समागमंदुर्लभंमन्ये, धैर्यकञ्चुकं परिधत्स्व,

विपादंपरिहर, सविशेषंधर्मध्यानंविधेहि। प्रेमलाऽपि तथाविधांपितृशिक्षांस्वीचकार, ततस्तयासत्कृता योगिनी लब्धानुज्ञाऽन्यत्र जगाम, प्रेमलाऽपि धर्मध्यानरता निजपतिञ्च स्मरन्ती दुःखेन दिनान्यत्यवाहयत्। इतः कुक्कुटीभूतस्य चन्द्रराजस्य मासे व्यतीते पौराःसर्वे परंक्षोभमवापुः, व्यचिन्तयंश्च–त्वया वीर ! गुणाकृष्टा–ऋजुदृष्ट्या विलोकिताः। लक्षं लब्ध्वैव गच्छन्ति, मार्गणा इव मार्गणाः ॥ १ ॥ उदेति पूर्वं कुसुमं ततः फलं, घनोदयः प्राक्तदनन्तरं पयः। निमित्तनैमित्तिकयोरयं विधि–स्तव प्रसादस्य पुरस्तु संपदः ॥ २ ॥ हस्तन्यस्तकुशोदके त्वयि न भूः सर्वसहा वेपते, देवागारतया स काञ्चनगिरिश्चित्ते न धत्ते भयम्। अज्ञातद्विपभित्त्वभिक्षुककुलावस्थानदुःस्थाशया–वेपन्ते मददन्तिनः परममी भूमीपते ! तावकाः ॥३॥ इत्यनेकगुणान् संस्मरन्तस्ते पौरजनाः शुभाशीर्वचनैर्निजंपार्थिवंन व्यस्मार्षुः–तद्यथा–यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं, भक्त्येशः परितोषितः सुचरितैरानन्दिताः सज्जनाः। पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचका–स्तस्मै सर्वगुणाश्रयाय भवते दीर्घायुराशास्महे ॥ १ ॥ दानेकल्पतरुर्नये सुरगुरुः काव्ये कविस्तेजसि, प्रौढग्रीष्मरविर्धने धनपतिः सत्ये दयायां शिविः। गांभीर्ये सरितांपतिर्निरुपमे शौर्ये सुभद्रापतिः, श्रीमान्धर्मरतिर्महीपतिरयं जीयात्सहस्रं समाः ॥ २ ॥ अथ गुणावली विमातुर्भयंशङ्कमाना गुप्तवृत्त्या निजस्वामिनमरक्षत्,

यतः—दुर्जनसंसर्गात्कुतो निवृत्तिः ! ॥ दुर्वृत्तसङ्गतिरनर्थपरम्पराया–हेतुः सतां भवति किं वचनीयमत्र। लङ्केश्वरो हरति दाशरथेः कलत्रं, प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥ १ ॥ हंसोऽध्वगः श्रममपोहयितुं दिनान्ते, कारण्डकाकचक्रकोककुलं प्रविष्टः। मूकोऽयमित्युपहसन्ति लुनन्ति पक्षा–न्नीचाश्रयो हि महतामपमानहेतुः ॥ २ ॥ अथ नृपदर्शनोत्कण्ठितः प्रजागणः

सचिवान्तिकमभ्येत्य व्यजीज्ञपत्–सुबुद्धे ! नृपदर्शनमन्तराऽस्माकमेकोमासोऽयुतवर्षायितः, अधुना स्वामिदर्शनं न भविष्यति चेत्त्क्षणमप्यत्र न स्थास्यामः। दिगन्तपरिभ्रमणेन वयं जीवनवृत्तिंकरिष्यामः, प्रसादंविधाय नःप्रयाणाज्ञांदेहि ॥ यतः—
अराजकं मण्डलमाशु नश्यति, सुसम्पदामास्पदमप्यनीशम्। ततः शुभं चिन्तयतां मनस्विनां, विदेश एवोत्तमउच्यते ज्ञैः॥१॥
कुलेन हीनो नृभवोऽदयो वृषो–ऽरदोगजो देवगृहं विमूर्त्तिकम्। सरोऽजलं वक्त्रमनाक्षिकं यथा, न शोभते राज्यमराजकं तथा ॥२॥ प्रजाः प्रजानाथनिरीक्षिताः सुखं, जीवन्ति दुर्दैवमपि त्यजन्ति। सदा प्रजारञ्जकभूपदर्शन–मभ्यर्थयन्तिस्म दिवौकसोऽन्वहम् ॥ ३ ॥ अतोऽस्माकमीक्षणानि पार्थिवदर्शनेन कृतार्थय, ततो मन्त्रिणा कथितम्—
सभ्याः! प्रभोर्दर्शनमुन्नतिप्रदं, जातं न मे जीवितधारणक्षमम्। मासप्रमाणानि दिनानि वर्षा–ऽयुतानि जातानि ममाऽपि तद्विना॥१॥
राजभक्ताः! सुखेन तिष्ठत, अधृतिं मा कुरुत, अचिरेण तच्छुद्धिंविधाय युष्मान्प्रीणयिष्यामि, विदेशं मा व्रजत, सुदैवयोगाद्भव्यंभविष्यति, "दैवाधीनं जगत्सर्वम्" विपत्तौ विषादो न कर्त्तव्यः, यतः—विपत्तौ किं विषादेन, संपत्तौ हर्षणेन किम्। सुखदुःखमिदं दृश्यं, चक्रवत्परिवर्त्तते ॥१॥ विपदोऽपि दैवबलाच्चूर्णविघटन्ते, अतो विपत्काले बुद्धिमता धैर्यधनंरक्षणीयम्—
उक्तञ्च—विपदि धैर्यमथाऽभ्युदये क्षमा, सदसि वाक्पटुता युधि विक्रमः। यशसि चाऽभिरुचिर्व्यसनं श्रुतौ, प्रकृतिसिद्धमिदं हि वचस्विनाम् ॥ १ ॥
एवं वचनामृतैः सान्त्वयित्वा संमानिताः सर्वे पौरजनाः स्वस्वस्थानंजग्मुः। ततः कार्यदक्षः सचिवोवीरमतीमभ्येत्य विहिताञ्जलिः साद्यन्तंप्रजापूत्कारंन्यवेदयत्। पुनस्तेन भणितं–मातः! अराजकंराज्यंकियच्चिरंस्थास्यति ! नृपतिंगोपयित्वा सत्फलं

त्वया न लप्स्यसे, राजभवने गोपितः स चौरवत्स्थितस्तत्सर्वमवैमि, नृपतेरदर्शनेन पौरा भृशंप्रकुपिताः सन्ति, मया निवारिता अपि तद्दर्शनग्रहंते न विमुञ्चन्ति, परुषाचराऽपि मदुक्तिरायतौ तव भृशंहितदायिनी भविष्यति, अतः स्त्रीमतिस्त्वया न विधातव्या, यतः—अबला यत्र प्रबला, शिशुरवनीशो निरक्षरो मन्त्री। नहि नहि तत्र धनाशा, जीवित आशाऽपि दुर्लभा भवति ॥१॥

रुष्टायास्तव दुर्वचनान्यपि सहिष्ये, नैतावता मे रोपलेशः, भगवति ! मासादर्वाक् मे नृपदर्शनंजातमथाऽपि त्वत्कृतिपारं न पर्यैमि, एतस्मिन् संशयिताः सर्वे जना एवं वदन्ति "रिक्तोलूखलेमूसलयुगलवदिदंजातम्" तस्मादिदानीमुपायंचिन्तयित्वा राजानंदर्शय, त्वमपि महास्थानस्थिता मेधाविनी विराजसे, बालवदाचरणं ते न युज्यते. यदत्रसत्यंतन्निगद्य निश्चिन्ता भव. दर्शनोत्सुकाः प्रजा इदानींरोद्धुमशक्याः, इत्थं सरोपंभाषमाणंसचिवंसा तृणवदपि नाजीगणत्—" आतुरेऽपि स्तनन्धये क्रीवायाः स्तनोदुग्धदानेऽसमर्थः " इति लौकिकोक्तिंसत्यापयन्ती वीरमत्यवादीत्, मन्त्रिन् ! त्वदीयंदुश्चरित्रंसर्वंजानामि. रे दुराचार ? अस्मिन्कार्ये तवैवापराधोविद्यते. त्वैनैव नृपंनिहत्य मां कथयितुमुपागतोऽसि. राजहत्यांविधाय श्यामंतवमुखं मां मा दर्शय. कूटकारिन् ! निजविशुद्धतांज्ञापयितुंसमागतोऽसि, इदंत्वद्विचेष्टितंचिराद्विदन्त्यप्यहमद्ययावत् नाकथयम्, इदंनिन्द्यतमं कार्यंकःप्रकटीकुर्यादिति भवता वेदितव्यम् । अद्य खलु निजनिपुणत्वंप्रकटीकृत्य मांविबोधयितुंप्रगल्भसे, यतः—परोपदेशे कुशला,—दृश्यन्ते बहवो जनाः। स्वभावमतिवर्तन्तः, सहस्रेष्वपि दुर्लभाः ॥ १ ॥ परोपदेशवेलायां, शिष्टाः सर्वे भवन्ति हि। विस्मरन्तीहशिष्टत्वं, स्वकार्ये समुपस्थिते ॥ २ ॥ तथा च—परोपदेशे पाण्डित्यं, सर्वेषां सुकरं नृणाम्। धर्मे स्वीयमनुष्ठानं, कस्य चित्तु महात्मनः ॥ ३ ॥ अतस्तव दक्षत्वंज्ञातपूर्वंमया, अनेन पाण्डित्यख्यापनेन मद्योपानसतोऽपि प्रकटीकर्तुंसमागतो-

दृश्यसे, ममावाच्यवादंप्रजल्पंस्त्वंकिमात्महितंलप्स्यसे ? मत्पुरतस्तव विजयाशा दुर्लभेति तद्वचनंशल्यमिव मन्यमानःसचिवोऽजल्पत्—भगवति ! किमिमंवितथवादंजल्पसि ? अधुना वृद्धत्वया राजमाताऽभिधीयसे, सम्यग्विचार्य त्वया वक्तव्यं, मया नृपतिर्हतस्तत्र विद्यते कश्चित्प्रतिभूः ? नृपहननेन किं मे प्रयोजनम् ? नरदेवस्तुदेववत्सदैव माननीयः सर्वेषाम् । यतः—अष्टानां लोकपालानां, वपुर्धारयते नृपः । पिता माता च स ज्ञेयः, पूजनीयः सदा बुधैः ॥१॥ तस्मादविमृश्य त्वया वितथवादो न विधातव्यः । असत्यापवादेन दुरन्तपरिणामोलभ्यते, यतः—असत्यता निष्ठुरता कृतघ्नता, भयं प्रमादोऽलसता विषादिता । वृथाऽभिमानो ह्यतिदीर्घसूत्रता, तथाङ्गरौच्यादि विनाशनं श्रियः ॥ १ ॥ किञ्च—पारदारिकचौराणा,—मस्ति काचित्प्रतिक्रिया । असत्यवादिनः पुंसः, प्रतीकारो न विद्यते ॥२॥ आत्महिते निरताःसुकृतिनोऽवर्णवादं न जल्पन्ति, हितंजल्पतोमे सुष्ठु प्रतिलाभस्त्वया प्रदत्तः । प्रजानामुपरोधेन मया तवाग्रे सा वार्त्ता प्रकाशिता, तेन त्वन्तु भृशंरुष्टा जाता, पूज्यपादे ? प्रतिज्ञांविदधाम्यहं प्राणान्तेऽपि नृपघातं न करोमीतिसत्यमवेहि । इत्थं मन्त्रिवचनमाकर्ण्य विलक्षितानना वीरमती तं रहसि नीत्वा प्राह—मन्त्रिन्न तेऽस्त्यविदितं जगदीश्वरस्य, प्रोक्तेन किं तदपि कार्यविघातकेन ! । अत्याग्रहेण विषमं फलमाप्यते वै, वक्रेन्धने भवति तादृशवक्रवेधः ॥१॥ मच्छिद्राण्याच्छादय त्वदीयान्युद्घाटयेतिलोकोक्तिस्त्वया न विस्मर्त्तव्या, मन्त्रिंस्त्वामात्मीयं मन्यमाना गोपनीयामपि गृहवार्त्ताकथयामि, चन्द्रराजःसिद्धिंसमीहमानोविद्याधरविद्यांसाधयितुंरहसि स्थितः । अतःस आकार्यसिद्धेः कथं बहिरायाति ! विद्यासिद्धौ हि सर्वसिद्धयःसुलभाः । यतः—मातेव रक्षति पितेव हिते नियुङ्क्ते, कान्तेव चाऽभिरमयत्यपनीय खेदम् । लक्ष्मीं तनोति विपुलां वितनोति कीर्त्तिं, किं किं न साधयति कल्पलतेव विद्या ॥१॥ सम्प्रत्यावाभ्यांमिलित्वा युक्तिपू-

र्वंकंराज्यव्यवहारोविधास्यते, आवां वक्तुमपरःकःप्रभुः ? अहंनृपतिस्थाने स्थिताऽस्मि, त्वं मे सचिवोभूत्वाकार्यवाहकोभव, नो चेत्कटुफलमास्वाद्य दुरन्तदशांप्राप्स्यसि, अतःपरंतुभ्यंयद्रोचते तदङ्गीकुरु, अधिकंकिंवदामि ! राज्यासनमधिष्ठाय प्रजानां संरक्षणंस्वयमेव करिष्यामि, राज्यमपि निःस्वामिकं न स्थास्यति । स्वकीयंहितमिच्छसि चेन्मदीयंवाक्यंप्रमाणय, समयविदा सचिवेनाऽपि तद्वचनमङ्गीकृतम् । ततोवीरमती भृशं मोदमाना बभाण—मन्त्रिन् ! इतोविलम्बं मा कुरु, सर्वस्मिन्नगरे पटहघोषणामिति कारय । अतःप्रभृतिवीरमतीराज्ञीस्वयं राज्यासनमधिष्ठाय राज्यकार्यंविधास्यति, अतःसर्वजनैस्तदनुशासनंमान्यमिव शिरसि वहनीयम् । यो हि तदाज्ञामवधीरयिष्यति स दण्डार्होभविष्यति, किमधिकोक्तेन ! आभापुरीनिवासेन ये निर्विण्णा यमनिकेतनं च जिगमिषवस्तैरेव तत्प्रतिपन्थितया वर्त्तितव्यम् । इत्थंतदाज्ञामुद्वहता सचिवेन पटहोऽवाद्यत, तदाकर्णनमात्रतोविस्मिताःपौराः किमिदमिति वितर्कयामासुः, भार्याविना राज्यकर्त्ता नृपतिस्तु श्रुतः, पुरुषाधिष्ठात्री वनिता तु काऽपि नाश्रूयत, आभापुर्यामियंनूतना वार्त्ताऽजनि, अस्मिन्पत्तने स्त्रीराज्यंजातं—यतः सकलःपुरुषवर्गःप्रक्षीण इति पौरजनाःपरस्परंवदन्तिस्म, भृशंखिन्नमानसा अपि लोका वीरमतीभयेन किमपि न प्रोचुः । वीरबुद्धिःसा सर्वतोऽभयंदिशन्ती प्रलीनभूपालंदिङ्मण्डलमन्वशासत् । विजितारिमण्डलाःसामन्ता अपि माल्यमिव तदाज्ञामाराधयन्तिस्म, चन्द्रराजं सा मनसाऽपि नस्मरति, यो हि तन्नाम गृह्णाति स मृत एव विलोक्यते, अखण्डिताज्ञांप्रवर्त्तयन्ती मदमलीनमानसा राज्ञी मन्त्रिणं स्वाधीनीकृत्य भृशंतुतोष, विज्ञवश्च तया मादृशः सचिवोमे मिलितः, मद्वचनमनुस्मरन्नयंवाद्यंप्रवदयति, स्वयमपि चन्द्रराजं न स्मरतीतिमन्यमाना सा गतकालमपि नाऽचिन्तयत् । अथान्यदा सावधानहृदयःसचिवोवीरमतीमब्रवीत्, मातृके ?—

हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोङ्कुशो, वज्रेणाऽभिहताः पतन्ति गिरयः किं शैलमात्रं पविः।
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तम-स्तेजो यस्य विराजते स बलवान्स्थूलेषु कः प्रत्ययः ॥ १ ॥

ऊर्जितविक्रमया त्वया पालितेऽस्मिन् राज्येप्रजागणाश्चन्द्रराजंविस्मृत्य त्वभ्मामाचरंगणन्ति. यतः—अखण्डिता शक्ति-रथोपमानं, न विद्यते न च्छलरीतिरस्ति। अस्पृष्टसन्देहविपर्ययायाः, कोऽयं तव न्यायनये निवेशः ॥ १ ॥ स्वतः प्रकाशो मनसो महत्त्वं, धर्मेषु शक्तिर्न तथान्यथा धीः। भूपालगोपालपदैकभक्ते-रन्यैव नैयायिकता तवाऽस्ति ॥ २ ॥ अखण्डमाखण्डलतुल्यधाम, त्वदीयमाश्रित्य न चौर्यशब्दः। आकर्ण्यते स्वाऽपरवस्तुजातं, समं हि सर्वत्र विभाव्यतेऽन्यैः ॥ ३ ॥ तथाच—मेघोभाति जलेन गौस्तु पयसा विद्वन्मुखं भापया, तारुण्येन च कामिनी मधुरया वाण्या पिकः खं जलात्। मालिन्याञ्चयनं श्रिया च सदनं ताम्बूलरागान्मुखं, ब्रह्माण्डं सकलं त्वया जनवरे! भाति स्म चित्रं महत् ॥४॥

भगवति! त्वयि राज्यासनमारूढायामजाव्याघ्रौ समस्थितिकौ सहैववारि पिबतः, इतिप्राचीनोक्तिस्त्वया सत्यापिता, हेमातः! किं बहुना! त्वत्प्रभावेण चर्मनाणकमपि माननीयं स्यात्!!! त्वदग्रे वक्तुं कोजिह्वांप्रसारयेत्? बहवोनरेन्द्रा मयाऽपि दृष्टा भविष्यन्ति च, किन्तु दिगन्तव्यापिनीं त्वत्कीर्त्तिं न केऽपि प्राप्स्यन्ति, स्त्रीजातिमनुभवन्तीत्वं तद्विषादंमा कुरु, यतोवसुन्धराऽपीयंस्त्रीलिङ्गधारिणी निगद्यते, अन्ये जनाश्चान्तिमामवस्थामासाद्य परप्रणतिंकुर्वते, त्वन्तु निजौजसा स्वेतरान्नामयसि; तस्माद्वार्धक्यमपि तवैव श्लाघनीयं विद्यते। एवं मन्त्रिवचनानि निपीय वीरमती प्रमोदभरं बिभ्राणा क्षुद्रभावा त्रपां न दधार.

श्लाघा सुपात्रे न गुणैर्विहीने, नीचास्तु तां प्राप्य भवन्ति मत्ताः। योग्यां धरित्रीमधिगम्य बीजं, फलत्यरं नोषरभूमिसंस्थम् ॥१॥

पुनस्तया प्रमुदितया पठितं—सचिवोत्तम ! सत्यसंगरस्य तव वचनं मे सर्वदा माननीयं वर्त्तते.

इति श्रीचन्द्रराजचरित्रे तृतीयोल्लासे पञ्चमः सर्गः ॥ ५ ॥

अथमन्त्री निजचेतसि चिन्तयतिस्म, ममाऽपीदंसिंहशरणंसंप्राप्तं, निष्पञ्जनं विलोकयतोनिधिरेवासन्नोऽभूत् । इतिविचिन्तयतस्तस्य पञ्जरपतितःकुक्कुटोदृष्टिमार्गमवतीर्णः । ततस्तमवलोक्य स वीरमतीं प्राह—पूज्यपादे ! निरपराधोऽयंपक्षी त्वया पञ्जरे कथं निक्षिप्तः ? किंवा कश्चिद्देवविशेषः स्वाधीनीकृत्य रूपान्तरेण रक्षितः ? यत्सत्यंतद्ब्रूहि, ततोवीरमती जगौ, मध्याः क्रीडनककृते मूल्यं वितीर्य गृहीतोयम् । ईदृशींदीनावस्थामनुभवन्तमिमंनिरीक्षमाणाः सर्वेजीवदयांपालयन्तीविपरोपकृतिं ख्यापयितुंपञ्जरेऽयं संरक्षितोऽस्ति, यावद्दैवबलंतावदयमपि सुखेन विलसतु । गृहागतानालोकमानोऽयं चरणायुधोमुक्तान्नं सफलीकरोति, प्रभुभजनोत्कण्ठिताश्चमांरात्रेश्चरमयामे नियमेन प्रबोधयति । ततः सचिवेन भणितं—नाऽयंविहगोभवत्याक्रीतो ज्ञायते, यदिमूल्यंवितीर्यगृहीतस्तर्हि तन्निमित्तधनव्ययःक्काऽपि वहिकायांनैव लिखितोऽस्ति, भवत्याः सकलः कार्यव्यवहारोमद्धस्तेनैव जायते । अतोऽसत्यंमा ब्रूहि, नाऽहं परकीयः । वीरमती जगाद—सचिवेन्द्र ! अस्मिन्विषये त्वं कदाग्रहंमा कुरु, ईदृशी वार्त्ता त्वया मुहुर्मुहुर्न प्रष्टव्या, अनेन विज्ञातेनाऽपि तव कोहेतुः. यतः—अव्यापारेषु व्यापारं, यो नरः कर्त्तुमिच्छति। स नरो निधनं याति, कीलोत्पाटीव वानरः ॥ १ ॥ अतोऽस्यां जिज्ञासायां मन्दादरोभव, मे कार्यकर्त्तात्वमसितथाऽप्ययंत्वद्विचारोऽसमञ्जसः, मदन्तिके बहवोऽलङ्काराःसन्ति, तेषामेकेनायंकुक्कुटोमया क्रीतः। पुनरियंवार्त्ता त्वया न प्रष्टव्या, मदुक्तंवचनंत्वया मन्तव्यमन्यथा त्वमपि तदवस्थांप्राप्स्यसि, इति तस्याः सभयं वचनं निशम्य मन्त्री मौनमुखोबभूव । तस्मिन्नवसरे गृहान्तःस्थिताऽश्रुपूर्णाकुलेक्षणा

गुणावली तेन न्यलोकि, तन्मुखंविलोकमानः सचिवस्तया निजकरतलेऽक्षराणि विलिख्य ज्ञापितः।

यः पञ्जरे निपतितश्चरणायुधो मे, भर्त्ताऽस्ति चन्द्रनृपतिः सचिवेन्द्र ! सैव।
तत्कर्महेतुरभवत्खलु तद्विमाता, रुष्टे विधौ हि विपरीतगतिर्जनानाम् ॥ १ ॥

विज्ञाततत्संकेतःसोऽपि सद्यः सकलं वीरमतीकूटप्रपञ्चमज्ञासीत्। विस्मितेनाऽपि तेन सा वार्त्ता वीरमतीं न पृष्टा, केवलं हृदि तद्विज्ञाय स गृहीताज्ञोनिजगृहंजग्मिवान्। ततः कुक्कुटवृत्तान्तश्च देशान्तरेषु प्रसिद्धिमवाप, सकलजनास्तांधिगस्त्विति मुक्तकण्ठमवादिषुः, राज्यलोभेन विमात्रेमांदशांनिजसुनुःप्रापित इत्यवर्णवादञ्चाचख्युः। तद्भयत्रस्ताःकेऽपि प्रत्यक्षीभूय तां कथयितुं न प्रभवन्ति स्म, परोक्षे सर्वेऽपि तांनिन्दन्ति स्म. यतः—उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये। पयःपानं भुजङ्गानां, केवलं विषवर्धनम् ॥ १ ॥ उपदेशो न दातव्यो—यादृशे तादृशे जने। पश्य वानरमूर्खेण, सुगृही निर्गृहीकृता ॥ २ ॥

अतो बलवतांमत्तानांवार्त्ताविधानेन केवलं पश्चात्तापोजायते, केऽपि नृपतयस्तद्विद्याबलेन भयमापन्नास्तांप्रणेमुः, महाशक्तिमतींवीरमतीं विज्ञाय विरुद्धगामिनोऽपि जिह्मतां तत्यजुः। तदानींहिमालयाधीशोहेमरथाभिधोभूपतिर्वीरमतीवृत्तान्तमज्ञासीत्—पुरासनरेन्द्रोबहुशश्चन्द्रराजेनसमरमूर्ध्नि पराजितोऽभूत्—ततस्तेन चिन्तितमिदानीं मे विजयस्यसमयःसमागतः। इति कृतनिश्चयः स बलवाहनसमेत आभापुरीराज्यंजिघृक्षुः सज्जीबभूव, प्रथमंवीरमतीमबलां मत्वा तेन हेमरथेन पत्रमेकं समर्प्य निजदूत आभानगरींविसर्जितः। दूतश्चाविलम्बितप्रयाणेनभूयसींभूमिमुल्लङ्घ्य वीरमतीमासेदिवान्। विहितप्रणामेन तेन निजस्वामिप्रदत्तोलेखोवीरमत्यै स्वहस्तेनैव समर्पितः, सिंहासनस्थिता साऽपि तंलेखंसत्वरमुन्मुद्र्यावाचयत्—तद्यथा—

रण्डे ? त्वया स्वान्यबलस्य भेदो-न ज्ञात एवात्र विमूढबुद्ध्या । प्रकोपितः क्षत्रियपुङ्गवो यः, स आशु हर्त्ता भवदीयराज्यम् ॥ १ ॥
तस्मात्स्वदेशस्य विधाय रक्षां, भवन्तु सज्जास्तव वीरयोधाः । नाहं बिभेम्यद्य तव प्रकोपा-त्कियद्बलं स्यादबलाजनस्य ॥ २ ॥
इत्थंलेखार्थंविभाव्याशिखाग्रंज्वलन्ती सा रोमाञ्चितवपुरवदत्-रेनिकृष्टमते ? दूतोऽवध्यइतिविज्ञाय तुभ्यंजीवितदानंददामि, सत्त्वरंगत्वा तव स्वामिनंनिवेदय,रण्डासुत ? यदि त्वंमानवस्तर्हिस्ववचनंसत्यंकुरु, शीघ्रमत्रत्वया समागन्तव्यम् । पुनस्त्वंराज्ञी-कुक्षिसञ्जातःस्वमातुश्च स्तनपानंकृतश्चेत्सद्योमद्दृष्टिपथंसमेयाः । यदि च क्षत्रियकुले जातश्चेदस्मिन्कार्ये त्वया विलम्बोन विधेयः । राजन्यकीट ? स्वकटीप्रदेशे, निबद्ध्य खड्गं युधि संप्रयाता । त्वयोर्जितः स्वस्य पराक्रमो द्राक्, प्रदर्शनीयः खलु मेऽबलायाः ॥ १ ॥

पूर्वावस्थांविस्मृत्य कूपदर्दुरवद्वृथा किं प्रगल्भसे ? समरेपराङ्मुखीभूयकियद्वारमितःपलायितंत्वामहंजानामि, सैवाहं वीरमती वीरंमन्या नापरा, यतस्त्वंसङ्ग्रामवार्त्तां स्मरसि ? अस्ति चेत्तदभिलाषा साऽपि पूरयितव्या त्वया, समागमनेन समरे तत्परीक्षा भविष्यति, रेमूढ ! परराज्यग्रहणमभिलषतस्तव स्वराज्यमपि न स्थास्यति, लब्धपक्षापिपीलिका विनाशायैव जायते । तथैवेदं तव चेष्टितंविद्यते, चर्पटिकामात्रेण त्वांमर्दयिष्यामीति त्वया न विस्मर्त्तव्यम् । रेदूताधम ? त्वत्स्वामिने मदुक्तंसर्वंविज्ञापनीयमिति सन्दिश्य सा तंविससर्ज । अथामर्षपूरितोदूतोहेमरथमासाद्य सर्वंतदुक्तं वृत्तान्तंनिवेदयामास, पुनस्तमवादीत्, राजन् ? सिद्धविद्यैषा वनिता नाऽस्माकमभिषेणनीया, तस्या विरोधं वितन्वता भवता साधु नसमाचरितम् । भवत्सन्निधौ कोऽपि तादृशःकार्यकर्त्ता मन्त्रीश्वरोनविद्यते, योहि स्वपरविरोधंशमयेत् !

यतः—कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये, बुद्ध्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः ।

निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै-स्तेषां दुर्नयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम् ॥ १ ॥

यद्यनेन युद्धोद्यमेन स्वाम्यभिघातोभविष्यति चेत्किं लब्धराज्येन? यावत्साम्ना सिद्धिस्तावद्दण्डोद्यमोनिष्फलः।

यतः—सामादिदण्डपर्यन्तो-नयः प्रोक्तः स्वयंभुवा। तेषां दण्डस्तु पापीयां-स्तं पश्चाद्विनियोजयेत् ॥ १ ॥

तथाच—साम्नैव यत्र सिद्धि-र्न तत्र दण्डो बुधेन विनियोज्यः। पित्तं यदि शर्करया, शाम्यति कोऽर्थः पटोलेन ॥ २ ॥

अपि च—आदौ साम प्रयोक्तव्यं, पुरुषेण विजानता। सामसाध्यानि कार्याणि, विक्रियां यान्ति न क्वचित् ॥ ३ ॥

विशेषतःसाम्नैव सिद्धिःसंमता प्राज्ञैः-न चन्द्रेण न चौषध्या, न सूर्येण न वन्हिना। साम्नैव विलयं याति, विद्वेषिप्रभवं तमः ॥१॥

अतोमन्त्रविदंमन्त्रिणमनापृच्छ्य यत्त्वंविजयंसमीहसे तदप्ययुक्तं, यतस्त्वंमन्त्रगतिं न वेत्सि, पञ्चविधोमन्त्रः स च कर्मणा मारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारःकार्यसिद्धिश्चेति, सोऽयंस्वाम्यमात्ययोरेकतमस्य किंवा द्वयोरपि विनिपातःसमुत्पद्येत-मन्त्रिणां भिन्नसन्धाने, भिषजां सान्निपातिके। कर्मणि व्यज्यते प्रज्ञा, स्वस्थे को वा न पण्डितः ॥ १ ॥

तदेतत्कर्त्तुंत्वया न युज्यते, अथवा नाऽयंत्वदीयदोषः किन्तु मन्त्रिणोऽहितोपदेष्टुः, यतस्तद्वचनंत्वंश्रद्दधासि ?

नराधिपा नीचजनानुवर्त्तिनो-बुधोपदिष्टेन न यान्तिये पथा। विशन्त्यतोदुर्गममार्गनिर्गमं,समस्तसंबाधमनर्थपञ्जरम् ॥१॥

एवंविज्ञापितोऽपि मानाहिना संदष्टोहेमरथस्तद्वचनंनाऽमन्यत, सद्यःकृतयुद्धविनिश्चयः स सैन्यं सज्जीचकार, आविष्कृतमदराजी र्गजेन्द्रघंटा हेषारवैर्नादितदिङ्मण्डलान्वाजिगणांस्तत्खुरोत्थपांसून् चक्रनेमेभिश्चूर्णयतोरथवरान् समरमूर्ध्निलब्धविजयान्सुभटांश्च समादाय सामन्तगणपरिवारितो हेमरथोनिरन्तरप्रयाणैराभापुरीपरिसरंसमासदत्। तत्रैव कृतनिवासःस व्यचिन्तयत्—

रण्डांयदेकांप्रविजित्य सद्यः, राज्यं गृहीष्यामिभुजावलेन । क्षणेन तांयाम्यपुरींप्रमत्तां,नेष्यामि किं मेऽत्र विचारणीयम् ॥१॥
इत्थं विचारयन्नाभापुरीविलोकनेन जातक्षोभःस तथैवाऽस्थात् । विज्ञातश्च तेन—आभात्यगम्या रिपुभिर्दुरापै—राभापुरीयं जनयन्त्यधैर्यम् । विलोकिता अन्यपुरः कियन्त्यो—वसुन्धरा भात्यनया पुराऽलम् ॥ १ ॥

अथनिजपुरीपरिसरे समायातंहेमरथंज्ञात्वाऽपि सा वीरमती सुमतिनामानंनिजामात्यंसमाहूय न्यवेदयत्—भो मन्त्रिवर्य ! निजमृत्युमुपेक्षमाणो—मांजेतुमत्र सबलःस हिमालयेशः । आनत्य वेष्टयितुमिच्छतिपत्तनंमे, क्षुद्रस्य सम्मुखमहं न विलोकयिष्ये ॥ १ ॥ तथापि त्वयि मेप्रसादोवर्त्तते, तेन त्वंविजयी भविष्यसि ।

यतः—स्वामिप्रसादमनघं समवाप्य भृत्या—राजन्ति राजपदवीं नितरां वहन्तः ।
आपद्गणं तरति किं न महीयसां यः, सेवारतो हि सफलः स्वमनोरथः स्यात् ॥ १ ॥

तस्मात्त्वमशङ्कितः सैन्यमादाय तत्संमुखंव्रज. काऽपि चिन्ता त्वया न विधातव्या. तवरोममात्रमपि वक्रीकर्त्तुंकः क्षमः ? अतस्त्वं चापध्वनिभिर्दिगन्तान् बधिरयन्विजयंलभस्व. एवंवीरमतीवचनानि निशम्य सुमतिर्निजस्थानमासाद्य सामन्तान्समाहूय कथयति—भोभोः सामन्ताः ? हीनप्रभावोऽयंहेमरथोभूरिसैन्यंसमादाय केनाऽप्यजेयामिमांनगरींविजेतुंसमागतः, तद्विजेता कश्चित्त्वात्रकुलसंभूतोविद्यते किम् ? अस्तिचेत्ससज्जीभूय निजजननींकृतार्थयतु—तेजस्विनः पराभिभवं न सहन्ते, स्वयमेव विक्रमन्ते ।
यतः—मदसिक्तमुखैर्मृगाधिपः, करिभिर्वर्त्तयते स्वयंहतैः । लघयन्खलु तेजसा जग—न्न महानिच्छति भूतिमन्यतः ॥ १ ॥
तथा च—सिंहः शिशुरपि निपतति, मदमलिनकपोलभित्तिषु गजेषु । प्रकृतिरियं सत्त्ववतां, न खलु वयस्तेजसो हेतुः ॥२॥

यदचेतनोऽपि पादैः, स्पृष्टः प्रदहति सवितुरिनकान्तः । तत्तेजस्वी पुरुषः, परकृतविकृतिं कथं सहते ॥ २ ॥

भवादृशेषु सामन्तगणेषु विद्यमानेष्वयंनृपासदोऽस्मान्विजेष्यते तदाऽस्माकंमुखमप्यदर्शनीयं स्यात् । इदंकार्यंपरकीयमिति भवद्भिर्न मन्तव्यम् । निजकुलमर्यादामालोक्य स्वामिनोऽर्थे प्राणा अपि दातव्याः । अन्यथा जीवनंनिष्फलम् । यतः—यज्जीव्यते क्षणमपि प्रथितंमनुष्यै–र्विज्ञानविक्रमयशोभिरभज्यमानम् । तन्नाम जीवितमिहप्रवदन्ति तज्ज्ञाः, काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ १ ॥ यो नात्मजे न च गुरौ न च भर्त्तृकार्ये, दीने दयां न कुरुते न च बन्धुवर्गे । किं तस्य जीवितफलं हि मनुष्यलोके, काकोऽपि जीवति चिरञ्च बलिं च भुङ्क्ते ॥ २ ॥ संप्रति चन्द्रराजस्तु कुक्कुटत्वंप्राप्त इति स्वचेतसि नानेयंसोऽपि युष्माकं सेवां न विसरिष्यति. यतः स नरमूर्धन्यः परोपकृतिरसिकस्तथैवास्माभिरपि वर्त्तितव्यम्—

द्वौ पुरुषौ धरति धरा–थवा द्वाभ्यामपि धारिता धरणी । उपकारे यस्य मति–रुपकृतं यो न विस्मरति ॥ १ ॥

इत्थंमन्त्रिवचनविश्वस्ताः सामन्ताः सज्जीभूय जगुः–सचिवेश्वर ! क्षत्रियास्तुप्राणान्तेऽपिस्वामिकार्यविमुखा न भवन्ति पुनश्चन्द्रराजसेवकानामस्माकं किमुवक्तव्यम् ?—

यश्चन्द्रराजभुजपञ्जरपालितोऽस्ति, वीरः स युद्धविमुखो न भविष्यति प्राक् ।
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः, प्राणैरपि प्रधनमूर्धनि संस्थितानाम् ॥ १ ॥

अथ सर्वेषामैकमत्यंविज्ञाय सज्जीकृतसैन्यः सचिवः सद्यः प्रयाणदुन्दुभिंवादयन् पुरतोवहिर्निश्चक्राम. यतः—महौजसो मानधनाग्रयायिनो–नसंहताः संयति लब्धकीर्त्तयः । प्राणव्ययं नो गणयन्ति सौभटा–इच्छन्ति चान्यस्य सदा पराजयम् ॥१॥

युद्धकालेऽग्रगो यः स्या–त्सदा पृष्ठानुगः पुरे । प्रभोर्द्वाराश्रितो हर्म्ये, स भवेद्राजवल्लभः ॥ २ ॥

अहमहमिकया संपततोरुभयोः सैन्ययोर्वीरभटा निजविजयमिच्छन्तोदृष्टियुद्धंवितेनिरे. तद्भारावनतंधरणीतलंनिम्नोच्चगतिंकुर्वदिव दोलायमानमलक्ष्यत. यतः–अनेकराजन्यरथाश्वसंकुलं, भयप्रदं भीरुजनस्य वीक्षणात् । रणाऽजिरं जित्वरमोददायकं, बभूव देवाऽसुरविसयावहम् ॥१॥ वाद्यान्यनेकानि नदन्ति दन्तिनो–मदप्रवाहं जनयन्ति संगरे । तुरङ्गमा वायुविजित्वररया–हेषन्ति दिक्चक्रमिवाशु लङ्घितुम् ॥२॥ अथहेमरथोनिजबलोपेतोऽपेतदैन्यः सिंहनादंविधाय स्वसामर्थ्यंद्योतयन्नाह—सुमते ! नयकर्मकोविदस्त्वं, कथमत्रागमनं त्वया व्यधत्त । सुभटोचितसङ्गरेषु वीरान्, जयलक्ष्मीर्वृणुते हि नान्यलभ्या॥ १ ॥

इत्थंतद्वचनमाकर्ण्य शिथिलीभूतमानसान्निजसुभटान्समुत्साहयन्सुमतिः प्राह—विज्ञात एवास्ति तव प्रभावो–ममाऽपि हे हेमरथप्रजेश ! । कियच्चिरं तिष्ठति कातरत्वं, सुगोपितं भीरुजनस्य सङ्गरे ॥ १ ॥ इत्थंविवदमानयोरुभयोः सैनिका रिपुरोषारुणितनेत्रा मिथो जिघांसवः पर्यपतन्—तद्यथा—परितः परिवव्रुस्ता–वन्येऽप्येत्य नराधिपाः । चतुरङ्गबलोपेता–श्चतुरम्बुधिविश्रुताः ॥ १ ॥ प्रयाणतुर्यनिर्घोष–संमिलत्सर्वसैनिकाः । तेषां बह्वादिसंख्येव, व्यक्तेयत्ता न विद्यते ॥ २ ॥ तुरङ्गिणां पदातीनां, रथिनां गजरोहिणाम् । यस्य येन समा कक्षा, स तमाह्वास्त वीतभीः ॥ ३ ॥ युद्धमार्गविदो युद्ध–मारभन्त महाभटाः । प्राणैरस्थास्नुभिः स्थास्नु, यशश्चेतुमभीप्सवः ॥ ४ ॥ निजेपुरचितस्फार–मण्डपोत्सारितातपाः । तत्र नाज्ञासिषुर्योधाः, प्रहरन्तः परिश्रमम् ॥ ५ ॥ स्वामिसंमानयोग्यं य–द्यत्स्वसंमाननोचितम् । यच्चाज्ञायसमं तत्ते, सारं सारं ढुढौकिरे ॥ ६ ॥ शस्त्रप्रहारैर्गुरुभिः, समुदायेन योजितः । तेना-

मर्षात्पुनः सोऽस्त्र-समुदायेन योजितः ॥ ७ ॥ कस्याऽप्यश्वगतस्येभ-कुंभं निर्भिन्दतोऽसिना । ततः पतन्त्यभात्पुष्प-वृष्टि-वन्मौक्तिकावलिः ॥ ८ ॥ योधाः शस्त्रचताः पेतु-र्भूरितापा रणाशयाः । भूतैर्बुभुक्षितैर्युद्ध-भूरिता पारणाशया ॥ ९ ॥ भग्ने चापे गुणे च्छिन्ने, रिक्तीभूते च बाणधौ । कस्याऽप्यासीद् द्विपा, दीर्घं दण्डादण्डि कचाकचि ॥ १० ॥ श्रुतप्रभावा इह केऽपि वीरा-अभिन्नभावाः चतवैरिवाराः । वितेनिरे मल्लजनैरलभ्यं, युद्धं समंताद्विजयाभिलाषाः ॥ ११ ॥ सुकविवचनंसत्यापयन्निव कश्चिद्विजयलक्ष्मीवुवुर्षुर्निजदृष्ट्या ब्रह्माण्डंलक्ष्यीचकार, संग्रामरसपिपासवःकेचित्कुन्तलाहततुरङ्गमस्कन्धा निजंपौरुषंप्रकटीकुर्वन्तोऽवदन् ॥ हे चत्रवंशतिलका ? युधि संप्रयाताः, शस्त्राऽस्त्रवृष्टिमनिशं परितः सृजन्तः । संभिद्य वैरिवलमुत्कटमाशु यूयं, तृप्तिं प्रयात परिपूर्णवलप्रभावाः ॥ १ ॥ संभृतशुद्धोदका तीर्थभूमिकेव वीरगणव्याकुला निशितासिधाराभिर्विद्युल्लवांविभ्राणा रणभूमिरियं विद्योतते. केचिच्च सिंहध्वनिमप्रमेयं, निशम्य लक्ष्यीकृतचापबाणाः । निजेतराञ्जेतुमखण्डवेगा-दिगन्तरं व्याकुलयन्ति नादैः ॥ १ ॥

उभयोः सैनिका विमुक्तवल्गंतुरङ्गमान्प्रेरयामासुः । समुद्धतवाजिनांप्रखरखुरोद्धूतेन रजःपटलेन संग्रामस्तम्भस्तम्भितमिव नभोमण्डलमदृश्यत । पदाघातैर्भूतलं कम्पयन्तो विजयलक्ष्मीमाकांक्षमाणा मिथो वल्गन्तःसमे सुभटा एकैकोपरि ढुढौकिरे । परिहितवर्मणां तेषां खड्गधारा विद्युल्लतामधरयन्ति स्म, करश्रेणिस्थितास्तिर्यक्प्रहृता निशातभल्लामिथो नमस्कारं कुर्वन्त इव समलक्ष्यन्त । धानुष्कधनुर्विनिर्गता आशुगा दृष्टाऽदृष्टलक्ष्यभिदोदृष्टिमार्गमत्यक्रामन् । ब्रह्माण्डंस्फोटयन्त्य इव शतशःशतघ्न्यो वधिरानपि बोधयामासुः। केचित्कातरा आशंसितजीविताशा विजयाशांपरित्यज्यपलायन्ते स्म, अपरे पुनस्तेषां गृहीतपृष्ठास्त-

रपदवीमन्वसरन् । केचित्तु दूरमुज्झितशस्त्रास्त्राःपलायनमेव शुभं मेनिरे, केचित्पुनर्भयान्विताःपूचक्रुः, प्रचण्डौजसःकेऽपि वीररसमुद्वमन्तोयुद्धक्रीडांवितेनिरे, केऽपि संग्रामकेलिनिरीक्षितुमपारयन्तश्चकम्पिरे, उद्भटसुभटवेगमसहमानाःकेचिद्भूपीठंशरणीचक्रुः । खड्गधाराभिः खण्डशःखण्डिताःकेचिच्छलभलीलामवापुः । केऽपि दन्तिनोदन्ताघातैस्तुरङ्गमाश्चीवितोद्विग्नान्वितेनुः । केकिनांवर्हभारा इव महारथ्यतिरथिनोऽपि चूर्णिताङ्गा मूर्छामवाप्य भूमौ निपेतुः । केचित्सुभटाः खड्गप्रहारैर्भिन्नोत्तमाङ्गा दिव्यलक्ष्मीं लेभिरे, साक्षाद्वीररसजननी वाहिनी सर्वतःसौदामिनीव दिवौकसामपि विस्मयं जनयामास ॥ वीरंमन्या महावीरा–वीरादन्यरसो भुवि । नास्तीतिवादिनस्तृप्तिं, तद्रसेनैव मन्वते ॥ १ ॥ इत्थमुभयोः सैन्ययोर्विस्मयजनके जन्ये जाते शोणितापगा सुभटशिरःकमलराजिराजिता मुक्तमर्यादा वहति स्म । योगिनीखेचरीणां यूथानि कौतुकितानि तत्र स्वैरंविचेरुः । गृध्रादीनांतुष्टिदायके समरमुखे सुमतिमन्त्रिणि गर्जति सति हेमरथसैनिका गोमायव इव पलाय्य क्वाऽप्यदर्शनंप्रापुः । ततो लब्धावसरेण सुमतिना हेमरथोमयूरपाशेन निबध्य स्वाधीनीकृतः । सुमतिमन्त्रिणोविजय इति सर्वैरेकमुखेनाऽवादि, गतागतंकुर्वती जयलक्ष्मीश्च स्वयमेवैतंववे । अथलब्धविजयः सुमतिर्विजयदुन्दुभिनादैर्दिशोबधिरयन्नाभानगरींससैन्यः प्राविशत् । वीरमतीमभ्येत्य विहिताञ्जलिना तेन हेमरथोऽवनतमुख उपदीकृतः । चौरवन्निबद्धं तं विलोक्य वीरमती जगौ–रेवीरंमन्य ! त्वद्बलस्य परीक्षा जाता ? चिरन्तनस्त्वं मे दास इति मया सह योद्धुमिच्छता भवता प्रथमतःकिं न विज्ञातम् ? रे मूढ ? किं न जानासि ? मत्पराक्रमम् । मम मन्त्रिणाऽपि तव पराजयोविहितः, ब्रूहि, आवयोर्मध्ये का स्त्री ? अद्याऽपि त्वयाऽऽभापुरीपरिसरो न दृष्टः ? यदत्र तवागमनाभिलाषा सञ्जाता ? न विस्मर्त्तव्यमेतत्—

त्वत्तुल्यदन्तिदमने निशिताङ्कुशोऽहं, श्येनो भवादृशपतत्रिवधेऽहमस्मि । गोमायुभापनविधावहमस्मि सिंहो,–रेक्षुद्र ? किं मम पराक्रमतां न वेत्सि ? ॥ १ ॥ निर्लज्ज ? कस्तव समो भुवनेऽन्य आस्ते, निस्त्रिंशभावहसि केवलभारभूतम् । राज्यं दधासि मदनुग्रहतः समानं, निर्मानमोहपदवीमधुना भजस्व ॥ २ ॥ एवमनेकधा वचनप्रहरणैस्तंजर्जरीकृत्य साऽमर्षपुरितास्या तिरश्चकार, सुमतिप्रमुखंसामन्तमण्डलंसन्मान्य वीरमती स्वस्वस्थानंव्यसृजत ।

इति श्रीचन्द्रराजचरित्रे तृतीयोल्लासे षष्ठः सर्गः ॥ ६ ॥

ततःसुमतिमन्त्री वाचोयुक्त्या वीरमतींप्रज्ञाप्य तं हेमरथंबन्धनान्मोचयामास, वसनादिकेन सत्कृत्य भोजनञ्च कारयित्वा तं तोषयामास, तदनुवीरमत्याभणितम्—ममाज्ञामुररीकृत्य, वर्त्तितव्यं सदा त्वया । नृपाऽधम ! मम ध्याना–त्तवास्तु मङ्गलं शुभात् ॥१॥ हेमरथोऽवादीत्—मातर्मत्वा त्वदीयाज्ञां, वर्त्तिष्ये सततं मुदा । अज्ञानतः कृतं मन्तु–मिमं मे क्षन्तुमर्हसि ।२॥

ततोवीरमत्याऽनुग्रहीतोहेमरथस्तत्पादौ प्रणम्य स्वस्थानं जग्मिवान् । अथाऽन्यदाऽनेककलाकुशलःशिवकुमारनामा कश्चिन्नटःपरिभ्रमंस्तत्र समागतः । तेन सार्धनाट्यकलाभीरञ्जितराजलोका नरपश्चशत्यभूत् । स च नटाधिपो नाट्यकलासु सर्वत्र लब्धकीर्त्तिरभवत्–राजसभां प्रविश्य स वीरमतींसविनयंप्रणम्य प्राह—श्रीमति ? त्वत्प्रसादेन, दर्शनं तव मेऽजनि । महतां दृष्टिमात्रेण, मादृशानां हि जीवनम् ॥ १ ॥

वीरमती दृष्टिक्षेपेण तं पृच्छति,–नटाधिप ? त्वमायातः, कुतः पेटकसंयुतः । राजन्तेऽसमये नैव, मौक्तिकाभरणान्यपि ॥१॥

सविनयं नटोभणति–वीरराजाङ्गने ? मात–स्तत्र ख्यातगुणान्स्मरन् । उत्तराशास्थितान्भूपा–नञ्जयन्नागतोऽस्म्यहम् ॥ २ ॥

तथा च—आभापुरी पूर्णविभा श्रुता मया, तथैव दृष्टाद्य विलोकनोचिता। यदीयसंपत्तिसमानतामिह, समादधाना नगरी न चापरा॥३॥ सौम्याकृते ! सभ्यजनैः समेता, कृपावती त्वं भवताच्छतायुः। नराधिपानां कुशलेन लोका—भजन्ति सौख्यं सुकृतैकभाजः ॥४॥ इच्छामि मातस्तव भावि शासनं, दारिद्र्यमुद्राविविघट्टनक्षमम्। प्रसादयित्वा नटविद्यया त्वकां, कलां स्वकीयां सफलामवैम्यहम् ॥५॥

वीरमती भणति—नटाधीश ! निजकलां दर्शय, ततोगृहीताज्ञःशिवकुमारोनाट्यसंभारानमेलयत्। नर्त्तका अपि निजस्वामिनोनिदेशमवाप्य स्वस्वकर्म प्रविधातुंतत्परा अभूवन्। अथशिवकुमारःसज्जितवेषोरङ्गभूमिमवतीर्य नवीननाट्यकलाभिर्वीरमतींस्थिरदृष्टिं चकार, तदानींपटहादिध्वनिंश्रुत्वा गुणालयो गुणावल्यपि निजोत्सङ्गे पञ्जरस्थितंचन्द्रराजंनिधाय गवाक्षे समुपविश्य तत्प्रेक्षणकमद्राक्षीत्। ततोऽखिलनाट्यकलाकलिता शिवमालाऽभिधाशिवकुमारसुता निजकलालालित्यंप्रदर्शयितुंसज्जीबभूव। नर्त्तनाय महोत्तुङ्गो—वंश ऊर्ध्वीकृतः क्षितौ। स्वर्गारोहकृते स्तम्भ—इवादृश्यत तात्त्विकैः ॥ १ ॥ रज्जुभिः सर्वतो बद्धो—लोकाकार इव स्थितः। तदग्रे स्थापितं चैकं, क्रमुकं युक्तिपूर्वकम् ॥ २ ॥ तदन्तिके समागत्य, शिवमाला कृतानतिः। चन्द्रराजजयं प्रोचे—रुच्चार जनैः सह ॥ ३ ॥ तत्पिता प्राह तां पुत्रि !, सावधानतया त्वया। दर्शनीयं निजं दाक्ष्यं सभ्यतुष्टिकरं वरम् ॥ ४ ॥ यतः—आपरितोषाद्विदुषां, न साधु मन्ये प्रयोगविज्ञानम्। बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ ५ ॥ यद्यत्र राजसमितौ लब्धकीर्त्तिर्भविष्यसि तर्हि तव कलाकौशल्यंफोपयोक्ष्यते ?—अवसरं प्राप्य योमूढः, स्वहितं नसमीहते। लोकवाह्यः स विज्ञेयः, को हि कीर्त्तिं न काङ्क्षते ॥१॥ साऽपि निजपितृवचनंसंस्मरन्ती पक्षिणी नभस्तलमिव तद्रज्जुमालम्ब्य वंशाग्रमारुहत्। ततोवंशाग्रस्थितपूगीफले स्थापितनाभिःसा निम्नमुखी चक्रवद्भ्रमत्। तदधोभागे पटहवादकाः सकलंपटहा-

नवादयन्त। केचिच्च तद्गिरत्नोऽखण्डितोर्ध्वदृष्टयस्तामेव ध्यायन्तस्तस्थुः। कुलालचक्रवच्छरीरंभ्रमयन्ती सा मध्येपरावृत्त्य क्रमुकाग्रे निहितमस्तकोर्ध्वीकृतक्रमयुगला तापसीव बभौ—भ्रमन्ती सा पदं वामं, संस्थाप्य क्रमुकोपरि। अलक्षितगतिश्चक्राकारमभ्रमदन्यथा ॥१॥ कौतुककारिणीमिमांतत्कलांनिरीक्ष्य सकलनरनार्योनिहितमुखाङ्गुलिका अभूवन्। ततोवंशाग्रे संस्थिता सा पञ्चवर्णांशिरोवेष्टनपट्टिकांगृहीत्वा पुष्पमालामिवाऽग्रथ्नात्। इत्थंदर्शितनाट्यकलाकौशलांशिवमालांशिवकुमारोऽवदत्—सुते! समस्तेयंपरिषत्तव कलाकौशलेन सन्तुष्टाऽजनि, अधुना नीचैरवतर, इतिनिजजनकादेशमवाप्य साभुजगीवद्वरकमवलम्ब्य भूप्रदेशमासदत्—भूमिस्थिता सादितनूतनजन्मा, स्वज्ञातिवर्गैरखिलैरिवाऽसौ। आश्लिष्यताऽऽनन्दभरेण भूयो—गुणाहि सर्वत्र पदं लभन्ते ॥१॥ अधःपतनभयनिवृत्ता नटाश्चन्द्रराजजयंब्रुवाणाःपटहध्वनिंकुर्वाणा वीरमतींपारितोषिकमयाचन्त—चन्द्रराजः सदा जीया—द्राजेन्दुरपरः क्षितौ। राजन्वती त्वनेनोर्वी, नृपाः सन्तु सहस्रशः ॥१॥ कामं गावो घटोध्न्यस्तु, बम्भ्रमन्ति धरातले। कामगव्यो जनत्रास—शमने सर्वदा क्षमाः ॥ २ ॥ श्रोत्रपुटयोस्तप्तत्रपुसमामेतेषांवाणींनिशम्य राज्याभिमानमावहन्ती वीरमती काकिणीमात्रमपि द्रव्यं तेभ्योनायच्छत्। अलब्धमनोरथा नटाः पुनरनेकधा कलाकौशल्यमदर्शयन्। ततश्चन्द्रराजस्य जयशब्दमुच्चैरुदीरयन्तःसर्वे नटा निबद्धाञ्जलयोवीरमतीमयाचन्त, तदानीमपि रुष्टया तया मनागपि दानबुद्धिर्नविहिता, इतरे जना नाट्यकलांनिरीक्ष्य भृशंमोदमाना दानं दातुं समुत्सुका अपि निजस्वामिनीमवधीरयितुंनाशक्नुवन्—स्वामिन्यग्रे नो समर्था हि भृत्याः, कार्यं कर्तुं बुद्धिमन्तोऽप्ययुक्तम्। कृत्याऽकृत्यं ये विजानन्ति लोके, तेषां प्रज्ञा शस्यते तात्त्विकानाम् ॥ १ ॥

अथाऽस्मिन्नवसरे पञ्जरस्थःकुकुटोव्यचिन्तयत्-इदं नटपेटकं मदीयं यशोवर्णयति, ततो मे विमाता तदसहमाना पारितोषिकं तस्मै न यच्छति, यदीमे नटा दानविमुखा भविष्यन्ति चेद्देशान्तरगता मदीयांदुष्कीर्त्तिंप्रथयिष्यन्ति. यतः-संमानिता मानधनेन लोकाः, स्वजीवितेनाऽपि हितङ्कराः स्युः। तातेतिसंबोधनमात्रनुन्नो-वृषोऽतिभारं वहते नियुक्तः ॥ १ ॥

तथा च—दानजिघृक्षया सर्वे, वैषम्यं नैव मन्वते। स्वार्थैकसाधने सक्ताः, कार्याऽकार्यं न जानते ॥ २ ॥ तस्माद्दानन्त्वेषामवश्यंमया दातव्यमन्यथा मे कीर्त्तिःकथं स्थास्यति ? एवंवितर्कयन्स निजपञ्जरशलाकाश्चरणाघातेनाऽपसार्य रत्नखचितंसुवर्णकचोलकमेकंचञ्च्वागृहीत्वा तेषामग्रेप्राक्षिपत्। अधःपतितंतद्विलोकमानःशिवकुमारोझटिति तद् गृहीत्वा चन्द्रराजोविजयतामिति जयघोषणामकरोत्। तदनु पटहवादकेनाऽपि तज्जयपटहोभृशंताडितः। ततोऽखिलजना वीरमतीमनादृत्य सर्वतोविविधवसनाऽलङ्कारान्प्रदातुंलग्नाः। शिवकुमारस्तु वसनविभूषणानांप्रभूतंराशिंविलोक्य भृशंप्रमुदितोजज्ञे, नटा नट्यश्च स्वस्वोचितवस्त्रविभूषणैःशरीराणि व्यभूषयन्। परिहिताऽमूल्यनेपथ्यास्तेऽपि नवीना इवालक्ष्यन्त, शिवकुमारोनिजकर्मणि सिद्धिमानभूत्। वीरमत्याःकुमत्या वपुषि वन्हिज्वाला प्रवर्द्धिता परितःप्रासरत्। शिवकुमारोऽपि चन्द्रराजजयमुच्चारयन् गृहीतवीरमत्याज्ञोनटैःसार्द्धं स्वस्थानमगात्। वीरमत्याःप्रकोपस्तु प्रतिक्षणंवृद्धिमवाप, ततोज्वलितमानसया तयाऽवादि—मयि सदसि तिष्ठन्त्यां, ददद्दानं हि कोऽबुधः। यमस्य सदनं वाञ्छत्यसुखायितमानसः ॥ १ ॥ पश्याम्यहंकस्येयंदानशौण्डीरता परिस्फुरति ? मातृगृहेऽसौ वृद्धिंगतोदृश्यते, मच्छिक्षणाद्विमुखीभूतंतमिदानींकिंकरोमि ? मद्दृष्टिपथं स नायातः। तस्यायुर्बलंबलिष्ठंविधवे, यतोऽस्मात्स्थानात्स जीवन्नेव विनिर्गतः। पञ्जरगतेन चरणायुधेन प्रथमं पारितोषिकं प्रदत्तमिति सान्निधि-

स्थाऽपि वीरमती नाज्ञासीदतःसा तस्मै नाकुप्यत् । अथसमयज्ञस्तन्मन्त्री भणाति स्म–भगवति ? मातः ? भवत्या रोपविधाने कारणं न विद्यते, निजबालानामपराधंमाता हितैषिणी सदैव सहते.

यतः––निजापत्यकृतान् दोषान्, सहते जननी निजा । पिपासुनाऽपि वत्सेन, पीडिता गौः पयःप्रदा ॥ १ ॥

योऽत्राग्रतो दानविधानदत्त-स्तेनाऽपि मातस्तव शुभ्रकीर्तिः । यो वीरमानी युधि संप्रयात-स्तल्लब्धकीर्त्तिर्नृपगामिनी हि ॥२॥

स्वामिनि ! ये दानदत्तास्ते निजस्वामिनोनिर्मलंयशःश्रुत्वा प्रच्छन्ना न तिष्ठन्ति, ये केचन दानंवितीर्य निजस्वामिनोऽनृणत्वमैच्छंस्ते सकला अपि त्वद्भुजपालिता भवदीयाःप्रजाःसन्ति. निजबाला जनन्यग्रे चापलक्रियां कुर्वन्ति, तत्र तव कोपस्य कारणं नास्त्येव । इत्थंमन्त्रिणा बोधिताऽपि सा तद्वचनंनाऽमन्यत, भृशंक्रोधाकुलाऽजनिष्ट, ततोविसृष्टराजसभा कोपाक्रान्तमानसा वीरमती निजस्थानंजगाम, दिवानाथोऽपि तदुःखदुःखित इव क्षणादस्तङ्गतः। विहितसान्ध्यकर्मा सा सुखशय्यामभजत्, चिन्ताचान्तचेता इतस्ततोविलुठन्ती सा तुलिकासनाथेऽपि सुखासने क्षणमपि निद्रासुखं न लेभे. यतः—चिन्ता चितासमा प्रोक्ता, बिन्दुमात्रविशेषतः । सजीवं दहते चिन्ता, निर्जीवं दहते चिता ॥ १ ॥ चिन्ता जरा मनुष्याणा,–मनध्वा वाजिनां जरा । असंभोगो जरा स्त्रीणां, वस्त्राणामातपो जरा ॥ २ ॥ चिन्तातुराणांनसुखंननिद्रा, कामातुराणां नभयं नलज्जा । अर्थातुराणां नगुरुर्नबन्धुःक्षुधातुराणां न रुचिर्न वेला ॥ ३ ॥ पुनःसा व्यचिन्तयत्–अहो ! अखण्डितशासनां मामवगणय्य केन मुमूर्षुणा प्रथमतोदानप्रदानाय करःप्रसारितः ! इति चिन्तातुरायां तस्यां रजनी विभाता–कुमुदवनमपश्रि श्रीमदम्भोजखण्डं,

त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरोचिर्याति शीतांशुरस्तं, हतविधिलसितानां ही विचित्रो विपाकः ॥ १ ॥ नभसि विरलतारा मौक्तिकानीव भान्ति, स्फुटतरमयमस्तक्ष्माधरं चुम्बतीन्दुः । रविरुदयधरित्रीधारिमूर्धानमेतुं, हृदयमनु नितान्तोल्लासमङ्गीकरोति ॥ २ ॥ तथा च—अभूत्प्राची पिङ्गा रसपतिरिव प्राप्य कनकं, गतश्छायश्चन्द्रो-बुधजन इव ग्राम्यसदसि । चयं चीणास्तारा नृपतय इवाऽनुद्यमपराः, न दीपा राजन्ते, द्रविणरहितानामिव गुणाः ॥ ३ ॥ अन्यच्च—यात्येकतोऽस्तशिखरं पतिरोषधीना-माविष्कृतारुणपुरःसर एकतोऽर्कः । तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां, लोको नियम्यत इवैष दशान्तरेषु ॥ ४ ॥ उदयाचलचूलां समारूढे दिनकरे दीनमतिर्वीरमती सदोगृहमभ्येत्य निजाधिकारिणो वरिष्ठान्पौरांश्च समाहूतवती, संभृतराजसभा सा तमेव नटं समाकार्य पुनर्नाटकंविधातुंसमादिशत् । लब्धादेशेन तेनाऽपि धनलीप्सया तत्कालमेव सकलसामग्रींसज्जीकृत्य रंगभूमेर्मध्यभागेवंशदण्डः समुत्खातः । तदानीम्—गुणावली हाटकपञ्जरस्थं, भर्त्तारमादाय निजे गवाक्षे । नवं नवं नाटकमीक्षितुं सा, तस्थौ हि किं दुःखिजनस्य दुःखम् ॥ १ ॥

शिवकुमारोऽपि नाटकंप्रारभत—भरतादीन्यनेकानि, नाटकानि वराणि च । प्रदर्शितानि नव्यानि, सभ्यचेतोजिहीर्षुभिः ॥ १ ॥

ततोदानलीप्सुर्नटाधिपश्चन्द्रराजोविजयतामित्यसकृज्जापमाणोवीरमत्याःसमीपमागतः । चन्द्रराजजयंनिशम्य निजमात्मानं दासीमिव मन्यमाना सा भूरिविषादंलेभे । मौनमुखी च किमपिनाऽवोचत्—पारितोषिकप्रदानाय तया करोऽपि न प्रसारितः । ततःपौरा धनंदित्सवोऽपि वीरमतीमुखच्छविंविलोकमानास्तथैवाऽस्थुः । नटमण्डलंसचिन्तंजातम्—किमद्य वीरमतीयं, विरमत्येव दानतः । कला मे सफला लोके, विफलाऽद्य कुतोऽजनि ? ॥१॥ विचित्रमस्या हृदयं, मया न ज्ञातमर्थिना । क्षुद्राणामर्थने

लाभो-दुःखदायी हि केवलम् ॥२॥ शिवकुमारःपरितोदृष्टिंप्रसार्य—लवणेन विना शाकं, सेना च गजवर्जिता। पत्रहीना यथा वल्ली, विचन्द्रेयं तथा सभा ॥१॥ तदानींमुहुर्मुहुर्गीयमानं निजयशः क्षीरंश्रोत्रपुटाभ्यांनिपीय विमातुश्चनिर्भयश्चरणायुधश्चरणाघातेन लक्षनिष्कमूल्यं रत्नकच्चोलकंपञ्जरादधःप्राक्षिपत्। तदेकध्यानेन शिवकुमारेण पतदेव तत्सत्वरंनिजकराभ्यांगृहीतम्। ततःस चन्द्रराजजयंवदमानोऽन्यानभ्यर्थयामास, प्राग्वदेव सोत्कण्ठैःसर्वैस्तदिच्छाधिकमनर्गलंदानंप्रदत्तम्। प्रजानांतदत्याचारंविलोक्य स्मृतकुक्कुटाविनया भृशंरुष्टा वीरमती विकोशं खड्गंसमादाय सपञ्जरा गुणावली यत्रोपविष्टा तत्र गत्वा प्राह—रे! दुष्ट! पञ्जरगतोऽपि किमद्य लज्जां, धत्से न कुक्कुटगणाधम? किं ब्रवीमि। पूर्वं त्वया विसरणं कुत एव मत्तो—कारिष्ट तत्फलमनल्पमथो लभस्व ॥१॥ इदानींत्वांयमसदनंनेष्यामि, निजेष्टदेवतांस्मर, एवंनिर्भर्त्स्य खड्गप्रहारेण तंद्विधाकर्तुंसमुद्यतायांतस्यांगुणावली मध्येपतित्वाऽवदत्-मातः? किं ते ह्यविज्ञातं, दानदक्षो विहङ्गमः। काऽपि दृष्टः श्रुतो वाऽपि, घटतेऽस्मिन्न रोपता ॥१॥ कोपबुद्धिर्न ते युक्ता, पक्षिमात्रे धराधिपे। समाने युज्यते रोषो,--न तु पुष्टविपुष्टयोः ॥२॥ दीनतां चास्य संप्रेक्ष्य, दण्डनीयो न कर्हिचित्। नयशास्त्रविदां मात-र्मोचनीया न पद्धतिः ॥ ३ ॥ जलंपिबतस्तस्य पक्षस्पर्शेनेदंकच्चोलकंपतितंतदनेन नटेन गृहीतम्। तत्र तस्य को दोषः! पक्षिणांनादृशोविवेकःकुतःसम्भवति? अतोऽस्मिन्कोपाविर्भावोविवेकवत्यास्तव नोचितः, पक्षित्वमनुभवन्नसौ त्वत्कृपया स्वनिर्वाहंकरोति, मातरसौ दयापात्रंविद्यते, इत्थंप्रार्थयन्त्या गुणावल्या वचनं श्रुत्वा पौरा अपि तत्र समेत्य वीरमतीमकृत्यान्न्यवारयन्। ततोनिवृत्ता सा सभायांसमागत्य स्वासनमसेवत, स्वोचितदानलाभेन नटाःप्रमोदमवापुः। शिवकुमारेण

पुनर्वीरमतींप्रमोदयितुंनाटकंप्रारब्धम्, गृहीतजनकादेशा शिवमालाऽपि वंशाग्रमारुह्य पञ्जरस्थाभिलक्ष्य नृत्यकलांप्रारभत। तदानीमियंपक्षिभाषांजानातीति विज्ञाय कुक्कुटोनिजभाषया शिवमालांप्रत्यबोधयत्—नर्त्तकि ? स्वकलादक्षा, विद्यसे सत्यवादिनी। पक्षिभाषाचणाऽतस्ते, मद्वृत्तान्तं ब्रवीम्यहम् ॥ १ ॥ त्वत्कलारञ्जिता राज्ञी, मार्गयेष्टमिति त्वकाम्। वक्ष्यत्यहं तदा याच्य—स्त्वयाऽनन्यधिया बुधे ? ॥ २ ॥ तदग्रे किमप्यन्यत्त्वया न मार्गणीयंलोभान्वितधिया, मद्वचनमवश्यंपालनीयं, सत्यमहंब्रवीमि। मृत्युमुखादयंदीनविहगोरक्षणीयस्त्वया, यावज्जीवंत्वदुपकारं न विस्मरिष्यामि, त्वदीयांधनाशामहंपूरयिष्यामि, मद्वृत्तान्तमामूलंसर्वंपश्चात्त्वांरहसिनिवेदयिष्यामि, मदुक्तंवचनंत्वया साधनीयमेव। इत्थंतदीयांमन्दोक्तिमाकर्ण्य शिवमालाऽपि ज्ञाततारा नाटकान्ते वंशादुत्तीर्य निजजनकंरहसि नीत्वा चरणायुधगदितवार्त्तां निवेदयामास—हेतात ? मद्वचनतश्चरणायुधोऽयं, याच्यस्त्वया सकलदीव्यनिधानभूतः॥ सिद्धिर्भविष्यति परोपकृतिप्रभावा—दस्मन्मनोरथचयस्य कुतोऽन्यवाञ्छा ? ॥ १ ॥ शिवकुमारोऽपि निजपुत्रीवचनंप्रमाणीकृत्य वीरमतीमभ्येत्य तद्यशोगानंकुर्वन् दानजिघृक्षया तत्रैव तस्थिवान्। सुधासोदरंवर्ण्यमानंनिजयशःपीत्वा सा भृशं तुतोष, ततस्तंनटंनिजान्तिके समाहूय तया स भणितः—

नटाधीश ? वरं सद्यो—याचस्व हृदयप्रियम्। तुष्टासि त्वत्कलां वीक्ष्य, वीक्षणीयां महीभुजाम् ॥ १ ॥ कलास्तु बह्वो दृष्टा—नटानां देशचारिणाम्। इयन्त्वपूर्वा लोकानां, विद्यते चित्तहारिणी ॥ २ ॥ लब्धावसरः शिवकुमारोऽवादीत्। यदि मातः ? प्रसन्नाऽसि, कुक्कुटोऽयं समर्प्यताम्। अनेनैव प्रसन्नोऽस्मि, नान्यदिच्छामि साम्प्रतम् ॥ १ ॥ मत्पुत्री शिक्षते राज्ञि ?, कुक्कुटस्य गतिं सदा। अतः प्रदाय तं भव्यं, निर्वृत्तिं भज भावतः ॥ २ ॥ स्ववधूकृते त्वयाऽन्यपक्षचरणायुधः पालनीयः, न

तेऽत्र लोके किमप्यनवाप्यमस्ति–मातस्त्वत्कृपयाऽस्माकं, वित्तवाञ्छा न विद्यते। यदि स्यात्तर्हि लोकेऽस्मि–न्विद्यन्ते बहवो नृपाः ॥ १ ॥ इतिदृढाग्रहपरंशिवकुमारं विदित्वा वीरमती प्राह–रे मुग्ध ! किमिदं याचितम् ?–संप्राप्य मादृशीं दात्रीं, किमु तुच्छं हि याचसे। गजाश्वरत्नसंपत्तिं, विमुच्य त्वं विमोहितः ॥ १ ॥ पक्षिदानेन मे कीर्त्ति–श्चिरस्थायिनी नश्यति। पक्षिदानं श्रुतं ? क्वाऽपि, त्वयाऽपि देशचारिणा ॥ २ ॥ किञ्च—मया वध्वाः प्रमोदाय, रक्षितोऽयं प्रयत्नतः। तुभ्यं ददामि चेन्नूनं, विषादार्त्ता भवेद्धि सा ॥ ३ ॥ अतस्तमन्तरा मनोवाञ्छितमन्यद्याचस्व, तदाशयज्ञः सोऽवादीत्—राज्ञि ? विहगदानेन, त्वत्कीर्त्तिः स्फूर्त्तिमाप्स्यति। प्रार्थितस्य प्रदानेन, दातृत्वं श्लाघ्यते बुधैः ॥ १ ॥ मातर्जानाम्यहं सर्वं, प्राणेभ्योऽप्यतिवल्लभः। तवाऽयं विहगो रम्य–स्तथाऽपि मम दीयताम् ॥ २ ॥ इमं ददासि नो मह्यं, किमन्यत्त्वं प्रदास्यसि। परीक्षणं जनानां हि, प्रतिस्थानं प्रजायते ॥ ३ ॥ तथाविधंतस्याग्रहंविज्ञाय तया विविधयुक्तिभिर्विबोधितोऽपि स निजाग्रहं न शिथिलीचकार, तदोपायान्तरमजानन्ती सा तद्वचनमङ्गीकृत्य कुक्कुटंसमानेतुं निजमन्त्रिणं गुणावल्याः सन्निधौ प्राहिणोत्—

इति श्रीचन्द्रराजचरित्रे तृतीयोल्लासे सप्तमः सर्गः ॥ ७ ॥

ततो मन्त्री तत्र गत्वा गुणावलीं विज्ञापयतिस्म–गुणखाने ? नमस्तुभ्यं, कुक्कुटंदेहि सांप्रतम्। वीरमत्याज्ञया राज्ञि ?, संगतोऽहं त्वदन्तिके ॥१॥ नटानामयं चरणायुधः प्रदातव्यस्तस्मात्सद्यस्त्वमिमंमे देहि, अत्रास्थितोऽयं सुखी न भविष्यति, नटान्तिके तस्य काऽपि क्षतिर्नास्ति.तत्रस्थितःस क्षेमवान् भविष्यति. नटपुत्री शिवमाला स्वजीवितमिव तं रक्षिष्यति. चिन्ता त्वया कापि न विधेया,

याचमानाय मे पञ्जरं देहि, विलम्बं मा कुरु, गुणावली जगौ—यदात्थ मन्त्रिन्? वचनं तदेव, सत्यं महाशत्रुरमुष्य माता। तस्मान्नटेभ्यः प्रददाति मोदा–द्वैरी जनो वैरिविघातदक्षः ॥१॥ अतः परस्मै कथमर्पयामि, स्वजीवनंतं जगदेकनाथम्। त्वं तत्र गत्वा नटराजमाशु, विबोधयानेन कियांस्तवार्थः? ॥२॥ मदन्तिकेऽस्मिन् स्थित आशया मे, प्रयान्ति दीनानि कुतोऽन्यथाऽत्र। यः पीड्यते वेत्ति स वेदनां वै, हास्यं करोत्येव परस्तु मुग्धः ॥३॥ श्वश्रूर्मदीया मम भर्तुरिष्टं, स्वप्नेऽपि नो वाञ्छति किं न वेत्सि?। निवेदयाम्यद्य मदीयदुःखं, त्वामन्तरा कं विधुराननाऽहम्? ॥४॥ इतिगुणावल्या आक्रन्दवचनानि निशम्य मन्त्री पुनस्तामाश्वासयन्नाह–राज्ञि! त्वयाऽस्य विषये खलु नो विषादः, कार्यः सुखेन हृदि चिन्तय तीर्थनाथम्। सर्वं शुभं तव जनिष्यति दैवयोगा–त्सिद्धे विधौ किमिह वैरिगणो विदध्यात् ॥ १ ॥ इत्थंमन्त्रिवचनंप्रमाणयन्ती निजजीवितमिव पञ्जरगतंतं मन्त्रिणे प्रदाय साश्रुनयना सावादीत्—स्वामिन्! दीनाऽबलां त्यक्त्वा, विदेशं यातुमिच्छसि?। अकृत्ये ते मतिः कस्मा–दकस्मादजनि प्रभो? ॥ १ ॥ विद्यमाने त्वयि नाथे, कथं तिष्ठामि निर्धवा। अनाथाऽहं कियत्कालं, जीविष्यामि दयानिधे? ॥ २ ॥ निराश्रयायाः शरणं न मेऽन्यद्, गत्वा यतस्तत्र वदामि दुःखम्। प्राणप्रियोऽपि त्वमनर्थहेतु–र्जातस्ततः कोऽन्यजनस्य दोषः ॥ ३ ॥ स्वामिन्! सदा त्वं मम वल्लभोऽसि, त्वयाऽपि मे संस्मृतिरेव कार्या। ममापराधो यदि दृष्टपूर्वः, क्षन्तव्य एवाऽस्ति भवादृशानाम् ॥ ४ ॥ निरागसं मां प्रविहाय सद्यो–देशान्तरं गन्तुमनोऽभवत्ते। प्राणेश? हा? त्वद्विरहातुरायाः, क्षणोऽपि भावी युगसंमितो मे ॥ ५ ॥ पतित्वमाप्ते त्वयि प्राणवल्लभ?, मनोरथश्रेणिरभून्मदीया। साऽप्यद्य दुर्दैववशाद्विनष्टा, दरिद्रिणां दुःखगतिर्न दुर्लभा ॥ ६ ॥ पुनर्भवद्दर्शनमस्ति दुर्लभं, दृष्ट्वा पवित्रीकुरु मां नताङ्गीम्। वियोजनं यः करुतेतवैतं, ब्रवीमि किं निन्द्यतमं नरा-

धिप ! ॥ ७ ॥ योऽपकाररतो नित्यं, परकार्यविघातकः । तन्मुखं रजसा पूर्णं, जायतामञ्जनोपमम् ॥८॥ स्वामिन् ! सकृन्मयि दृष्टिपातं कुरुष्व, भाविनी भवद्विरहानलज्वाला मां भृशं व्यथयति, भवता निजदर्शनवृष्टिधाराभिरहं निर्वापयितव्या, ईर्ष्यालुना दुर्दैवेनावयोः साहचर्यं न विसोढम् । ईदृशींदुःखश्रेणींसहमानांमामपि धिगस्तु—वज्रेण निर्मितं नूनं, विधिना हृदयं मम । अन्यथा भिद्यते किं न, सङ्कटेऽपीदृशे हहा ? ? ! ॥ १ ॥ दैव ! तुभ्यं नमस्कृत्य, प्रार्थयामि मुहुर्मुहुः । ईदृशं सङ्कटं क्काऽपि, मा देहि मद्रिपोरपि ॥ २ ॥ स्वामिंस्त्वत्स्नेहवाक्यानि, स्फुरन्ति हृदये मम । शल्यवत्तानि पीडां मे, करिष्यन्ति दिवानिशम् ॥३॥ स्वामिंस्त्वद्दर्शनाकाङ्क्षा, पूरणीया पुनस्त्वया । अन्यथा मे गतिर्नास्ति, जीवामि ध्यानतस्तव ॥ ४ ॥ एतदेव हि दुःखं मे, भवन्तं प्रविवासरम् । नर्त्तयिष्यन्ति सर्वत्र, नटाः स्वोदरपूर्त्तये ॥ ५ ॥ तद्दुःखञ्च सहिष्येहं, ततोऽप्यतिभयप्रदम् । श्वश्रूदुःखं महादुःखं, जागर्त्ति मम मूर्धनि ॥६॥ स्वामिन्नत्र स्थितस्याऽपि, तव सौख्यं न विद्यते । ससर्पे हि गृहे वासः, प्राणसंशयदायकः ॥७॥ "शङ्कलाक्रमुकन्यायोऽत्र संप्राप्तः," विधिनिषेधशून्या जातास्मीति निगद्य विरतायां तस्यां तदर्थवेदिना कुक्कुटेन चरणनखैरक्षराणि विलिख्य भूमौ विज्ञापितम्—तन्वङ्गि ! चिन्ता मम नैव कार्या, समागमो नौ पुनरेव भावी । लब्धस्वरूपस्तव पूरयिष्ये, नटप्रसङ्गेन मनोरथं द्राग् ॥ १ ॥ जीवन्नहं त्वत्स्मरणानुषङ्गी, शश्वत्तवैवोपकृतिं स्मरिष्ये । दूरस्थितोऽप्यस्मि तवैव चित्ते, न त्रुट्यति स्नेहगुणो हि मुग्धे ! ॥ २ ॥ अस्मान्नटगणाद्भावि, मनुष्यत्वं मम ध्रुवम् । त्वयैतत्सर्वथा ज्ञेय—मुद्यमोऽयं ततोऽखिलः ॥ ३ ॥ अतस्त्वया न मे कार्या, चिन्ता चित्तसमुद्भवा । धर्मध्यानरता श्वश्र—द्भव त्वं सुखदा प्रिये ! ॥ ४ ॥ इतिकुक्कुटलिखिताक्षराणि वाचयित्वा किञ्चित्स्वस्थमनाः सा मन्त्रिणे पञ्जरं समर्प्य भणतिस्म—वीरमत्यै प्रदेहि त्वं, पञ्जरं

जीवितप्रियम् । यदाज्ञायां स्थिता शश्व–ज्जीवामि पतिवाञ्छया ॥ १ ॥ गृहीतपञ्जरोमन्त्री ततः समुत्थाय कृतप्रणामोवीरमत्यै कुक्कुटपञ्जरंवितीर्णवान् । साऽपि नटाधिपाय तत्समर्पयामास. लब्धमनोरथंतन्नटमण्डलं भूरि प्रमोदमावभार. ततो वीरमतीं प्रणम्य तेऽप्यन्यत्र जग्मुः । यतः—सिद्धे कार्ये हि को दक्षः, स्थानस्थायी भवत्यहो ? । पक्षिणोऽपि क्षुधाशान्त्यै, श्रयन्ति फलिनो द्रुमान् ॥ १ ॥ अथ शिवमाला निजावासंसमेत्योत्तमामेकांमहार्हांशय्यांप्रस्तार्य तदुपरि तत्पञ्जरमस्थापयत् । ततः सा निजजनकसमेता प्रणामाञ्जलिंविधाय तंचरणायुधं वदतिस्म–अद्यपर्यन्तमस्माकं, स्वामी कोऽपि न भूतले । राजन्नद्य वयं सर्वे, जाताः स्वामियुता ध्रुवम् ॥ १ ॥ त्वं नरेन्द्रो वयं सर्वे, प्रजाधर्मणि संस्थिताः । नूत्नानन्दरसास्वादो,–लप्स्यते त्वत्कृपावशात् ॥ २ ॥ भूरिपुण्यप्रभावेण, त्वादृशानां समागमः । लभ्यते हि प्रतिस्थानं, सुलभा नैव साधवः ॥ ३ ॥

राजन्नितःप्रारभ्य प्रथमंभवन्तंस्तुत्वाऽपरस्तुतिंवयंकरिष्यामः । यतः—योग्यं विहाय को मूढः, स्तोतुमुत्सहते परम् । क्षीरं त्यक्त्वा पयः क्षारं, को हि स्वादितुमिच्छति ॥ १ ॥ नृपाधीश ? सदैवानन्दरसनिमग्नेन भवता निश्चिन्ततया वर्त्तितव्यम् । एवंसविनयंभणित्वा सा चरणायुधसन्निधे रुचिरानचिरजातान् मिष्टपदार्थान् ढौकयामास, सोऽपि चञ्च्वा दाडिमादिकंयथेच्छं-खादितुंलग्नस्तथाऽपि तद्रसोगुणावलीस्मरणादुद्धकण्ठस्य तस्य कण्ठस्थित एव जीर्णतामवाप्नोति, तादृशींदशामनुभवन्तंतंवि-लोक्य शिवमाला प्राह—विहङ्गममहाराज ?, मा विषादं कुरु खियाः । भुङ्क्ष्व द्राक्षादि सद्वस्तु, सर्वं भद्रं भविष्यति ॥ १ ॥

इतो वितीर्णपञ्जरा वीरमती सभांविसृज्य स्वस्थानमगमत् । ततः समयज्ञोमन्त्री गुणावलींसान्त्वयितुंसमागतःप्रोवाच—देवि ? त्वं सर्वदा मान्या, पतिभक्तिपरायणा । वीतरागंभजस्वेह, परत्र सुखदायकम् ॥ १ ॥ धर्मसिद्धौ ध्रुवासिद्धि–रैहिका

मुण्मिका नृणाम् । दुग्धोपलम्भे सुलभा; सम्पत्तिर्दधिसर्पिषोः ॥ २ ॥ गुणावलीप्राह—मन्त्रिन् ! केनाऽप्युपायेन, मत्पतिं त्वं समानय । तद्वियोगो हि मे दत्ते, व्यथां भूरितरां हृदि ॥ ३ ॥ नटास्तु मत्पतिं गृहीत्वा पतिमन्तोयत्र कुत्राऽपि गताःसुखभाजोभविष्यन्ति. पतिहीनाया मे कागतिस्तत्समागमश्च मे कुतोभविष्यति ? नरभ्रमरश्च नवीनमित्राणि नववनिताश्च सेवते. अनाथाया मे किंशरणमिति भवतोनाविदितमस्ति—कुकुटत्वं गतेऽप्यसि—न्नस्य मातुर्मनोरथः । कदाचित्सफलो भावी, मद्दुःखथावर्धकोऽनिशम् ॥ १ ॥ यावज्जीवमहं तस्याः, सहिष्ये दुष्टचेतसः । उपालम्भं कथंकारं, मार्मिकं प्राणहारकम् ॥ २ ॥ आशापाशनिवद्धां मां, नैव त्यक्ष्यति जीवितम् । ममश्वश्रूरियं पूर्व—वैरिणी दैवतोऽजनि ॥ ३ ॥ इदानीमपि नोशान्ति—स्तस्याश्चेतासि जायते । इतः कृष्णभुजङ्गीव, किं विधास्यति मेऽसुखम् ॥ ४ ॥ तथाच—यः कोऽपि मत्पतिसमागममातनोति, तत्पादसेवनमहं विदधामि नित्यम् । प्राणान् ददामि नितरां प्रकरोमि दास्यं, मूर्ध्ना वहामि तदनल्पनिदेशमाशु ॥ ५ ॥ अहो ! सर्वजना यान्ति, आयान्ति च यथाक्रमम् । श्वश्रूस्तु मे न कुत्राऽपि, गच्छति मदभाग्यतः ॥६॥ मदर्थमेव संसृष्टा, विधिना दुष्टमानसा । अस्यां हि जीवमानायां, सुखाशा मम दुर्लभा ॥ ७ ॥ मत्पतेः कीर्त्तिमाकर्ण्य, हृदयं दह्यतेतराम् । अस्यास्तत्किं मया पूर्वं, वैरबुद्ध्या विराधितम् ॥ ८ ॥ मन्त्रीप्राह—विषादं मा विधेहि त्वं, श्वश्रूं मा कोपयाधुना । यतश्चण्डस्वभावा सा, नैव विश्वासभाजनम् ॥ ९ ॥ जरठेयं कियत्कालं, जीविष्यति दुराशया ? । राज्याधिपस्तु ते स्वामी, परिणामे भविष्यति ॥ १० ॥ अतोधैर्ये मतिं धृत्वा, कालनिर्गमनं कुरु । आपत्कालोऽपि निर्वाह्यः, सैव बुद्धिः प्रशस्यते ॥ ११ ॥

इतिमन्त्रिवचनेन शान्तमतिर्गुणावली मन्त्रिणंसन्दिश्य नटान्तिके प्रैषीत्—निजस्वामिकृते च द्राक्षादिखाद्यानि शिवमालां

प्रति प्राहिणोत्। मन्त्री च तत्र गत्वा श्रोत्रमूले शिवमालामब्रवीत्—योऽयं कुक्कुटराजोऽस्ति, सैव चन्द्रनरेश्वरः। तद्विमातुरिदं कर्म, सिद्धविद्याप्रभावतः ॥१॥ अतोऽस्य सेवनं सम्य–ग्विधातव्यं त्वया सदा। अस्माकं दर्शनं देयं, पुनरागमनेन च ॥२॥

प्रतिसमयं त्वया कुशलवृत्तान्तंविज्ञापनीयम्। यतः—सम्बन्धिनः क्षेमकथां विदित्वा, भवन्ति भव्याः सुखिनः परस्मात्। विदेशयातानपि पत्रलेखः, सामीप्यभाजो विदधाति भद्रः ॥ १॥ इतितांविनिवेद्य कुक्कुटञ्च प्रणम्य मन्त्री निजस्थानमगात्। नटा अपि गृहीतस्वस्वसाधनाःप्रयाणपटहंवादयन्तोनगरान्निरगमन्। श्रुतपटहध्वनिर्गुणावली स्वप्रासादशिखरमधिरुह्य साभिलापा नटमण्डलीमपश्यत्–शिवमालोत्तमाङ्गे सा, रत्नपञ्जरमास्थितम्। विलोकमाना तत्रैव, दृष्टिन्यासं मुहुर्व्यधात् ॥ १ ॥ क्रमेणतद्गणो दृष्टि–मार्गमुल्लङ्घ्य जग्मिवान्। मूर्च्छिता साऽपतद्भूमौ, स्वभर्तुर्विरहात्तदा ॥ २ ॥ तथावस्थां समालोक्य, तत्सख्यस्तां सविस्मयाः। चन्दनाद्युपचारेण, चक्रिरे लब्धचेतनाम् ॥ ३ ॥ ततःसचिवोऽपि तत्र समागत्य सामवचनैस्तांसान्त्वयामास. ज्ञातवृत्तान्ता वीरमत्यपि तदन्तिकमागत्य प्रावोचत्—सुभगे ! शल्यमस्माकं, निर्गतं शीतभेपजा। निष्कण्टकमहो राज्यं, लब्धमायासमन्तरा ॥ १ ॥ आवयोः कीदृशी प्रीति–रधुना विस्तरिष्यति। मुग्धे ! त्वया विलोक्यं त–न्मद्विचेष्टितमुत्तमम् ॥ २ ॥ समयवेदिनी गुणावली निजश्वश्रूमतिश्लाघमाना तामन्वसरत्। ततोवीरमती हृष्टमानसा गुणावलींप्रशंसन्ती स्वस्थानमियाय. अथनिजपतिना विरहिता सा मानिनी विदेशगतंस्वभर्त्तारंविचिन्तयन्ती निर्विण्णा बभूव. यथा यथा भर्तृगुणान्स्मरति तथा तथा विरहानलज्वाला तन्मानसवनेऽधिकतरा प्रादुर्बभूव। विरहाग्निपीडिता सा नयनयोरश्रुधारांवहन्ती सखींप्रत्याह—वत सखि ? कियदेतत्परय वैरंस्मरस्य, प्रियविरहकृशेऽस्मिन्रागिलोके तथाहि। उपवनसहकारोद्भासिभृङ्गच्छ-

लेन, प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ १ ॥ कलयति मम चेतस्तल्पमङ्गारकल्पं, ज्वलयति मम गात्रं चन्दनं चन्द्रमाश्च । स्थगयति मम नेत्रे मोहजन्मान्धकारो–विकृतवहुविकारं मन्मथो मां दुनोति ॥ २ ॥ रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो–विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते, हृदयमदये तस्मिन्नेवं पुनर्वलते वला–त्कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ ३ ॥ तथाच—इदानीं तीव्राभि-र्दहन इव भाभिः परिवृतो–ममाश्चर्यं सूर्यः, किमु सखि ! रजन्यामुदयति । अयं मुग्धे ! चन्द्रः, किमिति मयि तापं प्रकटयत्यनाथानां वाले ! किमिव विपरीतं न भवति ॥ ४ ॥ पिकाली वाचाली–भवति वहुधालीकवचने, । मृणाली व्यालीव, व्यथयतितरामङ्गमनिशम् । विषज्वालाजालं, सखि ! किरति पीयूषकिरणो–जगत्प्राणः प्राणा–नपहरति केयं परिणतिः ॥ ५ ॥ किंवहुभाषितेन !—रात्रिर्मे दिवसायते हिमरुचिश्चण्डांशुलचायते, तारापङ्क्तिरपि प्रदीप्तवडवावन्हिस्फुलिङ्गायते । मन्दो दक्षिणमारुतोऽपि दहनज्वालातिलीलायते, हाहा ! चन्दनविन्दुरग्निकणवद्दाहाय सञ्जायते ॥ ६ ॥ तथाच—दिग्मण्डलं यन्निजभर्त्तुराश्रितं, तन्मारुतं चुम्बति हर्षिताशया । प्रतिक्षणं तत्स्मरणैकमानसा, तपस्विनीवात्मगतिं व्यचिन्तयत् ॥ ७ ॥ प्राणाः ! कथं तिष्ठत यूयमक्षता–देशान्तरं प्राणपतौ गते सति । भर्त्तुर्वियोगं सहते न भामिनी, धिगस्तु मां तद्विपरीतवर्त्तिनीम् ॥ ८ ॥ स्वामिन् ! गुणास्ते कियतः स्मरामि, त्वत्प्रेमभावञ्च किमु स्मरामि ! । रथाङ्गनाम्नीमिवमां विहाय, गतो भवान्देशविलोकनेच्छुः ॥ ९ ॥ इन्द्रजालसमं सर्वं, मन्येऽहमिदमद्भुतम् । कर्मपाशनिवद्धानां, दुःखान्मुक्तिर्दवीयसी ॥ १० ॥ सर्वं कालकृतं मन्ये, यज्जातं शुभमेव तत् । आयुष्मान्भवते वृद्धि–र्जायतां प्रतिवासरम् ॥ ११ ॥ हेप्राणेश ? जगत्यस्मि–स्त्वमेव शरणं मम । त्वयाऽहं विस्मृता कुत्र, गमिष्यामि सुखाशया ॥ १२ ॥

इति विलपन्ती सा समृद्धिमदगारमपि श्मशानसममन्यत । स्फारतरान् शृङ्गारानपि ज्वलदङ्गारानिवागणयत् । विरहव्यथया शुष्यच्छरीरावयवा धर्माराधनं कुर्वन्ती साऽशुभकर्मणामुदयंमन्यमाना तन्निर्जराकृतेऽनेकविधानि तपांस्यतनोत् । भवोदधितारकंपरमात्मानञ्च ध्यायन्ती सा वासराननैषीत् । अथनिजस्वामिनः संरक्षणमिच्छन्ती गुणावली निजाप्तसामन्तसप्तकं नटानांसविधे प्रैषीत्—स्वामिन्यादेशतां प्राप्य, सामन्तास्तत्र संगताः । प्रणम्यकुक्कुटं प्रोचुः, स्वामिंस्त्वत्किङ्करा वयम् ॥ १ ॥ भवत्सेवापराणां नो—जन्मसाफल्यमस्ति वै । तदभिप्रायवित्सोऽपि, सुदृष्ट्या वीक्षतेस्म तान् ॥ २ ॥ ससैनिकाःसर्वे सामन्ता नटैःसार्द्धमचलन् । वर्त्मनि मस्तकपञ्जरा शिवमाला भृशंमोदमाना प्रतस्थे, राजानमिव राजमानंपञ्जरस्थितंतमुभौ पार्श्वाऽनुचरौ चामराभ्यांवीजयतः । भक्तिमानेकश्च तन्मूर्ध्नि मुक्तामयंसितातपत्रंधृत्वा छायेवाचलत्, इत्थंराजवैभवधारिणंकुक्कुटं मानयन्तः सर्वेऽपितेमानभाजनंबभूवुः । ग्रामाद्ग्रामं व्रजन्तस्ते, दर्शितानेकनाटकाः । लेभिरे पुष्कलं द्रव्यं कुक्कुटस्य प्रभावतः ॥१॥ पञ्जरगतचन्द्रराजपरिचर्यापरा शिवमाला देशान्तरे बम्भ्रमन्ती ह्येकस्मिन्पथि कार्यद्वयवन्निजमनोरथमसाधयत् । विशुद्धभावा सा प्रत्यहंमिष्टतरखाद्यैस्तंभोजयन्ती स्वजीवितमिव निरन्तरंतद्रक्षापरायणा सुखमनुभवतिस्म । एवंकौतुकरसमनुभवन्तःसर्वे नवनवान् देशान्पर्यटन्तोवङ्गदेशविभूषणं पृथ्वीभूषणंनामान्वर्थंपत्तनंजग्मुः । अस्ति तत्राऽरिमर्दननामा नृपतिःसर्वजनमान्यः । तेन सह चन्द्रराजपितुरपूर्वसम्बन्धोऽभूत् । तन्नगरपरिसरे भव्यमेकंपटवेश्म निर्माय तन्मध्यभागे सिंहासनोपरि चन्द्रराजपञ्जरंप्रतिष्ठाप्य नटपरिवारःस्वोचितस्थानंभेजे । विदेशान्नटमण्डलंसमागतमितिवार्त्तां लोकमुखाद्विदित्वा तन्नगराधिपस्तान्समाकार्य नाटकंविधीयतामितिसमादिशत्—नटाधिपः सज्जितसर्वसाधनो, जनैः समेतः समगाच्चतुष्पथे । कलाकलापेन नृपादिकानां, प्रमोदयामास

मनांसि सत्वरम् ॥ १ ॥ कुक्कुटाज्ञानुरक्ताय, नटराजाय भूपतिः । प्रसन्नमानसोऽदासी–द्धनं भूरि जनैः सह ॥२॥ ततोनटाधिपं राजा, पप्रच्छ विनयान्वितः । ताम्रचूडस्त्वया कस्मा--त्समासादित एष वै ॥ ३ ॥ नटाधिपस्तद्वृत्तान्तमवदत्—चन्द्रराजमिमं विद्धि, नृपते ! पक्षिरूपिणम् । तद्विमातुरिदं कर्म, कर्मतन्त्रा हि देहिनः ॥ १ ॥ तद्वृत्तान्तं निशम्याह, वङ्गराजो नटाधिपम् । चन्द्रराजस्तु संबन्धी, वर्त्तते मे क्रमागतः ॥२॥ इतिसंभाष्य भूभर्त्ता, ताम्रचूडं प्रणम्य च । हेमरत्नगजाश्वादि, प्राभृतीकृतवान्मुदा ॥ ३ ॥ ततोऽवदत्प्रजेशस्तं, वीरस्त्वंचन्द्रभूपते ? किङ्करं मां विजानीहि, भवत्सेवापरं सदा ॥ ४ ॥ मद्भाग्येनैव सञ्जातं, दर्शनं तव दुर्लभम् । अद्य मे सफलं जन्म, पक्षित्वं दुःखदं परम् ॥ ५ ॥ एवमाभाष्य तस्मिन्विरते गृहीतसत्कारा नटाःसपरिवारा अन्यत्र प्रययुः । वङ्गाधिराजोनिजसीमानंयावत्ताननुगम्य तैर्विसृष्टःस्वस्थानमाजग्मिवान् । ततःक्रमेण पर्यटन्तोनटाःसिंहलद्वीपंजग्मुः ।

इतिश्रीचन्द्रराजचरित्रे तृतीयोल्लासेऽष्टमः सर्गः ॥ ८ ॥

तत्राऽस्ति सिंहलपुरं परमं विशालं, राजन्ति यत्र बहवो धनिनां निवासाः । यच्चत्वराणि मणिहेममयानि शश्वत्,–संवीक्ष्य विस्मयमवाप हि निर्जरेशः ॥१॥ तन्नगरशोभांनिरीक्षमाणास्ते बाह्योद्यानभूमौ निवासंचक्रुः । नाट्यकलायांतेषांप्रसिद्धिंसमाकर्ण्य सिंहलनरेशस्तान्समाकार्य नाटकंकर्त्तुंसमादिशत् । प्रमाणीकृतनृपादेशास्तेऽपि पञ्जरपुरःसरा नृपान्तिकमीयुः ।

लब्धनाट्यकलादाक्ष्या–दीव्यनेपथ्यधारिणः । अपूर्वखेलनेनाशु, चमत्कारमजीजनत् ॥ १ ॥ नरेन्द्रोऽपि प्रसन्नोऽभूत्प्रजालोकसमन्वितः । नव्या कलावराङ्गी हि, कस्य नो रञ्जयेन्मनः ॥२॥ ततस्तेन महीनाथेन तद्दिनलब्धंपञ्चशतपोतानांशुल्कंतस्मै नटाधीशाय वितीर्णम्–सिंहलाधिपसत्कीर्त्तिं, वर्णयन्तस्ततो नटाः । प्रमोदभारसुप्राङ्गा, निजावासं प्रपेदिरे ॥ १ ॥ इतः सिंहल-

राजेन्दो–र्महिषी दृष्टकुकुटा । तास्मिन्रागवती जाता, विचित्रपिच्छभूपिते ॥ २ ॥ राजानमाहूय जगाद साचा–दानाय्य तं मेऽर्पय कुकुटं द्राक् । यः सर्वसंपत्तिकरोऽस्ति लोके, वशीकृतं येन जगत्समग्रम् ॥ ३ ॥ तमन्तरा स्थातुमहं न शक्ता, तस्मिन्मनो मग्नमलं मदीयम् । मत्सी यथा वारि विना तथाऽहं, विनाशमेष्यामि विनैव तेन ।। ४ ॥ मदीयचित्तं हृतमस्ति तेन, स्वामिन् ! मम प्रेमनिवन्धनं सः । शान्तिं भजिष्यामि तदागमेन, विलंवता नैव सुखं प्रदत्ते ॥ ५ ॥

दत्तावधानोभूपतिःप्राह–सुदत्यलंपक्षिणि स्नेहवृत्त्या, स्वजीविकोपकरणंतंकुकवाकुंनटा विवोधिता अपि कथंप्रयच्छन्ति ?

यादृशोऽहं तव प्रेयां–स्तेपां सोऽस्ति तथाविधः । याचमानाय त्वं किं मां, दातुमिच्छसि कर्हिचित् ? ॥१॥ नाऽयं नटाधिपस्तुभ्यं, याचितो दास्यति प्रिये ? । वलात्कारोऽपि नो युक्तो–न्यायमार्गाऽनुयायिनाम् ॥२॥ तस्मात्कदाग्रहो व्यर्थ–स्त्वया-त्याज्यो धिया त्वया । असदाग्रहजन्यं हि, फलं नैव सुखप्रदम् ॥३॥ स्वामिन् ! तेन विना मन्ये, मामकं जीवनं वृथा । तस्मात्केनाऽप्युपायेन, तमानीय प्रदेहि मे ॥४॥ धनदानेन तुष्टः स, ताम्रचूडं प्रदास्यति । धनप्रदानतो वश्यं, जायते सकलं जगत् ॥५॥

इत्थंकदाग्रहग्रहग्रस्तांराज्ञींविभाव्य भूपतिश्चरणायुधंसमानेतुंनटान्तिके निजसेवकान्प्राहिणोत् , गृहीतराजशासनास्तेऽपि सत्वरं तत्र गत्वा तान् ताम्रचूडंययाचिरे, नटैर्भणितम्—अयं हि पत्ती नरनायको नः, कथं वयं दातुमिमं समर्थाः ? । यदाज्ञया मण्डलमस्मदीयं, समीहितार्थं वरिभर्त्ति तुष्टिम् ॥१॥

भोनियोगिनः ! भवतांस्वामिनंरञ्जयितुमस्माभिर्नाटकंप्रादर्शि, तदा तस्य कुक्कुटाभिलापा सञ्जाता, नेयंमहीपतीनांनीतिः, कदाचिद्युष्मन्नृपतिरेवंमन्यते, यद्बहुधनंप्रदाय मया नाटकंकारितमिति न मन्तव्यंयुष्माभिः, अस्माकन्तु तस्मादप्यधिकदानिनो-

बहवोमिलन्ति, स्वदेशवर्त्ती युष्माकंस्वामी कुतोजानात्यस्मदीयांस्थितिम् । अतोभवन्तस्तत्र गत्वा सत्वरंस्वस्वामिनंनिवेदयन्तु,
एपताम्रचूडो न मिलिष्यतीति । ततोराजसेवकाःप्राहुः–अस्मिन्नृपाग्रहो नास्ति, तन्महिषी तमिच्छति । वनितानां विलासो हि,
दुष्प्राप्यवस्तुयाचने ॥१॥ कुक्कुटेन विना राज्ञी, प्राणांस्त्यक्ष्यति निश्चितम् । तस्मादनेन दत्तेन, प्राणदानसमं फलम् ॥ २ ॥
अद्यैव म्रियतां राज्ञी, नास्ति मे स्नानसूतकम् । कुक्कुटो जीवनं मेऽस्ति, महिषीव नरेशितुः ॥३॥ राजभृत्यास्ततो गत्वा, स्व-
पतिं प्रोचिरेऽखिलम् । वृत्तान्तं नटराजोक्तं, विरुद्धमपि तात्त्विकम् ॥४॥ परुषाक्षरसंमितांतदुर्क्तिसमाकर्ण्य प्रकटितक्रोधानलो-
नरेन्द्रोनिजसेनासमेतोहठात्तंकुक्कुटंसमानेतुंनिरगात्–नटा अपि विदित्वैत–त्समारंभं कृतोद्यमाः । निजं सैन्यं समादाया–ऽभिय-
युर्विजिगीषवः ॥१॥ अहंबुद्धितया जेतु–मुभयोः सैनिकाः स्थिताः । सिंहलाधीशसेनानी–र्डुढौके सबलः पुरा ॥२॥ ततश्चन्द्र-
नरेशस्य, सैनिकाः शस्त्रपाणयः । समदाः पृष्ठतो गत्वा, रुरुधुस्तान्समन्ततः ॥३॥ शस्त्राशस्त्रि खड्गाखड्गि मुष्टामुष्टि भीरूणां भ-
यजनकंजन्यंक्षणात्परस्परेषामजनिष्ट–पत्तिः पत्तिमभीयाय, रणाय रथिनं रथी । तुरङ्गस्थं तुरङ्गस्थो–दन्तिस्थं दन्तिनि स्थितः ॥१॥
सङ्ग्रामानन्दवर्द्धिष्णौ, विग्रहे पुलकाङ्किते । आसीत्कवचविच्छेदो–वीराणां मिलतां मिथः ॥२॥ निर्दयं खड्गभिन्नेभ्यः, कवचे-
भ्यः समुच्छ्रितैः । आसन्व्योमदिशस्तूलैः, पलितैरिव पाण्डुराः ॥३॥ खड्गा रुधिरसंलिप्ता–श्चण्डांशुकरभासुराः । इतस्ततोऽपि वी-
राणां, वैद्युतं वैभवं दधुः ॥४॥ गृहीताः पाणिभिर्वीरै–र्विकोशाः खड्गराजयः । कान्तिजालच्छलादाजौ, व्यहसन्समदा इव ॥५॥
खड्गाः शोणितसंदिग्धा–नृत्यन्तो वीरपाणिषु । रजोघने रणेऽनन्ते, विद्युतां विभ्रमं दधुः ॥ ६ ॥ शस्त्रभिन्नेभकुम्भेभ्यो–मौक्ति-
कानि च्युतान्यधुः । आहवक्षेत्रमभ्युप्त–कीर्त्तिबीजोत्करश्रियम् ॥७॥ वीराणां विषमैर्घोषै–र्विद्रुता वारणा रणे । शास्यमाना अपि

त्रासाद्देजुर्धूताङ्कुशा दिशः ॥८॥ रणे वाणगणैर्भिन्ना-भ्रमन्तो भिन्नयोधिनः । निममज्जुर्गलद्रक्त-निम्नगासु महागजाः ॥ ९ ॥ खड्गनिर्लूनमूर्धानो-निपतन्तोऽपि वाजिनः । प्रथमं पातयामासु-रसिना दारितान्नरीन् ॥ १० ॥ उत्थापितः संयति रेणुरश्वैः, सान्द्रीकृतः स्यन्दनचक्रचक्रैः । विस्तारितः कुञ्जरकर्णतालै-र्नेत्रं क्रमेणोपरुरोध सूर्यम् ॥ ११ ॥ रथो रथाङ्गध्वनिना विजज्ञे, विलोलघण्टाक्वणितेन नागः । स्वभर्तृनामग्रहणाद्बभूव, सान्द्रे रजस्यात्मपरावबोधः ॥१२॥ आवृण्वतो लोचनमार्गमाजौ, रजोन्धकारस्य विजृम्भितस्य । शस्त्रक्षताऽश्वद्विपवीरजन्मा, बालारुणोऽभूद्रुधिरप्रवाहः ॥ १३ ॥ स च्छिन्नमूलः क्षतजेन रेणु-स्तस्योपरिष्टात्पवनावधूतः । अङ्गारशेषस्य हुताशनस्य, पूर्वोत्थितो धूम इवावभासे ॥ १४ ॥ आधोरणानां गजसन्निपाते, शिरांसि चक्रैर्निशितैः क्षुराग्रैः । हृतान्यपि श्येननखाग्रकोटि-व्यासक्तकेशानि चिरेण पेतुः ॥ १५ ॥ भिन्नोरस्कौ शत्रुणाकृष्य दूरा-दासन्नत्वात्कौचिदेकेषुणैव । अन्योन्यावष्टम्भसामर्थ्ययोगा-दूर्ध्वावेव स्वर्गतावप्यभूताम् ॥ १६ ॥ भग्नैर्दण्डैरातपत्राणि भूमौ, पर्यस्तानि प्रौढचन्द्रद्युतीनि । आहाराय प्रेतराजस्य रौप्य-स्थालानीव स्थापितानि व्यभासन् ॥ १७ ॥ रेजुर्भ्रष्टा वक्षसः कुङ्कुमाङ्का-मुक्ताहाराः पार्थिवानां व्यङ्कनाम् । हासाक्षच्याः पूर्णकामस्य मन्ये, मृत्योर्दन्ताः पीतरक्तासवस्य ॥ १८ ॥ शितैर्मणिरेके, मृधभुवि परे तीक्ष्णनखरैः, क्रियासातत्येना-ऽप्यहमहमिकाक्रान्तमनसः । मिथो विध्यन्तिस्म, प्रबलतमसंमर्दविदलत्क्षितिक्षोदैः पिष्टा-तकपुरभिनक्षत्तटभूतः ॥ १९ ॥ मुञ्चद्भिर्मदवारि वारणगणैर्मेघायितं कार्मुकै-रेवैः शक्रशरासनायितमथ प्रोद्ध्वैः शैलीन्ध्रायितम् । खद्योतायितमस्त्रघट्टनसमुद्भूतस्फुलिङ्गैः स्फुरन्नाराचैश्चपलायितं रणभुवां सैन्यैर्नभस्यायितम् ॥ २० ॥ नो चापाकलनं न पत्रिधरणं न ज्यासमाकर्षणं, नो बाहुस्फुरणं न बाणगमनं संलक्ष्यते यद्रणे । किन्तु प्रौढकरीन्द्रकुम्भविगल-

न्मुक्तागणप्रस्फुरत्प्रत्यर्थिक्षितिपालमौलिमणिभिर्विद्योतते भूरियम् ॥ २१ ॥ इत्थंपरस्परेषां भयप्रदा सङ्ग्रामभूमिरजनिष्ट, प्रौढविक्रमैश्चन्द्रराजसैनिकैः पराजितोबलवानपिसिंहलराजोविलक्ष्यीभूय जिजीविषुःसंग्रामात्पलायनंचक्रे, नटाअपिगृहीतपञ्जरा जयदुन्दुभिंवादयन्तःसबलाःपोतनपुरपत्तनमभियातुमनसस्तस्माद्विनिर्गताः । कुक्कुटराजस्य जयवादःसर्वत्राऽश्रूयत, क्रमेण निरन्तरप्रयाणैर्व्रजन्तस्ते नटाः साक्षात्क्षीरोदधिसुतायाः निवासस्थानंविविधसम्पद्गणैरमरावतींहसदिव धनाढ्यगणशोभितंप्रौढशालंपोतनपुरंपत्तनंप्राप्ताः । तस्मिँश्चासीज्जयसिंहनामा नृपतिर्विजितारातिमण्डल ऊर्जितस्वभुजविक्रमेण निजापत्यवत्सकलां प्रजांपालयतिस्म, बुद्ध्या विजितवाचस्पतिःसुबुद्धिनामा तस्य मन्त्रिमुख्योऽभूत्–तत्पत्नी च रूपगुणमञ्जूषा मञ्जूषाभिधाऽभवत्–तत्पुत्री यूनां मनोग्राहिणी रम्यरूपलावण्या लीलावतीनाम्नी समासीत् । प्राप्तयौवनांताञ्च तन्नगरश्रेष्ठिनोधनदोपमस्य धनदस्य लीलैकसदनंलीलाधरनामा सूनुरुपयेमे.

समानौ रूपवयसा, समानौ गुणशीलयोः । रत्यनङ्गनिभौ तौ हि, दम्पती सुखभागिनौ ॥१॥ मीनकेतुरसासक्तौ, दोगुन्दुकसुराविव । नाज्ञासिष्टां गतं कालं, निष्पन्नस्वमनोरथौ ॥२॥ अथैकदा हीनपुण्यो–नरः कश्चित्समागतः । अन्नार्थी श्रेष्ठिसूनुं त–मयाचत गृहस्थितम् ॥ ३ ॥ लीलाधरो व्यग्रचित्तः, स्वकार्ये तमतर्जयत् । सोऽपि क्रोधातुरोऽवादी–त्कोऽपमानं सहेत हि ॥४॥ श्रेष्ठिपुत्रेदृशं गर्वं, मा विधेहि विमूढधीः । यादृशस्तादृशोऽप्यस्मि, त्वत्तः श्रेष्ठतरो गुणैः ॥५॥ स्वभुजार्जितवित्तेन, जीवनं धारयाम्यहम् । त्वं तु पित्रार्जितं द्रव्यं, भुङ्क्षे केलिपरायणः ॥ ६ ॥ तस्मान्मुधाऽधिकं गर्वं, मा कुरु द्रव्यमोहितः । त्वादृशोऽहं पराधीनो–नैवाऽस्मि धर्मदूषकः ॥७॥ गृहागतं ह्यजानन्य–स्तर्जयेदतिथिं जनः । सोऽधमो दुष्कृतं तस्य, गृह्णाति केवलं जडः

॥८॥ किञ्च यः पित्रोपार्जितवित्तेन विलासंकरोति तस्य जीवितंधिक् । अन्यार्जितसंपदाऽऽनन्दंकोन करोति ? स्वजनकोयावज्जीवति तावत्त्वंनिश्चिन्तोविलससि, दुर्विनीत ? धनयौवनमदेनावलिप्तस्त्वं प्रमत्तोजातः, धनयौवनंतु सर्वदाऽविनीतामनर्थदायकम् ।

यतः—यौवनं धनसंपत्तिः, प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय, किमु यत्र चतुष्टयम् ॥ १ ॥ पूर्वाऽपरं विलोक्याऽत्तः, स्थापनीयंपदं निजम् । मद्दुःस्थितिं निरीक्ष्य त्वं, हास्यव्यापारवानासि ॥ २ ॥ किं न जानासि रे मूढ ?, पक्वपत्रदशाक्रमम् । तद्विचार्याऽभिमानं त्वं, कुरु पश्चात्स्वचेतसि ॥ ३ ॥ निजाङ्गेषु विलग्नानि, भूषणानि विलोक्य वा । मा गर्वं कुर्वलङ्काराः, प्राप्यन्ते पामरैरपि ॥४॥ एवंद्रमकवचनानि निशम्य सञ्जातव्रीडोलीलाधरस्तंप्रणम्य सविनयंप्राह—त्वामेव सद्गुरुं मन्ये, हितशिक्षणदायकम् । हितं पथ्यं न मन्येत, कः सुधीर्भिक्षुकोत्तम ? ॥१॥ धिङ्मामज्ञानसंमूढं, बालक्रीडाविधायकम् । नाराधितो मया धर्मो—हितशिक्षा न धारिता ॥ २ ॥ ततःस भिक्षुकोमौनभावंभजन् गृहीतसत्कारोऽन्यत्र जग्मिवान्, लीलाधरोऽपि तद्वचनानि विचिन्तयन् द्रव्यार्जनकृते देशान्तरंगन्तुंमनश्चक्रे. चिन्तितञ्च तेन—दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना,—द्विप्रोऽनध्ययनात्कुलं कुतनयात्स्नेहः प्रवासाश्रयात् । मैत्री चाप्रणयात्समृद्धिरनयाच्छीलं खलोपासना—स्त्री गर्वादनवेक्षणादपि कृषिस्त्यागात्प्रमादाद्धनम् ॥ १ ॥ अतः प्रमादंपरित्यज्य विदेशगमनमेव वरं, सुखदुःखन्तु सर्वत्र कर्मवशतःसमुद्भवति. यतः—येन यत्रैव भोक्तव्यं, सुखं वा दुःखमेव वा । स तत्र बद्धारज्ज्वेव, बलाद्दैवेन नीयते ॥ १ ॥ अचिन्तितानि दुःखानि, यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये, दैवमत्रातिरिच्यते ॥ २ ॥ विपत्तौ किं विषादेन, संपत्तौ हर्षणेन किम् । भवितव्यं भवत्येव, कर्मणामीदृशी गतिः ॥३॥ दैवं फलति सर्वत्र, न विद्या न च पौरुषम् । समुद्रमथनाल्लेभे, हरिर्लक्ष्मीं हरो विषम् ॥ ४ ॥ हरिणा-

ऽपि हरेणाऽपि, ब्रह्मणा त्रिदशैरपि । ललाटलिखिता रेखा, न शक्या परिमार्जितुम् ॥ ५ ॥ कर्मणा बाध्यतेबुद्धि-र्न बुद्ध्या कर्म
बाध्यते । सुबुद्धिरपि यद्रामो-हैमं हरिणमन्वगात् ॥ ६ ॥ तथा च—आरोहतु गिरिशिखरं, तरतु समुद्रं प्रयातु पातालम् ।
विधिलिखिताक्षरमालं, फलति कपालं न भूपालः ॥ ७ ॥ पुरुषः पौरुषं ताव-द्यावद्दैवं तु सन्मुखम् । विपरीतगते दैवे, पुरुषो
न च पौरुषम् ॥ ८ ॥ इतिदैवबुद्धिःस विदेशंयियासुर्विपद्यमानसत्त्रुटितखट्वामेकां सनाथीकृत्य गृहकोणे प्रसुप्तः ।

किञ्चित् कार्यान्तरंविनिर्माय तदानींसमागतस्तज्जनकोगृहकोणे खट्वायांपतितंपुत्रंरुष्टचेतसंविज्ञाय पृच्छतिस्म, वत्स ? केन
मुमूर्षुणा त्वंरोपितः ? येनेदृशीमवस्थामनुभवसि, लीलाधरःप्राह—तात ! त्वत्कृपया काचि,-न्न्यूनता नास्ति मेऽधुना । किन्तु
देशान्तरं गन्तु-मिच्छामि द्रव्यहेतवे ॥१॥ कृपां विधाय सद्यो मे, तदाज्ञां दातुमर्हसि । विदेशगमनं पुंसां, शस्यते नयकोविदैः
॥ २ ॥ यतः—देशाटनं पण्डितमित्रता च, वाराङ्गना राजसभाप्रवेशः । अनेकशास्त्राणि विलोकितानि, चातुर्यमूलानि भवन्ति
पञ्च ॥ ३ ॥ तज्जनकोऽवादीत्-अधुना बालकोऽसित्वं, परिणीतोऽसि साम्प्रतम् । लक्ष्मीरप्यस्ति बहुला, किन्न्यूनमस्ति मद्गृहे
॥४॥ देशान्तरस्य वार्त्ताऽपि, नातः कार्या त्वयाऽधुना । गृहे स्थित्वा सदा भोग्या-वाञ्छिता भोगसम्पदः ॥५॥ ततः स भि-
क्षुकप्रोक्तं, मर्माविद्वचनं स्मरन् । जनकं ज्ञापयामास, विदेशगमनोद्यमम् ॥ ६ ॥ श्रेष्ठी जगाद-रेमुग्ध ?, भिक्षुकोक्तिं निशम्य
च । कदाग्रहो न योग्योऽयं, सर्वसंपद्युतस्य ते ॥ ७ ॥ सुलभे वैभवे कोऽन्यो-निद्रां विक्रीय बुद्धिमान् । उज्जागरं समादाय,
दुःखमापद्यते भृशम् ॥ ८ ॥

एवंश्रेष्ठिप्रमुखैर्युक्तिप्रयुक्तिभिर्बोधितोऽपि स निजाग्रहंनामुञ्चत् । ततस्तज्जनकेन बह्वाग्रहेण स भोजितः । विहितभोजनः

स निशामुखे शयनस्थानमशिश्रियत् । ततो गजगामिनी लीलावती ललितगत्या निजस्वामिनःसन्निधौ जगाम,स्वशोचमानो-लीलाधरोदृष्टिमात्रेणाऽपि तां न समभावयत् । निजविचारैकनिमग्नंतंविभाव्य ललिताकृतिर्लीलावती मन्दस्वरेण प्राह—स्वामिन् ? दृष्टिविकासेन, प्रेचस्व मां समागताम् । पिपीलिकानिमित्तं हि, कटकं तु निरर्थकम् ॥ १ ॥ अन्येषु वार्यमाणोऽहं, गामयमत्य कथं प्रभो ? । गमिष्यसि ममस्नेहं, न स्मरिष्यसि चान्तरे ॥ २ ॥ वियुक्तस्य पुनर्योगो—भवतीति न निश्चयः । योगोऽतः स्नेहिनां नैव, त्याज्यो बुद्धिमतां प्रियः ॥ ३ ॥ स्वामिन् ? अन्यजनस्पृहणीयामीदृग्विधांसुखसम्पदंविमुच्य देशान्तरंजिगमिषुर्भवादृशःस्वेच्छाचारी कोऽपि मया न विलोकितः । तयैवंसकलायांनिशि प्रबोधितोऽपि स निजाग्रहं न शिथिलीचकार. विभातायांविभावर्यांतज्जनकस्तत्र समागतस्तेन पुनर्बोधितोऽपि स निजसङ्कल्पंनात्यजत् । ततोविज्ञातसारोमन्त्री तत्रसमेत्य श्रेष्ठिसुतमवोचत्, विदेशगमनमेव हितदायकमिति ते दृढनिश्चयस्तर्हि स्वकार्यसाधकमुत्तमंमुहूर्त्तमवेक्षणीयमिति-मन्त्रिवचने तेन स्वीकृते सति मन्त्री श्रेष्ठान् मौहूर्त्तिकान्समाकार्य सर्वसिद्धिप्रदंमुहूर्त्तमपृच्छत् । मन्त्रिणोभेदग्रस्तंवाक्यंनिशम्य ज्योतिषिकैर्विज्ञातं यतोऽस्य विदेशयात्रा मन्त्रिणोनैव संमता, ततस्तेऽपि परस्परंविचार्य प्रोचुः । मन्त्रिन् ? पञ्चाङ्गशुद्ध्या षण्मासपर्यन्तंश्रेष्ठंमुहूर्त्तंनास्ति, वयंकिंकुर्मः ?, तथाप्येकैव गतिरवशिष्टा विद्यते. कुक्कुटे रुवे स प्रयाणंकरोतिचेत्कार्यसिद्धिः-स्यात्, प्रभूतंचद्रव्यंसमुपार्ज्य स गृहंसमेष्यति । ततोमन्त्री यथायोग्यंदक्षिणांप्रदाय सर्वान् दैवज्ञान् व्यसृजत् । अथप्रयाणसामग्रीं विनिर्मातुकामोमन्त्री लीलावतींलीलाधरञ्च स्वगृहमनैषीत् । ततोमन्त्री निजसेवकान्समाहूय रहस्येवममन्त्रयत्—कुक्कुटस्य ध्वनिं श्रुत्वा, जामाता गन्तुमिच्छति । देशान्तरमतो यूयं, शृणुतैतद्वचो मम ॥ १ ॥ कुक्कुटान्सकलानस्मा—न्निष्कासयत

सर्वतः । स चेच्छ्रोष्यति तच्छब्दं, स्थास्यति वारितोऽपि नो ॥ २ ॥ साचिवाज्ञामुरीकृत्य, यथादेशं नियोगिनः । समस्तं नगरं चक्रु-र्हीनकुक्कुटसन्तति ॥ ३ ॥ इयं तेषां गूढरचना लीलाधरेण नाऽज्ञायि । यतः—सुप्रयुक्तस्य दम्भस्य, ब्रह्माऽप्यन्तं न गच्छति । कौलिको विष्णुरूपेण, राजकन्यां निषेवते ॥ १ ॥ निशाप्रान्ते गृहीतसाधनः सज्जीभूय दत्तकर्णो लीलाधरःकुक्कुट-स्वरंश्रोतुमतिष्ठत्-न तच्छब्दः श्रुतस्तेन, प्रयाणमभिकाङ्क्षता । कुक्कुटेन विना शब्दः, कथं स्याच्छ्रुतिगोचरः ॥ १ ॥

स्वमनसि सोऽपि व्यचिन्तयत्—कुक्कुटो न कथं ब्रूते, विघ्नं कर्त्ता प्रयाणके। प्रयाणन्तु विधातव्य-मवश्यमद्य वासरे ॥१॥ प्रयाणं स विनिश्चित्य, सत्वरं गन्तुमुत्थितः । शुभाऽशुभं मुहूर्त्तं नो, गणयन्ति मदोद्धताः ॥ २ ॥ कुक्कुटस्वनमाकर्ण्य, प्रयाणं शुभदायकम् । दैवज्ञवचनं मान्य-मिति मन्त्री रुरोध तम् ॥ ३ ॥ लीलाधरोऽपि शुभमुहूर्त्तंविना प्रयाणंमन्दफलदायकमिति विज्ञाय प्रयाणतोव्यरमत्-लीलावती स्वामिगुणान्स्मरन्ती, तदन्तिकत्वं न जहात्यधीरा । स्वकार्यदत्ता हि निजार्थसिद्धिं, प्रकल्पयन्त्युन्नतकर्मजन्याम् ॥ १ ॥ मन्त्रीश्वरस्तं विनिवृत्य मासा-नस्थापयत् पट् निजसद्मनि त्तमी । तथाऽपि लीलाधरचि-त्तमासी-द्विदेशसंपत्तिसमीहयोत्सुकम् ॥२॥ दैवज्ञैश्च समादिष्टे, कुक्कुटस्य स्वनेऽश्रुते । प्रयाणमपि नाकार्षी-दात्मलाभमपेक्ष्य सः ॥ ३ ॥ परिभ्रमत्तन्नटमण्डलं तदा, समाययौ तत्र पुरे सचन्द्रकम् । सदुन्दुभिध्वानसुवेणुनिःस्वनै-र्दिग्मण्डलं गर्जयदुन्न-तिप्रियम् ॥ ४ ॥ निजगौरवंसमीहमानाःसर्वे नटा नृपान्तिकंगत्वा निजोत्तारकंमार्गयन्तिस्म, नृपेणाऽपि मन्त्रिगृहान्तिके तेषां-निवासस्थानंप्रदत्तम् । नटैस्तत्रोत्तारकोविहितः । तेषांसैनिकास्तु नगराद्बहिःसरस्तटे पटमण्डपान्विधाय निवासंचक्रुः। विहित-भोजना नटा धृताभिनवनेपथ्या गृहीतकुक्कुटराजनिदेशा दिनान्ते नृपान्तिकंजग्मुः-गीतगानैः कलाभिश्च, ललितैर्ललिताम्बराः ।

स निशामुखे शयनस्थानमशिश्रियत् । ततो गजगामिनी लीलावती ललितगत्या निजस्वामिनःसन्निधौ जगाम,स्वशोचमानो-लीलाधरोदृष्टिमात्रेणाऽपि तां न सममावयत् । निजविचारैकनिमग्नंतंविभाव्य ललिताकृतिर्लीलावती मन्दस्वरेण प्राह—स्वामिन् ? दृष्टिविकासेन, प्रेचस्व मां समागताम् । पिपीलिकानिमित्तं हि, कटकं तु निरर्थकम् ॥ १ ॥ अन्येषु कार्यमार्गेषु, गामत्रमत्य कथं प्रभो ? । गमिष्यसि ममस्नेहं, न स्मरिष्यसि चान्तरे ॥ २ ॥ वियुक्तस्य पुनर्योगो–भवतीति न निश्चयः । योगोऽतः स्नेहिनां नैव, त्याज्यो बुद्धिमतां प्रियः ॥ ३ ॥ स्वामिन् ? अन्यजनस्पृहणीयामीदृग्विधांसुखसम्पदंविमुच्य देशान्तरंजिगमिषुर्भवादृशःस्वेच्छाचारी कोऽपि मया न विलोकितः । तयैवंसकलायांनिशि प्रबोधितोऽपि स निजाग्रहंन शिथिलीचकार. विमातायांविभावर्यांतज्जनकस्तत्र समागतस्तेन पुनर्बोधितोऽपि स निजसङ्कल्पंनात्यजत् । ततोविज्ञातसारोमन्त्री तत्रागत्य श्रेष्ठिसुतमवोचत्, विदेशगमनमेव हितदायकमिति ते दृढनिश्चयस्तर्हि स्वकार्यसाधकमुत्तमंमुहूर्त्तमवेक्षणीयमिति-मन्त्रिवचने तेन स्वीकृते सति मन्त्री श्रेष्ठान् मौहूर्त्तिकान्समाकार्य सर्वसिद्धिप्रदंमुहूर्त्तमपृच्छत् । मन्त्रिणोभेदग्रस्तंवाक्यंनिशम्य ज्यौतिषिकैर्विज्ञातं यतोऽस्य विदेशयात्रा मन्त्रिणोनैव संमता, ततस्तेऽपि परस्परंविचार्य प्रोचुः । मन्त्रिन् ? पञ्चाङ्गशुद्ध्या षण्मासपर्यन्तंश्रेष्ठंमुहूर्त्तंनाऽस्ति, वयंकिंकुर्मः ?, तथाप्येकैव गतिरवशिष्टा विद्यते. कुक्कुटे रुवे स प्रयाणंकरोतिचेत्कार्यसिद्धिः-स्यात्, प्रभूतंचद्रव्यंसमुपार्ज्य स गृहंसमेष्यति। ततोमन्त्री यथायोग्यंदक्षिणांप्रदाय सर्वान् दैवज्ञान् व्यसृजत् । अथप्रयाणसामग्रीं विनिर्मातुकामोमन्त्री लीलावतींलीलाधरञ्च स्वगृहमनैषीत् । ततोमन्त्री निजसेवकान्समाहूय रहस्येवममन्त्रयत्–कुक्कुटस्य ध्वनिं श्रुत्वा, जामाता गन्तुमिच्छति । देशान्तरमतो यूयं, शृणुतैतद्वचो मम ॥ १ ॥ कुक्कुटान्सकलानस्मा–न्निष्कासयत

सर्वतः । स चेच्छ्रोष्यति तच्छब्दं, स्थास्यति वारितोऽपि नो ॥ २ ॥ सचिवाज्ञामुरीकृत्य, यथादेशं नियोगिनः । समस्तं नगरं चक्रु-र्हीनकुक्कुटसन्तति ॥ ३ ॥ इयं तेषां गूढरचना लीलाधरेण नाऽज्ञायि । यतः—सुप्रयुक्तस्य दम्भस्य, ब्रह्माऽप्यन्तं न गच्छति । कौलिको विष्णुरूपेण, राजकन्यां निषेवते ॥ १ ॥ निशाप्रान्ते गृहीतसाधनः सज्जीभूय दत्तकर्णोलीलाधरःकुक्कुट-स्वरंश्रोतुमतिष्ठत्-न तच्छब्दः श्रुतस्तेन, प्रयाणमभिकाङ्क्षता । कुक्कुटेन विना शब्दः, कथं स्याच्छ्रुतिगोचरः ॥ १ ॥

स्वमनसि सोऽपि व्यचिन्तयत्—कुक्कुटो न कथं ब्रूते, विघ्नं कर्त्ता प्रयाणके। प्रयाणन्तु विधातव्य-मवश्यमद्य वासरे॥१॥ प्रयाणं स विनिश्चित्य, सत्वरं गन्तुमुत्थितः । शुभाऽशुभं मुहूर्त्तं नो, गणयन्ति मदोद्धताः ॥ २ ॥ कुक्कुटस्वनमाकर्ण्य, प्रयाणं शुभदायकम् । दैवज्ञवचनं मान्य-मिति मन्त्री रुरोध तम् ॥ ३ ॥ लीलाधरोऽपि शुभमुहूर्त्तंविना प्रयाणंमन्दफलदायकमिति विज्ञाय प्रयाणतोव्यरमत्- लीलावती स्वामिगुणान्स्मरन्ती, तदान्तिकत्वं न जहात्यधीरा । स्वकार्यदक्षा हि निजार्थसिद्धिं, प्रकल्पयन्त्युन्नतकर्मजन्याम् ॥ १ ॥ मन्त्रीश्वरस्तं विनिवृत्य मासा-नस्थापयत् पद्‌ निजसद्मनि क्षमी । तथाऽपि लीलाधरचि-त्तमासी-द्विदेशसंपत्तिसमीहयोत्सुकम् ॥२॥ दैवज्ञैश्च समादिष्टे, कुक्कुटस्य स्वनेऽश्रुते । प्रयाणमपि नाकार्षी-दात्मलाभमपेक्ष्य सः ॥ ३ ॥ परिभ्रमत्तन्नटमण्डलं तदा, समाययौ तत्र पुरे सचन्द्रकम् । सदुन्दुभिध्वानसुवेणुनिःस्वनै-र्दिग्मण्डलं गर्जयदुन्न-तिप्रियम् ॥ ४ ॥ निजगौरवंसमीहमानाःसर्वे नटा नृपान्तिकंगत्वा निजोत्तारकंमार्गयन्तिस्म, नृपेणाऽपि मन्त्रिगृहान्तिके तेषां-निवासस्थानंप्रदत्तम् । नटैस्तत्रोत्तारकोविहितः । तेषांसैनिकास्तु नगराद्बहिःसरस्तटे पटमण्डपान्विधाय निवासंचक्रुः। विहित-भोजना नटा धृताभिनवनेपथ्या गृहीतकुक्कुटराजनिदेशा दिनान्ते नृपान्तिकंजग्मुः—गीतगानैः कलाभिश्च, ललितैर्ललिताम्बराः।

रञ्जयामासुरत्युच्चं, भूपतिं ससभं नटाः ॥१॥ तुष्टमानसोनृपतिरभाषिष्ट, भवतामद्यमार्गश्रमोजातस्तस्मादद्य विश्रान्तिर्लभ्यताम्। नाटकन्तु श्वस्तने दिने सुखेन विधीयताम् ।

इति श्रीचन्द्रराजचरित्रे तृतीयोल्लासे नवमःसर्गः ॥ ९ ॥

ततोनटा अपि स्वानुकूलंनृपशासनंप्रमाणयन्तोनिजस्थानमगच्छन् । तेषामन्तिके कृकवाकुंनिरीक्ष्य पौरास्तान्प्रोचुः, यथाऽयंचरणायुधो न विरौति तथा यत्नतोयुष्माभिःसंरक्षणीयः । कदाचिदसौ रटिष्यति तदा मन्त्रिणोजामाता तच्छब्दंश्रुत्वा देशान्तरंगमिष्यति तदानीं तन्निमित्तभाजोयूयमेव भविष्यथ, इदंवृत्तान्तंनिशम्य कुक्कुटोऽपि मौनतयाऽत्र स्थातव्यमितिस्वचेतसि निश्चिकाय । नागरिका अपि निर्वृतिमापन्नाःस्वस्वस्थानंजग्मुः । क्रमेण तमस्विन्यांव्यतीतायांप्राभातिकंसमयं निवेदयन्विस्मृतनैशिकवृत्तान्तःकुक्कुटः स्वभावतोमधुरशब्दानुच्चारयामास । तच्छब्दान् शृण्वानाःपौरा अपि विनिद्रा बभूवुः, देवमन्दिरेषु झल्लरिका नदन्ति स्म, जगच्चक्षुर्दिनकरोऽप्युदयाचलशिखरंसमारूढः । अथ श्रुतकृकवाकुस्वनोलीलाधरोनिजाश्वमारुह्य प्रयाणमकरोत् । साश्रुनयना लीलावती तं निवर्त्तयितुंभृशमाग्रहं व्यधात् । रुदन्तीं तामनादृत्य श्रेष्ठंमुहूर्त्तंमन्यमानः स प्रयाणभङ्गं नाकरोत् । पतिवियोगेन व्यथितहृदया लीलावती कुक्कुटस्वनंहालाहलोपमंमेने, तत्पतिश्च तं पीयूषवदमन्यत । भर्तृवियोगमसहमाना सा मूर्च्छिता भूमौ निपपात, शीतलोपचारैरुपचरिता सा क्रमेण लब्धचैतन्याऽन्यजनान्रोदयन्ती भृशंविललाप।

रे दैव ! किं दुष्ट ! तवापराद्धं, दुःखं ददत्किं न दधासि लज्जाम् । दीनामनाथामबलां मुधा त्वं, कदर्थितुं नैव बिभेषि किञ्चित् ॥ १ ॥ निजसखीमुद्दिश्य सा वदति—हारो नारोपितः कण्ठे, मया विश्लेषभीरुणा । इदानीमन्तरे जाताः, पर्वताः सरितो

द्रुमाः ॥ २ ॥ याः पश्यन्ति प्रियं स्वप्ने, धन्यास्ताः सखि ? योषितः । अस्माकन्तु गते कान्ते, गता निद्राऽपि वैरिणी ॥३॥
तथाच—यदीयचलमालोक्य, गतः प्रेयान्विधूय माम् । आलोकये कथं सख्य—स्तस्य चन्द्रमसो मुखम् ॥ ४ ॥ सा वीजयन्तं-
सखीगणंप्रत्याह—विरमत विरमत सख्यो !—नलिनीदलतालवृन्तपवनेन । हृदयगतोऽयं वह्नि—र्झटिति कदाचिज्ज्वलत्येव
॥ ५ ॥ हन्तालि ! सन्तापनिवृत्तयेऽस्याः, किं तालवृन्तं तरलीकरोषि । उत्ताप एषोऽन्तर्दाहहेतु—र्नतभ्रुवो न व्यजनापनोद्यः
॥ ६ ॥ वरमसौ दिवसो न पुनर्निशा, ननु निशैव वरं न पुनर्दिनम् । उभयमेतदुपैत्वथवा क्षयं, प्रियजनेन न यत्र समागमः
॥७॥ अरतिरियमुपैति नाऽपि निद्रा, गणयति तस्य गुणान्मनो न दोषान् । विगलति रजनी न संगमाशा, व्रजति तनुस्तनुतां
न चानुरागः ॥ ८ ॥ प्रियसखि ! न तथा पटीरपङ्को—न च नलिनीदलमारुतोऽपि शीतः । शमयति मम देहदाहमन्तः, सपदि
कथैव यथा महेभ्यसूनोः ॥ ९ ॥ अहो ? केन वैरिणाऽयंताम्रचूडोरक्षितः ? येन सर्वथा मेऽहितमुत्पादितम् । रे दैव ? जगदण्डं-
रचयता त्वया कुक्कुटजातिः कथंनिर्मिता ? येन मे पतिविरहो निरमायि, अस्मिन्नगरे तादृशोधृष्टःकोवसति ! येन मृत्युमिच्छता
नृपाज्ञामप्यविगणय्य प्रच्छन्नं ताम्रचूडोरक्षितः । अथैवंविलपन्ती लीलावती सत्वरंस्वजनकं समाहूय सकलंवृत्तान्तंन्यवेदयत्—
उक्तञ्च क्रोधारुणनेत्रया तया, हे तात ? ताम्रचूडसमेतंतंमम वैरिणमत्र समानय । निजपुत्रीप्रेरितोमन्त्री तद्गवेषणाय निजभृत्या-
नादिशत्—गृहीतनिदेशास्तेऽपि सकलंनगरंविलोकयन्तोनटान्तिके ताम्रचूडशुद्धिंलब्ध्वा मन्त्रिणंतद्वृत्तान्तंव्यजिज्ञपन् । मन्त्रिणा
भणितं—वत्से ! कोपं परिहर, ह्यस्तने दिने विदेशान्नटमण्डलमत्र समागतं तदन्तिकेऽयंकुक्कुटोवसति, अनभिज्ञातवृत्तान्तानां
तेषामत्र को दोषः ! अधुना ते प्राघूर्णकदशामनुभवन्ति, तस्मादनागसस्ते स्वकीयंताम्रचूडंकथमर्पयन्ति, बलादपि तद्ग्रहणंनोचि-

त्तमस्माकं नीतिवेदिनाम्। प्रायशोनटजातिरपि दुराग्रहग्रस्ता निजसङ्कल्पं न मुञ्चति, तस्मात्त्वं ताम्रचूडवाञ्छांपरित्यज। लीलावती सावेगं प्राह—हेतात ? तंकुक्कुटमाशु मेऽर्पय, निहत्य तंवैरिणमुद्यतायुधा। क्रोधानलंसान्त्वयितुंमनोभव-मिच्छामि पापिष्ठज-नान्तिकस्थितम् ॥ १ ॥ तत्पापिष्ठवधं कृत्वा, पातुमिच्छामि जीवनम्। प्रत्यर्थिषु हि गर्जत्सु, को न गच्छति विक्रियाम् ॥ २ ॥ एवंविपमतरांतत्प्रतिज्ञांनिशम्य मन्त्री चिन्तातुरोजातः। उपायान्तरमजानता तेन नटाधिपंसमाकार्य कुक्कुटाक्रमार्गितः। नटाधिपोऽवदत्, अप्रदेयोऽयंताम्रचूडो न मार्गणीयस्त्वया, नाऽयंकेवलमस्माकंजीविकासाधनमस्माकंराजाऽप्ययमेवाऽस्ति, अतो-ऽस्य जिघृक्षा त्वया न विधेया,—रुष्टा त्वद्दुहितैतस्मि-ञ्जानामि मन्त्रिपुङ्गव ?। जीवत्स्वस्मासु रोमाञ्चं, कोऽस्य नमयितुं प्रभुः ॥ १ ॥ वयं पञ्चशती मन्त्रिन् ? सेवकास्त्यक्तजीविताः। तदर्थं कटिबद्धाः स्मः, स्वव्यापारसमुद्यताः ॥ २ ॥ अन्ये सप्तसह-स्राणि, तुरगारूढसैनिकाः। तद्रक्षिणो महौजस्काः, संस्थिता नगराद्बहिः ॥३॥ यद्यपि कुक्कुटाधीशो-ऽस्मानाज्ञापयति द्रुगात्। त्वदीयराज्यं निर्मूलं, विधातुं प्रभवो वयम् ॥ ४ ॥ इदं मदीयं वचनं हि सत्य,—मप्रत्ययश्चेद्व्रज सिंहलेशम्। पृष्ठ्वैव तं चेतसि तावकीने, सत्यप्रतीतिः खलु भाविनी द्राक् ॥५॥ मन्त्रिन् ? कस्य जनन्या सपादप्रस्थपरिमिता शुण्ठी भक्षिता? योऽस्माकी-नंकुक्कुटाकुंवक्रदृष्ट्या विलोकयेत् ? अतस्त्वया सा वार्त्ता विस्मर्त्तव्या, सावधानीभूय स्वहितंसाधय, नायंसामान्यकुक्कुटो-यतस्तमभिभवितुं त्वमिच्छसि । एवंगरीयसींनटोक्तिमाकर्ण्य कौतुकाविष्टोमन्त्री मौनमुद्रामाधाय निजसुतामबोधयत्— सुते ? कदाग्रहः कर्त्तुं, युज्यते नैव सांप्रतम्। विरोधो बलिभिः सार्द्धं, केवलं दुःखदायकः ॥ १ ॥ तथाऽपि वचनं सत्यं, करिष्यामि त्वदीयकम्। बोधयित्वा नटाधीशं, भव निर्मलमानसा ॥ २ ॥ ततोऽभाणि नटस्तेन, मत्पुत्रीवचनं कुरु। ताम्र-

चूडप्रदानेन, सफलं नटपुङ्गव ? ॥ ३ ॥ स्वल्पकालेन दास्यामि, तं तथावस्थमक्षतम्। अविश्वस्तमनास्त्वञ्चे-न्मत्पुत्रमात्मसात्कुरु ॥ ४ ॥ इतिमन्त्रिणोदृढाग्रहंविलोक्य तद्वचनप्रतिबद्धा नटा निजोत्तारके समेत्य मन्त्रिपुत्रात् (मंत्रिपुत्रंगृहीत्वा) तं तद्भृत्येभ्यः प्रायच्छन् । गृहीतपञ्जरास्तेऽपि प्रमुदिताः, लीलावतीसमीपे समागत्य कुक्कुटंदर्शयामासुः । निरीक्षिते तस्मिंस्तस्या मानसंप्रसन्नंजज्ञे, ततःस्नेहबुद्ध्या सा पञ्जरंनिजोत्सङ्गे निधाय कृकवाकुना समं वार्त्तालापंप्रारभत—ताम्रचूड ? त्वया व्यर्थं, शब्दमुच्चरताऽहितम् । मम संपादितं तेन, वैरी मे दुःखदो भवान् ॥ १ ॥ आकृत्या दृश्यसे सुष्ठु, हृदयं विषवासितम् । वाचालत्वेन मद्भर्त्तु–र्वियोगं कृतवान्भवान् ॥ २ ॥ तत्कर्म कुर्वतो मोक्षः, कुतो भावी तवाऽधुना । परदुःखप्रदातॄणां, मङ्गलं सुलभं नहि ॥ ३ ॥ सुवर्णपञ्जरस्थस्त्वं, परमानन्दभावितः । न जानासि कृशाङ्गीनां, भर्त्तुर्विरहवेदनाम् ॥ ४ ॥ हे ताम्रचूड ? पतिविरहोऽतीव दुःसहोऽस्ति, त्वन्तु विहगजात्यांसमुत्पन्नस्तत्राऽपि स्वभार्यावियुक्तस्त्वंकीदृशींवेदनामनुभवसि । अहन्तु मानवजातिरस्मि, अतस्त्वंविचारय, पतिदेवतायाःस्त्रीजातेर्वासराः पतिमन्तरा कथं यान्ति ? पूर्वजन्मनि मादृशोबहवोजनास्त्वया वियोगंप्रापितास्तज्जन्यपापेनैवाऽस्मिञ्जन्मनि त्वंविहगोजातोऽसि, पक्षिजातिः सर्वथा विवेकविकला विद्यते, पुनस्त्वन्त्वतीव निर्घृणोनिर्मोहश्च दृश्यसे, यदि त्वंस्वल्पमपि विवेकंधृत्वा मौनमुखोऽभविष्यस्तदा मेपतिवियोगोनाऽभविष्यत् । हे विहङ्गम ? निर्दयकर्मविधायिनोऽपि तव रूपसौन्दर्यंविलोक्य मदीयंमानसंदयार्द्रंजातमस्ति । इत्थंमर्मघातीनि लीलावतीवचनानि समाकर्ण्य कुक्कुटोनिजपूर्वाऽवस्थामस्मरत् । ततोऽकालवृष्टिमिव नयनयोरश्रुधारांवहमानः सुदीर्घंनिःश्वसन्मूर्च्छामवाप्य पञ्जरे निपपात, तदवस्थंतंविलोक्य लीलावती सहसा संभ्रान्तहृदयाऽजनिष्ट, ततःसा पञ्जरात्तंनिष्कास्य निजोरसाऽऽलिङ्ग्य सावधान-

मकार्षीत् । पुनःसाऽवदत्—विहङ्गम ? मया तुभ्यं, भणितं मुग्धभावतः । तेनाऽसाधारणं दुःखं, कथं जातं तवाऽधुना ? ॥१॥ ब्रूहि तत्कारणं पक्षिन् ?, गोपनीयं न चेन्मम । विश्वस्तानां हि किं गोप्यं, सत्यवक्ता सुखी भवेत् ॥ २ ॥ विरहव्यथिताऽहन्तु, प्रावोचमीदृशं वचः । तवेदृशं कुतो दुःखं, जातं विस्मयकारकम् ॥ ३ ॥ अनेन तव दुःखेन, सापराधाऽस्मि साम्प्रतम् । दुःखं निवेद्य मां सद्यो-भव निर्वृत्तिभाजनम् ॥ ४ ॥ स्वदुःखस्य विघाताय, त्वामपृच्छं द्विजोत्तम ? । किन्तु दुःखं त्वदीयं मे, मानसं पीडयत्यलम् ॥ ५ ॥ अतोभवान्मत्तोऽप्यधिकतरांविरहवेदनामनुभवन्दृश्यते । तत्कारणंनिवेदय ततस्ताम्रचूडेन भूतलेऽक्षराणि विलिख्य तस्यै विज्ञापितम्, प्रमदे ? चन्द्रराजनामाहंनृपतिराभापुर्यांन्यवसम्, मद्विमात्रा निष्कारणमहमिमांदशां प्रापितः । गुणावली नाम्नी मम महिषी गृहेस्थिताऽपूर्वपीडामनुभवति, तस्याविरहोमांभृशंव्यथयति, त्वदग्रे कियद्दुःखंवर्णयामि, एकेन मुखेन मया वक्तुंकुतःपार्यते ? । मद्वियोगेन साऽपि दुःखार्णवे निमग्ना भविष्यति, पुनश्चाऽहंनटैःसार्द्धंपञ्जरे पतितोऽनिशंदेशान्तरे पर्यटामि ॥ आभापुरी मदीया क्व, क्व च मे राजमण्डलम् । क्व सा राज्ञी क्व मानुष्यं, क्व तिर्यक्त्वगतिर्मम ॥ १ ॥ शोभनाङ्गि ? मद्दुःखपारो न विद्यते, देशान्तरगतस्त्वत्पतिस्त्वचिरादागमिष्यति, परं गुणावल्या मम समागमोभविष्यति न वेति सर्वज्ञप्रभुर्जानाति, अतोहंब्रवीमि, स्वसः ? मत्तुल्यंतव दुःखंनाऽस्ति, मेरुसर्षपसमानंदुःखंवहमानयोरावयोर्महदन्तरंविद्यते । क्षणमात्रमपि पतिवियोगमसहमाना त्वमीदृशींवेदनामनुभवसि, तर्हि मत्पत्न्याःकीदृशीस्थितिर्भविष्यति ? किंबहुभाषितेन ? श्रुतमात्रेण तद्दुःखेन क्षणमपि जीवितंत्वंन धारयेथाः । इत्थंताम्रचूडाभिप्रायंविदित्वा लीलावती काञ्चित्प्रमोदमापन्ना निजदुःखं शिथिलीचकार, विज्ञातञ्च तया मनस्विन्या, कःकस्योपकृतिं करोति, उभौसमानौमिलितौ । पुनःसा चन्द्रराजमाह—न मन्तव्यं

त्वया दुःखं, कर्ममूलं नरेश्वर ? । अचिराल्लप्स्यसे राज्य–रमणीप्रभवं सुखम् ॥१॥ प्रियभ्राताऽसि मे राजन् !, तवाऽहं भगिनी प्रिया । दैवेन निर्मितो नूनं,, सम्बन्ध आवयोरयम् ॥२॥ मनुष्यत्वमथासाद्य, भवता दर्शनं मम। अवश्यमेव दातव्यं, कुर्वत्याः स्मरणं तव ॥ ३ ॥ अविचार्य मया प्रोक्तं, क्षन्तव्यं भवता वचः । कृपालवः सदा सन्तः, सापराधेऽबलाजने ॥ ४ ॥ हे वीरमूर्द्धन्य ! मनोरथास्तव, भवन्तु सद्यः सफला धराधिप ! । स्मृतिर्मदीया भवतानुवासरं, नोपेक्षणीया स्वपदानुसेविना ॥ ५ ॥ त्वद्दर्शनेनैव मदीयजन्मनो,–जानामि साफल्यमनल्पशर्मदम्। अतोऽस्मदीयां परिपद्य दोपतां, कृपालुना भाव्यमपि त्वया मयि ॥ ६ ॥ एवंताम्रचूडेन साकं स्वाभिप्रायं दर्शयित्वा सा तं नटाधिपाय प्रत्यर्पयत् । तदानींमन्त्रिपुत्रोऽपि स्वगृहमागमत् । अथगृहीतसत्कारानटास्तस्मान्निर्गत्यानेकग्रामनगराणि पर्यटन्तः कुत्राचित्कुक्कुटनिमित्तंसंग्राममपि कुर्वन्तोऽद्भुतकलाकौशल्येन भूयसींकीर्त्तिसम्पादयन्तःक्रमेण विमलापुरीमभिजग्मुः । यत्र च वीरमत्या पुरा सहकारःस्थापितस्तत्रैव पटमण्डपंविधाय ससैनिका नटा निवासंचक्रुः । ताम्रचूडःपूर्वपरिचितांतांभूमिमुपलक्ष्य प्राक्तनस्नेहंसंस्मरन् भाटकेन परिणीतांप्रेमलालक्ष्मीमपि सस्मार, चिन्तितञ्च तेन—यत्रागमेनैव विहङ्गमोऽहं, जातोऽस्मि सैवाऽस्ति पुरी विशाला । दुःखाद्विमुक्तिः पुनरागतस्य, ममाऽत्र भाविन्यकलङ्कितस्य ॥ १ ॥ नो चेदिदं पत्तनमद्भुतंक्व ?, क्व मे पुरी स्वर्गिगणोपसेव्या ? । सुदैवयोगेन सुदुर्घटानि, सिद्ध्यन्ति कार्याणि मनुष्यलोके ॥२॥ तथा च—जीवन्नरोभद्रशतानि पश्येत्, अन्यच्च ॥ जीवन्नरःस्वेष्टजनस्य संगति–मासादयेत्कर्मगतिप्रभावतः । मनुष्यकीटोऽन्यदहो ? विचिन्तय–त्यखण्डिताज्ञो विधिरन्यदेव च ॥ १ ॥

इयमुक्तिरवितथा प्रतीयते, पुराऽहमत्र समागतः परमप्रमोदमविभरम् । तत्सर्वंविफलंजातमतएवविधिनाऽहंपक्षित्वंप्रापितः,

एवंविचिन्तयन्स नटः सार्द्धंप्रमोदमनुभवंस्तत्रतस्थौ । इतोनिजप्रासादे सखीभिःसहोपविष्टायाःप्रेमलालक्ष्म्या वामनयनमस्फुरत् । तेन संजातरोमाञ्चा साऽवदत्—सख्यो ! मदीयं वचनं शृणुध्वं, वामाम्बकं मे स्फुरितं किलाद्य । मत्स्वामिनः सङ्गम एव भावी, जानामि तेनेति सुदैवयोगात् ॥ १ ॥ पुरा कुलदेव्याऽपि भणितं षोडशवर्षान्ते तव पतिसंयोगोभविष्यति, सैव समयोऽधुना संप्राप्तः, किन्त्वस्मिन्विषये मच्चेतस्येकोमहान्सन्देहःप्रादुर्भवति, इतःसहस्रक्रोशंस्थितायाआभापुरीतोमद्भर्त्ता कुतोऽत्र समायाति ? तद्गमनानन्तरंसन्देशवचनंकुशलपत्रञ्च सर्वथा नास्ति, तस्य समागमःकथंस्यात् ? पुनर्देवीवचनमपि मिथ्याभवितुंनार्हति, यतः—देवतानां वचः सत्यं, निष्फलं नैव जायते । अपक्षपातविज्ञानां, कुतो हि कूटजल्पनम् ? ॥ १ ॥ अतोदूरस्थितोऽपि मद्भर्त्ताऽद्य मिलिष्यतीति सत्यंमन्ये, इत्थंतद्वचनानि समाकर्ण्य तत्सख्यःप्रोचुः—भगिनि ! त्वद्वचः सत्यं, भवत्वमृतसन्निभम् । प्रियोऽपि पैतृकःस्नेहो—युवत्यै नैव रोचते ॥१॥ त्वद्भर्त्ता चन्द्रराजस्तु, सर्वेषां प्रीतिकारकः । स्पृणीयगुणं को हि, विसरेत्सरपुङ्गवम् ॥२॥ भगवति ! त्वदीयतपोबलेन चन्द्रराजस्त्वांमिलिष्यति, देवीगदितसमयोऽप्यधुना परिपूर्णोजातः । तस्मात्सांप्रतंतव पतिदर्शनं-दुर्लभं न मन्यामहे, समयंप्राप्य सर्वंफलति । यतः—उदुम्बरः फलत्येव, निजकालप्रभावतः । पत्रहीनकरीरोऽपि, फलत्येव यथाक्रमम् ॥ १ ॥ क्रमेण पूर्यते वार्भिः, सरः शून्यमपि क्षणात् । सखि ! त्वद्वाञ्छितं सर्वं, सेत्स्यति दैवयोगतः ॥ २ ॥ इत्थंप्रेमलासमचंप्रमोदवत्यःसर्वसख्यःपरस्परमालापंकुर्वन्ति, तावत्स सपरिवारोनटराजोगृहीतपञ्जरोराजसभायांसमागतः । सिंहासनस्थितंपार्थिवंप्रथमंप्रणम्य सविनयमाशीर्वादंश्रावयित्वा स जगाद—राजेन्द्र ! तव देशोऽद्य-मन्वर्थनामधारकः । सौराष्ट्रो राष्ट्रमूर्धन्यो,-विभाति संपदालयः ॥ १ ॥ पुरीयं विमला धन्या, धन्यलोकसमाश्रिता । चिरादुत्कण्ठितानां यां, द्रष्टुं नः

पूर्णताऽजनि ॥ २ ॥ राजेन्दो ? सर्वमान्यस्य, दुर्लभं तव दर्शनम् । अद्यैव जातमस्माकं, जीवितं सफलं प्रभो ! ॥ ३ ॥ सर्वत्र भ्रमता दृष्टा, मयैकाभापुरी वरा । तादृशी वैभवाढ्या च, द्वितीया विमलापुरी ॥ ४ ।

एवंनगरशोभांवर्णयन्तोनटा नाट्यसाधनानि सज्जीचक्रुः । प्रथमंपवित्रीकृतभूप्रदेशे पुष्पपुञ्जंविरचय्य तदुपरि कुक्कुटपञ्जरं स्थापयित्वा जयध्वनिंचक्रुः । ततस्त आयामतरमेकंवंशंभूमौ निखन्य परितःकीलकावलम्बितरज्जुपाशैस्तंनिबध्य दृढीचक्रुः । अथ स्फारशृङ्गारा शिवमाला पुरुषवेषा वंशमूलमासाद्य परितोदृष्टिंप्रसारयन्ती तस्थौ, अद्भुतरूपलावण्यांतांनिरीक्ष्य सभ्यजनाः परमं-विस्मयंप्रापुः । नृपतिश्च व्यचिन्तयत्, ईदृग्रूपवैभवसंपन्ना सूर्यप्रभेव तेजस्विनी देवकन्या किं वा मानवकन्या ? भूतलस्पर्शिनी देवकन्या तु न संभवति, ततःकौतुकिना नरेन्द्रेण नाट्यंनिरीक्षितुंप्रेमला समाहूता, साऽपि तत्र समागत्य निजपितुरुत्सङ्गे संनिविष्टा स्थिरदृष्ट्या तद् व्यलोकयत् । राज्ञा भणितम्—वत्से ! नटा इमे सर्वे, आभापुर्याः समागताः । नाट्यं विलोक्यतामेषां दक्षाणां स्वस्थ-चेतसा ॥ १ ॥ नाट्यकलाकोविदेयंनटसुता नभस्तलस्पर्शिनि वंशे चटित्वाऽनेकधा निजकलांदर्शयिष्यति, एवंवर्णयति पार्थिवे पौ-रजनेषु पश्यत्सु च शिवमाला वंशाग्रंसमारुह्य विविधान्यासनानि विधाय जनमनांसि क्षणाद्रञ्जयामास । ततोऽसकृद्वंशोपरि नृत्यं-कृत्वा अतिदक्षकमदृष्टपूर्वाःकलाःप्रदर्शयन्ती सा नीचैरवतीर्य नृपसन्निधौ गत्वा प्रणाममकरोत् । पौरजनसमेतःपार्थिवःप्रसन्नोऽभूत् । प्रमुदितेन नृपेण तस्यैप्रभूतंधनंप्रदत्तं नागरिकैरपि वस्त्राद्यलंकाराणांवृष्टिर्विहिता, तस्मिन्क्षणे पञ्जरस्थस्ताम्रचूडःप्रेमलांविलोक्य पूर्वपरिणीतांतामुपलक्ष्य चेतसि भूरिमोदमाबभार । अचिन्तयच्च, अहो ! षोडशवर्षान्तेऽद्य मे भार्यावियोगोविनष्टः, अगतिकाः-कूपाःपरस्परं न मिलन्ति, मानवास्तु दूरस्थिता अपि सगतिका मिलन्त्येव, पुनःस चिन्तयति,—पक्षित्वं प्राप्तवानस्मि, निरुपायः

करोमि किम् । अन्यथाऽऽनन्दनोत्साहं, प्रतिदेशं प्रवर्त्तये ॥१॥ ममोपकारिणी माता, कोटिवर्षाणि जीवतु । यामत्कर्माऽनुरोधेन, कुक्कुटं मां विनिर्ममे ॥२॥ नो चेदत्र कुतो मे स्या-द्गमनं दूरवर्त्तिनः । दीव्यरूपगुणायाश्च, प्रियाया दर्शनं कुतः ॥ ३ ॥

एभ्योनटेभ्योऽपि स्वस्ति भूयात्, यतस्तैरत्राहंसमानीतः सर्वत्र मदीयंयशोवर्णयन्तस्ते महोपकारिणोधन्यवादमर्हन्ति । अद्य प्रभाते कस्यचित्सुकृतिनोमुखंमया विलोकितं, येन मद्भार्याया दर्शनंचिरेण संजातम् । धन्योऽयंवासरोऽपि यस्मिन्प्रादुर्भूतैःसंयोगाङ्कुरैश्चिरकालीना विरहव्यथाऽपि मे क्षीणतामवाप । सम्प्रतीयंप्रेमला नटसकाशान्मांलात्वा निजान्तिके रक्षति, तर्हि पक्षित्वं-विहायाऽवश्यमेव मानवोभवामि, तदैव मामकीनाःसर्वे मनोरथाःसिद्ध्यन्ति, यदि शिवमाला मामस्यै ददाति तर्हि सर्वं समञ्जसं-भवेत् । एवंध्यायति तस्मिन् सा पुष्पपुञ्जस्थितंसुवर्णपञ्जरमपश्यत् । तत्र स्थितंताम्रचूडंप्रणमतोनटान्विलोकमाना सा परम-कौतुकंमेने, विशेषतोविलोकयन्ती सा कुक्कुटमद्राक्षीत् । तदानींसोऽपि तामभिलक्ष्य दृष्टिंप्रेरयामास । उभयोर्दृष्टिसंयोगो-ज्जातो-ऽन्योऽन्याभिलाषिणोः । ध्यानस्थाविव रेजाते, निर्निमेषाम्बकौ च तौ ॥ १ ॥

इतिश्रीजगद्विभूषणशासनचक्रवर्तिस्वपरसमयपारगामितपागच्छनभोमणिप्रबलतरपुण्यप्रकाशकपूज्यपादमहोपकारिप्रातःस्मरणीययोगनिष्ठाऽध्यात्म-ज्ञानदिवाकरश्रीमद्बुद्धिसागरसूरिपुङ्गवशिष्य श्रीमद् अजितसागरसूरीश्वरविरचिते संस्कृतगद्यपद्यात्मके श्रीमच्चन्द्रराजचरित्रे प्रेमला-लक्ष्मीजीवनचन्द्रकुक्कुटजननशिवमालाकुक्कुटप्रदानप्रेमलामिलनरूपाभिश्चतसृभिःकलाभिःसमन्विते तृतीयोल्लासे दशमः सर्गः समाप्तः । समाप्तश्चायंतृतीयोल्लासः ॥ ३ ॥

## ॥ अथचतुर्थोल्लासःप्रारभ्यते ॥

श्रीवीरमिष्टदं वन्दे, केवलज्ञानभास्करम् (सेवधिम्)। सुधाऽनुष्ठानसंप्राप्ति-र्येन संपद्यते नृणाम् ॥१॥ यत्प्रसादाद्भवत्याशु, साष्टाङ्गयोगसंगतिः। अगम्यगतिकोयोग-स्तद्वेदी कोऽपि पुण्यवान् ॥२॥ वाह्यक्रिया कष्टरूपा, भवशर्मविधायिनी। आन्तरिकिक्रिया शुद्धा, चिदानन्दं तनोत्यलम् ॥३॥ वाह्ये परिग्रहे त्यक्ते, न कोऽपि शुद्धिमान्भवेत्। विमुक्तकञ्चुको नागो-निर्विषो नैव जायते ॥४॥ आत्मारामः सदा तिष्ठे-त्सैवालौकिकभेदवित्। उदरार्थं हि यत्कष्टं, मिथ्याखेदविधायि तत् ॥५॥ कुमतिर्यो वलाद्बुद्धेः, श्रुतार्थं गोपये-न्मुधा। ज्ञानी तु तं नरं वेत्ति, जैनागमप्रलापिनम् ॥६॥ अजस्रं यो जिनस्याज्ञां, मन्यते मतिमान्नरः। गोष्पदप्रो भवेत्तस्य, भवोदन्वा-न्महोत्कटः ॥७॥ वाह्यक्रियां प्रकुर्वाणो-योऽन्तःक्रियां समाचरेत्। चन्द्रराज इव चोण्यां, लभते स शुभाङ्कुरान् ॥८॥ भव्याः ? शृण्वन्तु चन्द्रस्य, तूरीयोल्लासमुत्तमम्। माधुर्यमस्य चास्वाद्य, सकपायोऽमृतायते ॥९॥ यथा धर्मश्चतुर्थोऽस्ति, यथा ध्यानं चतुर्थकम्। तथाऽयं तुर्य उल्लासः, शिवदो ज्ञानसेवधिः ॥१०॥ नृपदानेन संतुष्टा--नटाः पत्री तथैव च। इतोऽग्रे स्वाद्यतां भव्यैः, सत्कथारस उत्तमः॥११॥

परस्परानिमग्नचेतसोरुभयोर्दम्पत्योर्दृष्टिविघातंकर्त्तुंकोऽपि समर्थोनाभूत्, विविधालङ्कारैःसत्कृता नटाश्च नृपाग्रे विस्मयावहा-न्याख्यानानि वर्णयामासुः, तच्छ्रवणेन प्रसन्नमानसोनृपतिःपञ्जरस्थंचरणायुधंविलोक्य तस्मिन्प्रेमवानभूत् । अन्ये पौरजना अपि स्नेहदृष्ट्या तमेव वीक्षितुंलग्नाः । नृपतिः पञ्जरंस्वान्तिकंसमानाय्य कुक्कुटञ्च वहिर्निष्कास्य निजोत्सङ्गेऽस्थापयत्--सोऽपि प्रेमलायाःशरीरस्पर्शात् मोदमानस्तद्धृदयगेहंप्रविविक्षुरिव तद्वक्षसि चञ्चूप्रहारान्कर्त्तुंप्रवृत्तः । रोमाञ्चकञ्चुकंविभ्रती प्रेमला

सुकोमलकराकिसलयेन सान्त्वयन्तीव तंमुहुःपस्पर्श, सुवर्णपञ्जरान्निर्गतोऽपि विहगःपुनःप्रेमलायाहृदयपञ्जरेपतितः, प्रेमलाऽपि तस्मिन्नतीवरागवतीबभूव, यतः—रूपसम्पन्नमग्राम्यं, प्रेमप्रायं प्रियंवदम्। कुलीनमनुकूलञ्च, कलत्रं कुत्र लभ्यते ॥ १ ॥

विहगस्तत्सान्निध्यंसमीहमानोऽपिमनुष्यवाचावक्तुमशक्यत्वान्मौनतामादधानःकामचेष्टांदर्शयितुंलग्नः । साऽपि निज-मानसं तस्मै समर्प्य तद्ध्यानपरायणा जज्ञे. कियन्तंसमयंतंरमयित्वा पार्थिवःपुनःपञ्जरस्थंविधाय नटाधिपाय तत्समर्पयत्। ततोनृपोऽवादीत्—नटाधीश ? कुतः प्राप्तः, कुक्कुटोऽयं ममाधुना । वृत्तान्तमखिलं तस्य, निवेद्य निर्वृतिं भज ॥ १ ॥ श्रूयतां नरशार्दूल ? तद्वृत्तान्तमनुत्तमम् । कथयामि भवत्प्रीत्यै, विस्मयावहमङ्गिनाम् ॥ २ ॥ अष्टादशशतक्रोश–मितोऽस्त्याभापुरी वरा । तत्र राज्यधरो राजा, चन्द्रराजोऽस्ति विश्रुतः ॥ ३ ॥ गुप्तीकृतोऽस्ति तन्मात्रा, सोऽस्माभिर्न विलोकितः । वीरमत्यधुना राज्यं, पालयन्ती विराजते ॥ ४ ॥ तदग्रेऽस्माभिर्नाट्यंविहितं तदवलोक्य प्रसन्नहृदया सा चन्द्रराजमहिषींगुणावलीमनादृत्य तदन्तिकस्थमिमंकुक्कुटमस्मभ्यमदात् । वीरमत्यस्य विद्वेषिणी जाताऽस्ति, एकदा क्रोधवशादिमंहन्तुंसमुद्यतांवीरमतींनागरिका न्यवारयन् । तत्कर्म स्मरताऽनेन कृकवाकुनाऽन्यदा स्वभाषया मत्सुता शिवमाला प्रबोधिता, तद्भाषांविजानन्ती साऽपि तदीयं-वृत्तान्तमस्मानचीकथत् । ततोऽस्माभिस्तांयाचित्वा गृहीतोऽयंपतत्रयस्माकंसन्निधौस्थितःसुखेनकालंगमयति, सकलमिदंसैन्यमपि तदीयमस्ति, अस्यैवाज्ञांवयंमन्यामहे, वयमस्य सेवकाः, आभापुरीतोनिर्गतानामस्माकंनवशरदोऽव्यतीताः । इतिनटमुखाच्चन्द्र-राजवृत्तान्तंनिशम्य सौराष्ट्राधिपतिर्मकरध्वजभूपोभृशंमुमुदे, निजपतेःशुद्धिंलभमाना प्रेमलाऽपि हृष्टचेता अभवत् । कुक्कुटंविलोक्य स्नेहान्धास्तेऽप्ययंचन्द्रराज इति न ज्ञातवन्तः । नटोविज्ञापितम्—राजन्नत्र चतुर्मासीं, स्थातुमीहामहे वयम् । भवदाज्ञानु-

रोधेन, वर्त्तमाना दिवानिशम् ॥ १ ॥ मोदमानोनृपोऽवदत्—तिष्ठताऽत्र सुखेनैव, महानन्दो भविष्यति । ताम्रचूडवशीभूत--मस्माकं मानसं यतः ॥ १ ॥ भूपाज्ञया नटास्तत्र, निवासं चक्रिरे मुदा । प्रत्यहं प्रीणयामासु--र्भूपतिं कुक्कुटान्विताः ॥ २ ॥

अन्यदा मकरध्वजोनिजाङ्गजामभापत–वत्से ! त्वद्वचनं सत्यं, न पूर्वं मानितं मया । तत्सर्वमधुना सत्यं, जातं मन्ये नटोक्तितः ॥१॥ विश्वासभाजनं मन्ये, त्वामेव सत्यवादिनीम् । दैवाधीनं सुखं दुःखं, कर्मरेखा बलीयसी ॥ २ ॥ सुते ! दूर-स्थितस्य त्व--द्भर्त्तुर्योगोऽस्ति दुर्लभः । सुकृतेन विना नृणां, दुःसाध्यो हीष्टसङ्गमः ॥ ३ ॥ इच्छा चेत्कुक्कुटं तुभ्यं, दापयामि नटान्तिकात् । यदालम्बनतोऽहानि, यास्यन्ति सुखतस्तव ॥४॥ अहो ! कर्मगतिर्विचित्रा यामन्यथा कर्त्तुं कोऽपिनप्रभुः ।

उक्तञ्च–सच्छिद्रो मध्यकुटिलः, कर्णः स्वर्णस्य भाजनम् । धिग्दैवं निर्मलं चक्षुः, पात्रं कज्जलभस्मनः ॥ १ ॥

अन्यच्च–भगवन्तौ जगन्नेत्रे, सूर्याचन्द्रमसावपि । पश्य गच्छत एवास्तं, नियतिः केन लङ्घ्यते ॥२॥ पिबन्ति मधु पद्मेषु, भृङ्गाः केसरधूसराः । हंसा शैवालमश्नन्ति, धिग्दैवमसमञ्जसम् ॥ १ ॥ तथा च--विपत्तौ किं विपादेन, सम्पत्तौ हर्षणेन किम् । भवितव्यं भवत्येव, कर्मणामीदृशी गतिः ॥ २ ॥ अतोधैर्यसमाधेहि, निश्चिन्तमना धर्माराधनंकुरुष्व, वत्से ? अचिरात्तव वाञ्छितंसेत्स्यति, एवंनिजपितुर्वचनंनिशम्य तस्मिन्पत्रिणि प्रेमवती प्रेमला प्रोवाच–तात ! केनाऽप्युपायेन, कुक्कुटं दापयस्व मे । मत्स्वामिसान्निधिस्थोऽय–मतीव वल्लभोऽस्ति मे ॥ १ ॥ एतदाराधनं सम्यक्, करिष्यामि प्रयत्नतः । मदन्तिके सदा तिष्ठे–दसौ कार्यं त्वया तथा ॥ २ ॥ पुत्रीप्रेमवशोमकरध्वजस्तत्कालमेव निजदूतंप्रेष्य नटाधिपंसमाहूतवान् । सोऽपि सद्यस्तत्र समागम्य विहितप्रणामाञ्जलिर्नृपतिंबभाण–पार्थिवेन्द्र ! किमर्थं मे, स्मरणं विहितं त्वया । आज्ञाप-

यस्त्र भृत्यं मां, कृतार्थीकुरु साम्प्रतम् ॥ १ ॥ मकरध्वजोऽवदत्–कुक्कुटोऽयं नटाधीश ? चन्द्रराजगृहे स्थितः । अतोऽस्मिन्मत्सुताप्रेम, वर्त्तते कथयामि किम् ॥ १ ॥ अतस्तस्यै प्रदेहोनं, लब्ध्वा सा मुदिता भवेत् । यावज्जीवं चोपकारं, विस्मरिष्यामि नैव ते ॥ २ ॥ तन्मूल्यं दातुमिच्छामि, युष्माकं मुखमार्गितम् । बलात्कारोऽस्ति नास्माक,–मस्मिन्कर्मणि नर्त्तक ? ॥ ३ ॥ ताम्रचूडप्रदानेन, पूरयाऽस्मन्मनोरथम् । स्त्रीणां हि दुस्त्यजा भावा–विषमा विषवत्स्मृताः ॥ ४ ॥

इतिमनोविभेदविधायिनींपार्थिवमार्थनांसमाकर्ण्य द्रविताशयोनटपतिरवदत्–नृपचूडामणे ? विद्धि, नृपमस्माकमेतकम् । बहूक्तेन किमस्माकं, सर्वस्वमेष विद्यते ॥ १ ॥ तस्मादेतंप्रदातुंवयंसर्वथाऽक्षमाः, तथाऽपि तत्र गत्वाऽहंतंचरणयुगमभ्यर्थयामि,क्षणंत्वया विलम्ब्यताम् । अत्र स्थातुंतदुत्कण्ठा भविष्यति चेत्सुखेनैनंतंगृहाण, नास्माकंतद्विषय आग्रहः । एवमभिधाय नटाधिपोनिजावासंजगिमवान् । शिवमालांनिकषा क्रीडमानंकुकवाकुंशिवकुमारोनृपोदितांवार्त्तामवोचत् । सुधोपमंतद्वचनंनिशम्य कुक्कुटःप्रमोदमेदुरोजज्ञे, । पुनः स व्यचिन्तयत्–

इष्टं ममासीत्प्रागेत–त्पुनर्वैद्येन भाषितम् । काकतालीयवच्चैत–त्संजातं दैवयोगतः ॥ १ ॥ नृपतेर्नगरस्यास्य, भव्रार्यायाश्च संगतिः । लभ्या हि पूर्णभाग्येन, किमतोन्यूनमस्ति मे ॥ २ ॥ अतोऽयंबुद्धिमान्नटाधिपोमामस्मै नृपाय ददाति चेदहं भाग्यशाली भवामि, इत्थंविचेष्टमानस्य ताम्रचूडस्याऽभिप्रायंविदित्वा शिवमाला जगाद–स्वामिन् ? कुतस्त्वं विमनायितोऽभू–र्मत्तः सदा त्वत्सविधे स्थितायाः । न क्वाऽपि ते वाक्यमपि प्रलुप्तं, त्वत्सेवनं सत्यधिया करोमि ॥ १ ॥ अज्ञानतो वाऽपि तवापराधं, नाचीकरं प्राणसमत्वभाजः । भवत्कृते राजमहानरेन्द्रैः, सार्द्धंविरोधोऽपि मया व्यधत्त ॥ २ ॥ देशान्तरे मस्तकपञ्जराहं, भ्रमामि

नित्यं तव रागबद्धा । क्षणात्मकं स्नेहमपि प्रवीणा-स्त्यजन्ति नो कण्ठगताऽसवो हि ॥ ३ ॥ चिरंभवं स्नेहमिमं विहातुं, समुद्यतस्त्वं कथमावयोर्वै ?। त्वदुक्तितो वीरमतीसकाशा-दुगृहीतवांस्त्वां जनको मदीयः ॥४॥ अद्याऽपि सुस्नेहकलां प्रदर्श्य, निःस्नेहभावं किमु वाञ्छसि त्वम् । मत्सेवनस्योपकृतिं विधातुं, समुद्यतस्त्वं किमु लज्जसे ? नो ॥ ५ ॥ किं वा परप्रेरणया नु वञ्चितो-जातो विरक्तो मयि रक्तचेतसि ॥ विवेकिनस्ते प्रमदाजनेऽयं, रोषप्रबन्धो घटते न विद्वन् ? ॥ ६ ॥ ततःकुक्कुटो-विज्ञातसारः स्वभाषया शिवमालांकथयति, नटाङ्गजे ? स्वयंदत्ताऽप्येवंकथंवदसि ? सर्वमहंजानामि, विबुधानांप्रीतिःक्षणमात्रमपि न विसर्प्यते, तव प्रत्युपकारंकर्त्तुमिदानीं सर्वथाऽशक्तोऽस्मि, त्वदुपकृतानुपकारान्कियतः स्मरामि, सर्वानहंजानामि, यतोऽहमपि जठरपूर्त्तिमात्रं भोजनंकरोमि, नावयोः क्षणिकःस्नेहोविद्यते, नववार्षिकोऽस्त्यतस्तत्त्यागे मे मतिर्न प्रसरति, तथाऽप्यन्यचिन्तां-वेत्तुमन्योन शक्नोति, त्वादृग्विदुषीनां समागमंकस्त्यजति ? हे नटपुत्रि ! अत्र त्वेकंभूयिष्ठंकारणंविद्यते, अतस्त्वंदुर्मना मा भव, तच्च कारणंदत्तावधाना शृणु-मकरध्वजभूपस्य, परिणीता सुता मया । तस्मादेव विमात्रा मे, विहगोनिर्मितोऽस्म्यहम् ॥ १ ॥ मदीयदुःखवृत्तान्त-श्रवणेनाऽपि दीर्यते। हृदयं किमु वक्तव्यं, तस्यानुभविनः पुनः॥ २ ॥ दैवमूलं सुखं दुःखं, सह्यते सर्वमानवैः । कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि ॥ ३ ॥ जगत्प्रभुस्तव कल्याणं विदधातु, यतस्त्वं वीरमतीपार्श्वान्मां-विमोच्येमांमदभिष्टांविमलापुरीं समानीतवती । अतोमम मानसमत्र स्थातुमभीप्सति, तथाप्यस्मिन्विषये त्वदाज्ञैव प्रमाणं, यदि मां न दास्यसि चेदत्र मे किमपि बलंनास्ति। यतः स्वकीयामजां कर्णगृहीत्वा यत्र नयति तत्रैव सा व्रजति। इत्थंताम्रचूडवचनानि समाकर्ण्य शिवमाला दीनमुखी जज्ञे, साश्रुनयना भूरिदुःखाऽपि सा हृदयंदृढीकृत्य प्राह—आभापते ? प्रियतमाद्य तवैप

भावो–ज्ञातो मयाऽथवचनं भवतः करिष्ये । त्वत्संगमेन मम नास्ति हितं कथंचित्–प्रेम्णाऽत्र तिष्ठतु भवान्निजसौख्यहेतोः ॥ १ ॥ चिरादभूत्प्राक् परिणीतपत्न्याः, समागमस्तेऽत्र समागतस्य । अद्यैव जाता सफला मदीया, सेवा च मे जीवितमस्ति धन्यम् ॥ २ ॥ एवं वार्त्ताकुर्वतोस्तयोः प्रेमलाप्रणोदितोमकरध्वजस्तत्रागतः । शिवकुमारेण सत्कृतःस प्राह—पक्षिणं तं समादातु–मागतोऽस्मि नटाधिप ? । तस्मिन्दत्तेऽखिलं दत्तं, मन्येहं कृपया तत्र ॥ १ ॥ मत्पुत्र्या जीवितं तेन, पक्षिणा लुण्टितं किल । यदधीनं मनो यस्य, तमृते स न जीवति ॥ २ ॥ नम्रकन्धरोनटोभणति–राजन्नाभापतिं मन्ये, न त्वेनं पक्षधारकम् । तस्मादेतत्प्रदाने मे, हृदयं कम्पतेतराम् ॥ १ ॥ एतमप्रदातुमपि न प्रभवामः । व्याघ्रतटीन्यायोऽत्रापतितः । इत्याभाष्य तस्मिन्विरते शिवमाला प्राह—पार्थिवाऽयं विहङ्गस्ते, प्रदातुं नार्हति ध्रुवम् । तथाऽपि मत्सखीं मत्वा, प्रेमलां प्रददाम्यहम् । १ ॥ नरेन्द्रैतं गृहाण त्वं, सुखेन चरणायुधम् । स्वस्त्यस्तु तव चैतस्य, रक्षा कार्याऽस्य सर्वदा ॥ २ ॥ विहङ्गमं विदित्वैतं, प्रवृत्तिं मा कुरुष्व भोः । इममाभापतिं विद्धि, त्वत्सुतावाञ्छितप्रदम् ॥३॥ एवमभिधाय शिवमालया तत्पञ्जरं नृपाय पुष्पाञ्जलिवत्समर्पितम् । नृपतिस्तदुपकारं मन्यमानोरोमाञ्चितगात्रः पञ्जरंसमादाय राजमन्दिरमाजगाम, स्वहस्तेनैव तेन सगौरवंतत्पञ्जरंप्रेमलायै प्रदत्तम् । साऽपि लब्धसर्वस्वेवाप्रमेयप्रमोदं कलयामास, अथ विकसन्नयना प्रेमलालक्ष्मीः पञ्जरात्ताम्रचूडंबहिर्निष्कास्य निजकरतले स्थापयित्वा निजहृदयोद्गारानाविश्चक्रे, विहगराज ? पोडशवर्षान्ते श्वशुरपक्षीयस्त्वमद्य मे मिलितोऽसि। त्वन्नगराधिपतिर्मे भर्त्ता सन्नपि भिक्षुकहस्तगतचिन्तामणिरिव विमूढया मया हारितः । तद्विरहाग्निव्यथिताया मे शरीरमस्थिशेषंसंजातं तथाऽपि तव भूपतेर्दर्शनं न जातम् । एतदधिकजल्पनेन. विहगोत्तम ! तव भूपतेर्मया किमपहृतम् ? यतोऽधुना मे

शुद्धिमपि स न करोति, मां परिणीय कुत्थिने दत्त्वेतो निर्गतोऽनेन किं तस्य गौरवंगण्यते ? । मदीयंजन्म तेन विफलीकृतम् । इदं शिक्षणं कुतस्तेन लब्धम्। यदि गृहस्थधर्ममुद्वोढुमशक्तस्तर्हि परिणेतुमत्र स कथमायातः? कृत्वा च पाणिग्रहं तत्कालमेव मय्यभावस्तस्यकुतो जातः ? विहगोत्तम ? त्वन्नृपतिसमानःकोप्यन्योनिर्घृणचेता मया न दृष्टः । यःपरिणीय पत्रद्वाराऽपि मां न स्मरति, स्वेन प्रारब्धंकार्यमुत्तमजना विधुरेऽपि काले न त्यजन्ति । यतः—प्रारभ्यते न खलु विघ्नभयेन नीचैः, प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः, प्रारब्धमुत्तमजना न परित्यजन्ति ॥ १ ॥

यद् मद्भर्त्रा विहितंतच्छ्वशुरपि न समाचरति, दूरस्थःसोऽत्र कथमायाति, तत्र गन्तुमहमप्यबला कथंसमर्था भवामि ! स्वयमेव त्वंविचारयेदृशीमवस्थामनुभवन्त्या मे वासराः कथं प्रयान्ति ! पश्चिन्नस्मिञ्जगति परहितनिरतोनिष्कारणवन्धुः स्तादृशो न कोऽपि दृश्यते, यस्तत्र गत्वा मद्भर्त्तारंविबोध्य मदन्तिकंसमानयेत्। षोडशहायन्यांव्यतीतायामपि यन्मनसि भार्यास्नेहोन स्फुरति, तच्चित्तंवज्रादपि कठोरंमन्ये, यदर्थमञ्जनकोऽपि मां मुधा कदर्थितवान्, अधुना कंशरणंव्रजामि, कस्याग्रे दुःखंनिवेदयामि, जगत्यस्मिन् स्नेहंविधातारःसुलभाः पुनस्तत्पालका दुर्लभाः । यतः—आरंभगुर्वी क्षयिणी क्रमेण, लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्द्धपरार्द्धभिन्ना, च्छायेव मैत्री खलसज्जनानाम् ॥१॥ तत्राऽपि या निःस्नेहेन सार्द्धंप्रीतिर्विधीयते सा तु केवलंदुःखदायिन्येव जायते । यतः—भर्त्तुर्वियोगः स्वजनापवादः, ऋणस्य शेषं कृपणस्य सेवा । दारिद्र्यकाले प्रियदर्शनञ्च, विनाग्निनैतानि दहन्ति नित्यम् ॥ १ ॥

ताम्रचूड ! मद्भर्त्तृगृहवासिनं भवन्तंवीक्ष्य विह्वलीभूतहृदया दुःखातिभारंनिवेद्य क्षीणदुःखा जातास्मि, मद्भर्त्तृसमानं-

त्वां जानामि, परन्तद्वत्त्वया क्रूरमनसा न भाव्यम् । इतिप्रेमलायाःस्नेहरसप्लुतानि मर्मच्छिदानि च वचनानि श्रुत्वा भृशमुत्कण्ठितोऽपि स्वयंपक्षित्वात्तदुत्तरंदातुंनाशकत् । यद्यपि दम्पत्योर्योगोदैवेन घटितस्तथाऽपि कर्मान्तरायसत्त्व तत्फलभागिनौ तौ नाभूताम् । प्रेमला स्वयंनिजावासस्थिता विहङ्गमेन साकमीदृग्वाक्यान्युदीरयन्ती निजोद्वारान्निष्कासयति तावच्छिवमाला तत्र समागत्य कुक्कुटश्च निजोत्सङ्गे लात्वा क्रीडितुं लग्ना। ततः सा प्रेमार्द्रहृदया सुगन्धितद्रव्यैस्तं सिञ्चतिस्म, तदग्रे मिष्टान्नादिकं ढौकयित्वा मधुरस्वरेण सा गीतान्यगायत, ततोरञ्जितताम्रचूडा सा राजसुतामवदत्—

ताम्रचूडमिमं पूज्ये !, यावन्मासचतुष्टयम् । सेवस्व प्रेमभावेन, स्वान्तिकस्थं वरानने ? ॥ १ ॥ अहमप्यागमिष्यामि, स्नेहपाशंनियन्त्रिता । प्रयत्नेन त्वया रक्षा, विधेयाऽस्य पतत्रिणः ॥ २ ॥ चतुर्मासीं स्थितोऽयं ते, वाञ्छितं पूरयेद्यदि । तदाऽस्माकं महानन्दः, सखि ? सत्यं ब्रवीम्यहम् ॥ ३ ॥ इत्थंमार्मिकवचनानि भणित्वा शिवमाला स्वस्थानमगमत् । प्रेमला तु तद्रहस्यमजानन्ती कुक्कुटेन ससंरममाणा समयंयापयति, सततंतमेव पश्यन्ती सा तत्सेवांविदधाति, तं च निरीक्षमाणा गम्भीराभिःश्वासान्मुञ्चति, सातत्येन नयनयोरश्रुधारांवहमाना सा शोकंप्रकटयति। इत्थंवर्त्तमानायांतस्यां वर्षर्तुप्रादुर्भावादम्बरंमेघमण्डलैर्मेदुरंजातं, परितोऽचिरद्युतिप्रभाभिःप्रादुरभूयत, ब्रह्माण्डभेदिनोगर्जारवाःसमन्तादश्रूयन्त, जीमूताश्च क्षणात्पिंतुलग्नास्तेन सकलंजगच्छान्तिमयमजनिष्ट, तथाऽपि प्रेमलाया हृद्विदाहोनोपशशाम । यतः—वर्षाकाले भवति विपुला शान्तिरत्राऽखिलानां—कामार्त्तानां पुनरनुदिनं जायते हृद्विदाहः। वैचित्र्यं तत्प्रशमजनकाद्वैपरीत्यं हि जातं, रम्या भावाः सकलसुखदा नैव पृष्टाः श्रुता वा ।१॥ विरहवेदनया भृशंपीड्यमाना सा निजदुःखंकुक्कुटंनिवेदयति, शिवमालावचनश्च स्मरन्ती सा

ताम्रचूडं प्राह—मदन्तिकस्थितोऽपि त्वं, जानासि मद्विभिन्नताम्। भवन्तं जीवितं मन्ये, नास्ति त्वत्तोऽधिकं मम ॥ १ ॥

इतिश्री चन्द्रराजचरित्रे चतुर्थोल्लासे प्रथमः सर्गः ॥ १ ॥

अथ चतुर्मास्यांव्यतीतायां देवभक्तिपरायणा प्रेमला सिद्धगिरियात्रायै मनश्चक्रे, यस्य तलहट्टिकायामसौ विमलापुरी विराजते, सखीजनमपि सार्द्धसमानेतुं सा सज्जीचकार। तदानींतत्रैकोनिमित्तवेदी समागतः, तमनेकधा सत्कृत्य सा पृच्छति—निमित्तज्ञ! कदा ब्रूहि, मद्भर्त्ता क्व मिलिष्यति। त्वामहं तोषयिष्यामि, महार्घैरत्नभूषणैः ॥ १ ॥ नैमित्तिको वदति–सुभगे!ऽभ्यस्तविद्योऽहं, गत्वा कर्णाटकं चिरात्। आगतोऽस्म्यधुना गेहं, त्रिकालज्ञानसंयुतः ॥१॥ अनाहूतोऽप्यहं सुभ्रु? विभेत्तुं तव संशयम्। समागतोऽस्मि ते भर्त्ता, ह्यद्य श्वो वा मिलिष्यति ॥ २ ॥ तव शीलप्रभावेण, सर्वं भव्यं भविष्यति। सर्वधर्मेषु शीलं हि, प्रधानं कीर्त्तितं बुधैः ॥ ३॥ मदीयं वचनं सत्यं, प्रतिजानीहि बालिके?। नैमित्तिका न जल्पन्ति, मुधा लोभवशा अपि ॥ ४ ॥ एवं नैमित्तिकवचनामृतंनिपीय प्रमुदिता सा यथोचितं दानं प्रदाय तं विससर्ज। अथ सखीभिःपरिवृता गृहीतस्वजनकनिदेशा पञ्जरस्थंतंकुक्कुटंस्वयमेव समादाय पुण्डरीकगिरियात्रांचिकीर्षुःप्रयाणमकरोत्, पादचारिणी सा गिरिमारोहन्ती पञ्जरान्निष्कास्य ताम्रचूडंकरपञ्जरस्थंविधाय सद्भावनां भावयामास, कुक्कुटोऽपि गिरिवरंवीच्य भृशंमोदमानोनिजजन्मनः साफल्यंमेने. यतः—अन्यक्षेत्रे कृतं पापं, तीर्थक्षेत्रे विनश्यति। तीर्थक्षेत्रे कृतं पापं, वज्रलेपो भविष्यति ॥ १ ॥ आसादितप्रधानशिखरा सपरिवारा प्रेमला शिवपदशिखरमिव राजमानमादिनाथचैत्यंप्रविश्य दीव्यकान्त्या विभासमानंयुगादिदेवमभिवन्द्याष्टधा पूजामकरोत्—ततः साञ्जलिबन्धं सा जिनेन्द्रमस्तौषीत्—आदित्यकान्ते! जगदादिनाथ!, संसारकान्तारनिवर्त्तक-

स्त्वम् । दीना जनास्त्वच्छरणाश्रिता द्रा-क्तरन्ति दुःखोदधिमप्रमेयम् ॥ १ ॥ कल्याणभूमीरुहवारिधारां, विपन्महासागरकुम्भयोनिम् । मोहाद्रिसंभेदनवज्रसारं, युगादिनाथं प्रणमामि भूयः ॥२॥ भवार्णवोत्तारक देवदेव ! नमाम्यहं त्वच्चरणारविन्दम् । यदाश्रितानां न दवीयसी श्रीः, स्वर्गाऽपवर्गस्य महाप्रभावम् ॥३॥ तीर्थाधिनाथ ! त्वयि दृष्टिगोचरे, न बाधते संसृतिघोरयातना । भूया अतस्त्वं मम हृद्गतोऽनिशं, भक्तिं त्वदीयां गणयामि शोभनाम् ॥ ४ ॥ विहितादिनाथदर्शनस्ताम्रचूडोऽपि निजंकृतार्थं मन्यमानोजगत्प्रभुंध्यायन्नतिष्ठत् । ततः सा प्रेमलालक्ष्मीः युगादिदेवमभिवन्द्येतरचैत्येषुदर्शनादिकंचक्रे, तदनु चैत्यपरिपाट्यां परिभ्रमन्ती सोत्साहा सा नवपल्लवैर्विराजमानांराजादनीमभ्येत्य भवभीतिनिवारयामास । तत्र मरकतमणिसमानि भूतलपतितानि तत्पत्राणि चञ्च्वा गृहीत्वा ताम्रचूडोनिजोद्धृतिंसमीहमानश्चञ्चूपुटंविभूषयामास । एवंक्रमतःसर्वविधिंसमाप्य सा परिजनपरिवारिता सूर्यकुण्डमभिययौ । विशुद्धं जलं पावनं रत्नकान्ति, प्रफुल्लत्सरोजालिकं पापहारि, । जयराजयदीयं मनोभीष्टदायि, सदानन्ददानक्षमं प्राणिजानाम् ॥ १ ॥ प्रातः प्रातः पयसि विमले पावने सौर्यकुण्डे, स्नायं स्नायं सकलविषयत्यागिनो योगिनो ये । वारं वारं जिनपतिगणं लोचनाभ्यां पिबन्तः, क्षेमं क्षेमं क्षणवदखिलं कालमत्र क्षिपन्ति ॥ २ ॥ करकमले कुम्भकुटंधारयन्ती प्रेमला तद्वारिबिन्दुंस्पृष्ट्वा पावनीकृतमानसा पादपपुष्पगन्धिनं मारुतंनिषेवितुंतदुपकण्ठे निषसाद, ताम्रचूडोप्यदृष्टपूर्वमपूर्वतीर्थकुण्डंविलोक्य भृशंमुदितोनिजदशांव्यचिन्तयत्—अहो ! तिर्यगवस्थायां, षोडशाब्दी गता मम । सुखं नावाप्नुवं किञ्चिदैहिकं पारलौकिकम् ॥ १ ॥ क्व मे भार्या क्व सम्पत्तिः, क्व मे सज्जनसङ्गमः । क्व तिर्यक्त्वदशेयं मे, क्व मे राज्यपरिग्रहः ॥ २ ॥ सकलं साधनं जातं, व्यर्थं मे कर्मयोगतः । वैरिणी मद्विमाता वै, तिर्यक्त्वं प्रापितो यया ॥ ३ ॥ संसारः केवलं स्वार्थ--संभृतो

दृश्यते ध्रुवम् । अधमाः साधयन्त्यर्थं, परप्राणजिहीर्षवः ॥ ४ ॥ पुनर्नटान्तिकस्थोऽहं, नानादेशान्व्यगाहिपि । तथाऽपि दुष्कृतैर्भूरि-वेदना वेद्यते हहा ! ! ! ॥५॥ दुष्कर्मणां विपाकेन, जातोऽसि कुक्कुटः प्रभो ! । भूयसि समयेऽतीते, मानवत्वन्तु दुर्लभम् ॥६॥ सान्निध्यं भजतः पत्न्याः, च्चणो मे वत्सरायते । दर्शनाद्दह्यते चात्मा, दुःसहा विरहव्यथा ॥७॥ यौवनं व्ययितं रम्यं, दुर्दैवेन मया मुधा । परपीडाविधायिन्या, स्रुतं मद्दुःखवार्त्तया ॥८॥ जीवितव्यं वृथा मन्ये, केवलं दुःखभाजनम् । परायत्त-प्रवृत्तेर्हि, जीवनान्मरणं वरम् । ९॥ तस्मादधुनाऽस्मिन्कुण्डे झम्पां दत्वाऽव्ययपदं साधयामीति जीवितात्खिन्नमतिः पुनश्चेतसि चिन्तयति—अस्मिन्नसारे संसारे, कस्य कोऽपि न विद्यते । निजकर्मानुसारेण, सर्वः स्वार्थं समीहते ॥१॥ उक्तञ्च—कस्त्वं कोऽहं कुत आयातः, का मे जननी को मे तातः । इति परिभावय सर्वमसारं, विश्वं त्यक्त्वा भव निर्वृत्तः ॥ २ ॥ स्वप्नोपमेऽस्मिन्दृष्टवस्तुनि कःप्रतिबन्धः ! तदासक्तिमतामपि किमप्यात्मीयंन जातं तर्हि तस्मिन्ममत्वबुद्धिःकिंफलमपेक्ष्यविधातव्या, समभित्रारिः शान्तिसुखंविन्दते—यतः—शमसुखशीलितमनसा-मशनमपि द्वेषमेति किमु कामाः । स्थलमपि दहति झषानां, किमङ्ग ! पुनरुज्ज्वलो वह्निः ॥ १ ॥ अहौ वा हारे वा, कुसुमशयने वा दृषदि वा. मणौ वा लोष्ठे वा, बलवति रिपौ वा सुहृदि वा । तृणे वा स्त्रैणे वा, मम समदृशो यान्तु दिवसाः, क्वचित्पुण्याऽरण्ये, शिव शिव शिवेति प्रलपतः ॥२॥ तथा च—चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः, किं वा तत्त्वनिविष्टनिर्मलमतिर्योगीश्वरः कोऽपि किम् । इत्युत्पन्नविकल्पजल्पमुखरैः सम्भाव्यमाना जनै-र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥ ३ ॥ अहो ! पराश्रयिणं धिक्—वरं तुङ्गाच्छृङ्गा-द्गुरुशिखरिणः क्वाऽपि पुलिने, पतित्वाऽयं कायः, कठिनदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः, फणिपतिमुखे

तीव्रदशने, वरं वह्नौ पात-स्तदपि न परायत्तवसनम् ॥१॥ सर्वदाऽयं भवाध्वां विस्मरणीयः—किमासेव्यं पुंसां, सविधमनवद्यं मुनिपतेः, किमेकान्ते ध्येयं, चरणयुगलं श्रीजिनपतेः। किमाराध्यं पुण्यं, किमभिलपणीयश्च करुणा, यदासक्त्या चेतो-निरवधिविमुक्तौ प्रभवति ॥ १ ॥ एवंवैराग्यभावंभावयन्कुक्कुटः प्रेमलाकरादुड्डीय सहसा तस्मिन्कुण्डे झम्पामदात्, प्रेमला तत्साहसंविलोक्य संभ्रान्तचेताःप्राह—

विहङ्गमैतत्किमकारि साहस-मात्मोपघातेन सुखं कुतस्तराम्। त्वामत्र संत्यज्य जलाशयेऽद्वता, दास्याम्यहं नाट्यविदां किमुत्तरम् ॥ १ ॥ माता पिता मे तव दुःखदुःखितौ, मुखं मदीयं न विलोकयिष्यतः। स्वल्पाऽनुपङ्केण कृतं किमु त्वया, प्रतार्य मां दीनमुखीमनाश्रयाम् ॥ २ ॥ मत्परीक्षाकृते मन्ये, साहसं तावकं द्विज !। अतस्त्वं बहिरागत्य, सद्यः संभावयस्व माम् ॥ ३ ॥ अन्यथा त्वद्गतिं यास्ये, विद्धि त्वय्येकमानसाम्। देहेन भिन्नतां मन्ये, त्वत्तः प्रेमवशंवदा ॥ ४ ॥ कृतसङ्कल्प-कल्पा सा, तदनुग्रहणेच्छया। अलक्ष्यपतना कुण्डे, निपपात सखीगणैः ॥५॥ कुण्डे निपतितां वालां, दृष्ट्वा हाहारवोऽभवत्। प्रेमला तु वमादातु-मुद्यताऽभवदञ्जसा ॥ ६ ॥ वीरमत्या निबद्धः स, दवरो जीर्णतां गतः। तत्करस्पर्शमात्रेण, द्विधाऽभूदैव-योगतः ॥ ७ ॥ तदानीं चन्द्रराजं तं, दीव्यरूपधरं सभे। विलोक्य विस्मयं प्रापुः, कुर्वन्तस्तीर्थभावनाम् ॥ ८ ॥ समेत्य तत्क्षणात्तत्र, शासनाधिष्ठदेवता। कुण्डादुद्धृत्य तौ प्रीत्या, मुञ्चतिस्म बहिस्तटे ॥ ९ ॥ प्रेमलाऽथ गतस्वास्थ्या, समवेक्ष्य निजं पतिम्। प्रमोदवारिधौ मग्ना, सिद्धसर्वमनोरथा ॥ १० ॥ सर्वत्र प्रससारेदं, वृत्तान्तं कौतुकावहम्। सम्यक्त्वधारिणो देवाः, पुष्पवृष्टिं व्यधुर्मुदा ॥ ११ ॥ महिमा तीर्थिको लोके, व्याप सज्जनमानसे। तत्त्वबोध इवानर्घः, क्वमस्तिष्ठति नो रविः

॥ १२ ॥ सूर्यकुण्डपयः स्पृष्टं, सर्वथा दुरितापहम् । प्रसिद्धिरिति सर्वत्र, जनकौतुककारिणी ॥ १३ ॥ दर्शयन्ती त्रपां हृष्टा, प्रेमला पतिमब्रवीत् । स्नानं विधाय कुण्डेऽस्मिन्, प्रभुभक्तिं समाचर ॥ १४ ॥ सूर्यकुण्डप्रभावोऽयं, सर्वत्र प्रथयिष्यति । यद्विगाहनमात्रेण, मानुष्यं लब्धवानसि ॥ १५ ॥

स्वामिन्नस्य गिरिराजस्य प्रभावेणावयोर्मनोरथाःपूर्णतामीयुः । अहो ! यदाराधनमक्षयफलदम्—अनेके मुनयोऽत्र सिद्धाः सेत्स्यन्ति चापरे । मन्यन्ते शाश्वतं तीर्थ–मेनं मोक्षप्रदं बुधाः ॥ १ ॥ सम्यक्त्ववासितमेनंभूरुहञ्च भक्तिरसेन निषिञ्च त्वं, येननवपल्लवराजितोऽयं सद्योविरतिफलराजीं जनयति, विदिततीर्थप्रभावश्चन्द्रराजस्तद्वचनंस्वीचकार, अथ विहितमज्जनौ तौ दम्पती सम्पादितानुत्तमद्रव्यैःश्रीऋषभजिनेन्द्रंबद्धमुखकोशौ पूजयामासतुः । ततोजिनवरमूर्त्तौ अर्पितदृष्टिःप्राञ्जलिःसन्स्वय-मस्तौषीत्—स्वभक्तवत्सलोऽनघः सदापवर्गभोगदो–दरिद्रदुःखहारकस्त्रिलोकशङ्करोत्तमः । स्वकान्तितर्जितोष्णगुः सुरत्नमालया वृत–स्तनोतु सिद्धभूधरः स्थितादिनाथ इष्टताम् ॥ १ ॥ दृष्टेऽप्यस्मिन्प्रलयं, प्रयान्ति पापानि तत्क्षणान्नृणाम् । यथा मृगेशे दृष्टे, नश्यन्ति मृगाः सहस्रशोऽरण्ये ॥ २ ॥ सिद्धा मुनयोऽनेके, सेत्स्यन्त्यपि भूरिशस्तथा भव्याः । सिद्ध्यन्त्यस्मिन् शतशः, सिद्धक्षेत्रं ततः प्रसिद्धमिदम् ॥ ३ ॥ चैत्यान्यनेकसंख्या–न्यत्र विराजन्ति मुख्यतीर्थकृताम् । दिव्यमणिमयान्यर्ह–द्बिम्बान्यपि लक्षशः प्रकाशन्ते ॥ ४ ॥ विमलाचलगिरिराजे, नमिविनमी खेचरौ तथा द्रविडः । नृपतिरथो वारिखिल–स्थावच्चासूरिपुङ्ग-वाद्यन्ये ॥ ५ ॥ देवक्याः षट् पुत्रा–नारदपाण्डवगणाश्च शिवलक्ष्मीम् । प्रापुरतः शाश्वतिकः, सिद्धगिरिरयं भवाम्बुधौ पोतः ॥ ६ ॥ युग्मम् ॥ स्फटिकोज्ज्वलजलराशि–स्तीर्थमणिरिवात्र सूर्यकुण्डोऽयम् । स्पृष्टं यदीयपाथो–जनयति हृदि चिन्तितं शर्म

॥ ७ ॥ जिनवरमभिलक्ष्य-विमलशैलराट्सानुशेखरं, भविमनोरथस्वर्गिपादपम् । प्रणतवज्रिणां मौलिरत्नभा-श्रितपदं स्तुवे नाभिनन्दनम् ॥ १ ॥ जयतु पुण्डरीकाऽचलाधिप-मुकुटरत्न ? भूपावनक्षम ? । भुवनबान्धव ? क्षेमदायक ? विगतरागभीः श्रीवृषाङ्कित ? ॥ २ ॥ तव गुणानहं मूढमानसो-गदितुमुत्सुको वागगोचरान् । उचितमर्थिनो नैव वर्णितुं, प्रभव उत्तमानन्तशर्मदान् ॥ ३ ॥ मनसि मे स्थितो नाथ ? निर्मले, शिवपदं गतोऽपि प्रभोऽपृथक् । रविरपि क्षमो दूरगो गृहं, मुकुरगांशुभिः कर्त्तुमुज्ज्वलम् ॥ ४ ॥ भवभयार्त्तिहं त्वत्पदाम्बुजं, जिनवराश्रितो मुक्तिलिप्सया । कथमुपेक्षसे रत्नलुण्टका-न्मम हृदि स्थितान्वैरिणोऽधुना ॥ ५ ॥ कथमपि प्रभो ? संस्तुतो मया, त्वमसि सादितोऽनेकजन्मतः । अघजुषा नतो नैव भक्तितः, स्तवनमर्चनं नो पुरा कृतम् ॥ ६ ॥ असिगदाङ्कुशस्यन्दनाङ्कक-प्रमुखलक्षणैर्लक्षितं प्रभो ? । चरणयुग्मकं मोहवैरिणो-भयविकम्पिताः संश्रितास्तव ॥७॥ दुरितसञ्चयं मे विना त्वया, क्षयमनङ्गहृन्नेतुमप्रभुः । इतर ईश ? वा चक्रमन्तरा, कथमलं भवेद्धन्तुमारकम् ॥ ८ ॥ यस्मिन्दृष्टे क्षीयतेऽघराशि-र्यस्मिन्प्राप्ते लभ्यते ज्ञानराशिः । यस्मिन्गीते तीर्यते वारिराशि-र्यस्मिंस्तुष्टे चाक्षयः पुण्यराशिः ॥९॥ त्रैलोक्यपालक विभो ? प्रशमाऽमृताब्धे ?, भव्यात्मतारक सुरानतपादपद्म ? । भक्ताऽभयप्रद सुरद्रुम ? संश्रितानां, त्वच्छासनं जगति भाति भवार्त्तिनाशम् ॥१०॥ त्वन्नामवज्रमतुलं गुरुकर्मशैलं, निर्मूलयत्यनुभवोदधिरप्रमेयः । भावत्ककीर्त्तनशशाङ्कविलोकनेनो-ल्लासं व्रजत्यमितसत्त्वनिधे ? जिनेश ? ॥ ११ ॥ देवास्त्वदन्तिकगता इतरेऽल्पसारा-राजन्ति किङ्करगणा इव राजपार्श्वे । त्वं ज्ञानभास्करकरेण जगत्समन्ता-दुद्योतयस्यखिलमीश ? सुरेन्द्रसेव्य ? ॥ १२ ॥ असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे, सुरतरुवरशाखा लेखनी पत्रमुर्वी । लिखति यदि गृहीत्वा शारदा सार्वकालं, तदपि तव गुणानामीश ? पारं

न याति ॥ १३ ॥ भोत्त्वमाधरगुहासु वसञ्जिनेन्द्र !, पञ्चाननस्य तुलनां वहसि प्रकामम् । गन्धद्विपस्त्वमपराऽमरहस्तियूथे, त्वां वीक्ष्य सर्वदिविजा विमदा भवन्ति ॥ १४ ॥ वैनतेयोऽस्यपूर्वस्त्वं, विशेषज्ञ दयानिधे ! । त्वत्तः कर्मोरगस्त्रस्तो–नंष्ट्वा दूरं पलायते ॥ १५ ॥ भव्या ये त्वां नमस्यन्ति, तेऽन्यदेवान्नमन्ति नो । छायां कल्पतरोस्त्यक्त्वा, कण्टकद्रुं क आश्रयेत् ॥ १६ ॥ त्वदाराधनमेघेन, प्लाविते धरणीतले । भवदावानलः शान्ति–मुपैति हृद्विदाहकः ॥१७॥ समस्तगुणरत्नानां, रोहणाद्रिरसि प्रभो ? । परिषहोपसर्गाणां, सहने क्षमासमो भवान् ॥ १८ ॥ कर्मसिंहविनाशाय, नवीनोऽष्टापदो भवान् । हतकर्मरिपोऽनन्ता, शक्तिस्ते विद्यते प्रभो ! ॥१९॥ वीतराग ! भवद्भक्ति–मिच्छामि भवनाशनीम् । जन्मान्तरेष्वपि क्षेमदायिनीं कर्मबाधितः ॥२०॥ इत्थं विहितेष्टदेवस्तुतिश्चन्द्रराजः सविस्मयं चिन्तयति—क मेऽवस्थाऽधमार्हेयं, क चायं सिद्धभूधरः । पूर्वपुण्यप्रभावेण, यात्रेयं सुलभाऽभवत् ॥ १ ॥ ततोनिर्मलमानसौ तौ दम्पती जिनमन्दिराद्बहिरागत्य तत्रोपविष्टंचारणश्रमणं वन्दित्वा सविनयमुपाविशताम् ।

इति श्रीचन्द्रराजचरित्रे चतुर्थोल्लासे द्वितीयः सर्गः ॥ २ ॥

अथ मुनिना धर्मदेशना प्रारब्धा—यः प्राप्य दुष्प्रापमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः । क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिं पातयति प्रमादात् ॥ १ ॥ स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते, पीयूषेण प्रवरकरिणं वाहयत्येधभारम् । चिन्तारत्नं विकिरति कराद्वायसोड्डायनार्थं, यो दुष्प्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः ॥ २ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ३ ॥ ते धत्तूरतरुं वपन्ति भुवने प्रोन्मूल्य कल्पद्रुमं, चिन्तारत्नमपास्य

काचशकलं स्वीकुर्वते ते जडाः । विक्रीय द्विरदं गिरीन्द्रसदृशं क्रीणन्ति ते रासभं, ये प्राप्तं परिहृत्य धर्ममधमा धावन्ति भोगाशया ॥ ४ ॥ यत्संपत्त्या न युक्ता जगति तनुभृतो यच्च नापद्विमुक्ता—यन्नाधिव्याधिहीनाः सकलगुणगणालङ्कृताङ्गाश्च यन्नो । यन्न स्वर्गं लभन्ते निखिलसुखखनिं मोक्षसौख्यञ्च यन्नो, दुष्टः कल्याणमालादलनपटुरयं तत्र हेतुः प्रमादः ॥ ५ ॥ प्रमादः परमद्वेषी, प्रमादः परमं विषम् । प्रमादो मुक्तिपूर्दस्युः, प्रमादो नरकालयः ॥ ६ ॥ प्रमादस्य महाहेश्च, दृश्यते महदन्तरम् । आद्याद्भवे भवे मृत्युः, परस्माज्जायते न वा ॥ ७ ॥ अनिष्टे न मतिं दद्या—त्तयाऽसौ नरकं व्रजेत् । तस्मात्सर्वप्रयत्नेन, इष्टे धर्मे नियोजयेत् ॥ ८ ॥ मद्यं विषयकषाया—निद्रा विकथा च पञ्चमी भणिता । एते पञ्चप्रमादा—जीवं हि पातयन्ति संसारे ॥ ९ ॥ भोभव्या ? भवन्तश्चतुर्विधं धर्मरत्नंपरीक्ष्य तदलङ्कृता भवन्तु, येनाचिराल्लुब्धचेता मुक्तियुवतिर्युष्मान्स्वयमेव वृणुते, इत्थंमुनिदेशनांनिशम्य प्रकटितप्रमोदौ तौ गिरिराजंप्रदक्षिणीकृत्य निजजन्मनःसाफल्यंमेनाते । इतोबद्धमुष्टिःप्रधावन्त्येका दासी विमलापुरीं गत्वा मकरध्वजभूपं वर्द्धापयन्त्याह—सूर्यकुण्डजले स्नात—श्चन्द्रराजो धराधिप ? । कुकुटत्वं परित्यज्य, जातोऽस्ति मानवोत्तमः ॥ १ ॥ नरेन्द्रस्तद्वचः श्रुत्वा, भूरिमोदमबीभरत् । वार्त्तां सविस्तरां ज्ञात्वा, दानेन तामतोषयत् ॥ २ ॥ सर्वस्मिन्नगरे वार्त्ता, प्रसृतेयं गृहे गृहे । पौरा अपि परानन्दा—जज्ञिरे तद्दिदृक्षवः ॥ ३ ॥ ऊचुश्च मुदिताः सर्वे, फलिता नो मनोरथाः । अद्यैव देवतास्तुष्टाः पूर्वपुण्यप्रभावतः ॥ ४ ॥ सभार्यो भूपतिर्हृष्टो—मन्त्रिसामन्तसंयुतः । सदोगृहमभीयाय, कदम्बकुसुमाननः ॥ ५ ॥ ततः शिवकुमारं तं, शिवमालाञ्च सत्वरम् । समाहूय निवेद्यैत—द्वृत्तान्तं तेन भाषितम् ॥ ६ ॥ नटाधीश ? त्वदीयोऽय—मुपकारोऽस्ति कामदः । वृत्तान्तमेतदाकर्ण्य, जातास्ते मुदिता भृशम् ॥७॥ ततश्चन्द्रनरेशस्य, रक्षणाय

समागतान् । सुभटांस्तान्समाहूयाऽतोपयद्वार्त्तयाऽनया ॥ ८ ॥ सर्वेऽप्येते विश्रुततीर्थप्रभावाः परमंविस्मयंप्रापुः । ततः सपरिवारोमकरध्वजोविमलाचलशिखरमधिरुह्य चन्द्रराजंगाढमाश्लिष्य प्रभूततममानन्दंप्राप, मिथोमिलितानांतेषांमानसानि प्रमोदपूरितान्यभवन् । अथ चन्द्रराजसमेताः सर्वे जिनालयंगत्वा दीव्यप्रभांजिनमूर्त्तिमभिवन्द्य कृतकृत्या अभूवन् । ततः प्रथितप्रमोदा प्रेमला निजमातापित्रोश्चरणयोर्निपत्य जगाद—तात ? युष्मत्प्रतापेन, भर्त्तारं प्राप्य साम्प्रतम् । जाताऽस्मि कृतकृत्याहं, क्षीण दुःखपरम्परा ॥ १ ॥ अयमाभापुरीनाथो—वीरसेननृपाङ्गजः । सूर्यकुण्डप्रभावेण कुकुटोऽप्यभवन्नरः ॥ २ ॥ अधुना त्वं निरीक्षस्व स्वजामातरमुन्नतम् । दैवेनाऽहं कृता तात ?, निष्कलङ्का धरातले ॥ ३ ॥ दीव्यप्रभाः सन्ति सहस्रशोन्ये, नराधिपा निर्जित कामरूपाः । राजन्वतीमाहुरनेन भूमिं, सयौवनं धारयता सुरम्यम् ॥ ४ ॥ तात ? सिद्धाद्रिसेवया नौ मनोरथः सिद्धः । इतिनिजाङ्गजावचनंश्रुत्वा प्रमोदनिर्भरमानसोविकस्वरनयनश्चकोरइवमकरध्वजश्चन्द्रंव्यलोकयत् । राज्ञ्यपि प्रीतिमती जामातरंमुक्ताफलैर्वर्द्धापयामास, चन्द्रराजसामन्ता अपि प्रणतास्तं सप्रमोदंप्राहुः—स्वामिन् ? पक्षिस्वरूपेण, परीक्षा नस्त्वया कृता । सूर्यकुण्डमहिम्ना त्वं, स्वरूपं लब्धवानसि ॥ १ ॥ चन्द्रराजं प्रणम्याथ, नटा विनीतचेतसः । प्रशंसां विविधां चक्रु—र्देशान्तरप्रातिष्ठिताम् ॥ २ ॥ गुरुतरतीर्थप्रभावोऽयंक्षणात्सर्वत्र प्रससार । अथमङ्गलवाद्येषु वाद्यमानेषु सौधर्मेशानेन्द्राविव चन्द्रराजमकरध्वजभूपालौ स्वस्वपरिवारसमन्वितौ गिरिवरादवतरन्तौ प्रभुगुणान्स्मृत्वा स्तुतिंकुर्वन्तावनुक्रमात्तलहट्टिकायां समागतौ, तत्रसद्गुणमहोदधेर्ज्ञानिगुरोर्मुखाम्भोजातसद्बोधरसंश्रोत्रपुटेनविधिनानिपीयश्रीमाँश्चन्द्रराजःपृथ्वीपतिःपुण्डरीकगिरिराजस्यप्रदक्षिणार्थंसपरिवारोनिरगात् । अविलम्बितप्रयाणेनव्रजन्क्रमेणस्तोत्रप्रकरेणगिरिराजंतुष्टाव । अथाग्रेगच्छन्प्रतिप्रदेशंगिरिराजस्यरमणीयतांविलोक-

यन्, विविधजातीयभूरुहघटाघटितेष्वनेकलतामण्डपेषुविचरतांश्वापदानांविहगानाञ्चमनोभिरामान्नादानाशृण्वन्मौक्तिकामलच्छविनिर्झरौघोपकण्ठेऽनेकविधौषधिवृन्दंतदन्तिकेचविविधानिरत्नानिनिरीक्षमाणः, प्रतिस्थलंतीर्थकृतांमन्दिरेषुस्तूपेषुचप्रतिष्ठिताःप्रभुपादुकाःप्रणमन्सभूपतिःशनैःशनैर्विचरन्निजजन्मसफलयामास । तथैवभव्यजनसेवनीयेषुगिरिराजगह्वरेषुनिजात्मानंध्यायतोऽनेकमहात्मनःसमवलोक्यमानवभवंकृतार्थयन्, भवाब्धिपोतस्यगिरिराजस्यपावनान्प्रदेशान्स्पृशँश्चन्द्रनृपतिःसूर्यवनंजगाम। तत्रचङ्क्रमेणव्रजन्नवधीरितनन्दनवनशोभंतद्रामणीयकंपश्यन्स स्फटिकरत्नानुकारिस्वच्छजलसंभृतं, विविधवृक्षराजिविराजितपर्यन्तभागं, नानाजातीयवनचरवृन्दैःसप्रमोदनिषेवितं, हंसकादम्बाद्यनेकपक्षिगणैःसन्नादितं, मत्स्यकूर्ममकरप्रमुखयादोभिर्विलोडितजलौघं, विकसितानेकवर्णसरोजजालंप्रेक्षकजनचेतोहरमेकंसरोवरंददर्श। तस्माद्रमणीयकरण्डिकायांविकस्वराणिकमलानिविचिन्वन्तींभव्यतररूपविभवांवनितामेकांभूपतिरद्राक्षीत् । चिन्तितश्चतेन—केयंधर्मपरायणाकामिनी ? कुतोऽत्रसरोजानिविचिनोतीतिजिज्ञासुश्चन्द्रराजोयावत्तदन्तिकंव्रजतितावत्तत्सम्यक्त्वधारिणीसातत्स्थानंपरित्यज्यवनान्तश्चचाल । सोऽपितामनुव्रजन्गहनेवनेसुभगपल्लवाङ्कितरसालस्याऽधोभागेन्यासीकृतनासाग्रदृष्टिमात्मध्याननिमग्नमानसमेकंमुनिवरमपश्यत् । विधिपूर्वकंतमभिवन्द्य चन्द्रराजोनिजोचितस्थानमुपविष्टः । ततोध्यानक्रियांपारयित्वामुनिवरोधर्मलाभंप्रदायमेघगम्भीरयागिराप्रस्तावोचितांधर्मदेशनांप्रारभत—भोभव्याः ? सर्वेषांप्राणिनांसंरक्षणंयत्नतोविधेयम्—अहिंसापरमोधर्मः, सर्वेषांदेहिनांमतः । जीवनंसर्वजीवानां, वल्लभंजगतीतले ॥१॥ अतोजीवहननंसर्वथाहेयमेव, परप्राणापहारीजीवोनरकातिथिर्भवति, परप्राणव्यपरोपणोद्यतानामात्मकल्याणंदुर्लभंभवति । तस्मान्मानवभवमवाप्यजिनेन्द्रप्रणीतोधर्मःश्रोतव्यस्तथैवचिंतव्यश्च, तत्समानोनास्त्यपरोधर्मः। तथैवाऽसत्यवादोऽ-

पिसद्गतिमपेक्षमाणैः कदाऽपिनोभावनीयः " सत्यान्नास्त्यपरंसुखम् " आत्मसुखवेदिभिरसत्यंवचनंप्राणान्तेऽपिनवाच्यम् । ये-मायाविनःकपटकोटिमुद्धाव्यमिथ्यावादिनःपरानपवदन्ति, तेऽधमाःपरिणामेनिजपापेप्रकटीभूतेपश्चात्तापंप्राप्नुवन्ति, जनेषुधिक्का-रपदंप्राप्यदुःखिनश्चभवन्ति, लोकान्तरगता नरकाद्यनेकयातनांसहमानाःसीदन्ति । यतःपरिणामेसत्यमेवजयति, यथाप्रेमला-लक्ष्म्यामारोपितोमुधाऽपवादोनिर्मूलोजातः । तस्मात्केनाऽपिमृषोक्तिर्नविधेया, मिथ्यादोषश्चकस्मैचिदपिनैवप्रदेयः । इत्थंमुनि-देशनांनिशम्यचन्द्रराजोविहिताञ्जलिःसविनयमवोचत्—मुनीन्द्र ! मनोहारिण्यस्मिन्यौवनेऽपिसंसारोद्विग्नतायांतेकोहेतुः ? वैराग्यस्यचप्रबलतरंकिंकारणंजातम् ? आकृतिदर्शनेनभवान्भाग्यवाननुमीयते । जगद्गुरो ! एतच्छ्रवणेमेभृशंजिज्ञासावर्त्तते, तत्प्र-काशनेभवतोविघ्नाधानस्याचेत्कृपांविधायब्रूहि, मुनिर्जगाद—राजन् ! विरक्तचेतसोमुनयःस्वकीयां गतवार्त्तांनकथयन्ति, तथाऽपि-त्वदीयजिज्ञासांपूरयितुंमद्वैराग्यकारणंब्रवीमि, अवहितधियायूयंशृणुत—विश्ववरेण्यसमृद्धिभाजनभारतभूभामिनीतिलकायमान-मालवनामधेयोऽमेयमनोहरवस्तुविभूषितोदेशःसमस्ति, यस्मिन्सदासहचारिणःषड्ऋतवःफलदायिनोनिवसन्ति, यंनिरीक्ष्यदुर्भि-क्षडमरप्रमुखा उपद्रवादूरतोभ्रमन्ति, ईतयोऽपियत्रनिरीतिभावंव्रजन्ति, यत्रप्रतिप्रदेशमुद्यानविहारवाटिकासमृद्धिराजितकृपिक-र्मवैभवंविलोकमानाजनपदवासिनोजनादिवौकसश्चाऽपिप्रमोदभाजःसततं विलसन्ति, यस्यपरिसराःसर्वतःसजलसरित्कूपह्रदवापी-भिर्विपुलाभिर्विराजमानाजनमनांसिरञ्जयन्ति, स्फटिकाच्छजलकलितललितपयोजराजिविराजितसरसीश्रेण्यःश्रेणीभूतमरालसा-रसकादम्बकचक्रवाकचक्रैःपान्थजनान्प्रीणयन्ति । तत्रातिरमणीयप्रदेशाच्चर्मण्वतीनामसरिद्वरानिर्मलजलाप्रवहति, तस्याःपूर्व-स्मिंस्तटेदिव्यविभूतिभूषितमहोत्तुङ्गगृहाट्टराजिभ्राजितमखिलसुकृतिजसेवनीयंदेवपुराभिधेयंयथार्थंनगरंविभाति, तस्मिंश्चन्यायधर्म-

कनिपुणः सर्वत्रामारीधर्मनियोजकः सज्जनसिंहनामानृपतिः प्रजांपालयति, सर्वकलादक्षः समस्तराजकार्यविधानेदक्षैकलक्ष्यः सकलजनमान्योविशालबुद्धिनामातस्यमुख्यः सचिवोबभूव, यदाराजसदसिप्रतिभूविहीनः कोऽपिदुर्बोध्योविवादः समायातितदानींतन्निर्णयंनिजमतिवैभवेनसैवकरोति । भूपतिरपितथाविधेकार्येतमेवयोजयति, यतोबुद्धिबलंकस्याऽपिवंशपरम्परातोलभ्यतइतिनश्रुतम् । तस्यचप्रभावप्रथितः क्रयविक्रयव्यवहारविदांधौरेयोविश्रुतकीर्त्तिवैभवः शूरसिंहनामकोश्रेष्ठियोनिवसतितत्रैवपत्तने, सचवणिग्वृत्तिः प्रायः स्वनगरनिकटवर्त्तिषुग्रामेषुव्यापारंवितन्वन्सुखेनदिनानिवाहयति—वाणिज्यवृत्तिर्गदितोत्तमाजनैः, कृषिश्चलोकेकिलमध्यमाभवेत् । सेवांहिजानन्त्यधमांनरोत्तमा—भिक्षाचलोकैर्गदिताऽधमाऽधमा ॥ १ ॥

इतस्तस्याश्रमण्वत्याः पश्चिमेभागेदेवपुरनगरस्यसन्मुखवर्त्तिरत्नदुर्गाख्यंनगरंविद्यते, तस्मिन्लक्ष्मणसिंहनामैकः क्षत्रियोनिवसति, तत्पत्नीचन्द्रवदवभासमानवदनाचन्द्रावतीनिजकर्मदक्षाऽस्ति, उभयोर्दम्पत्योः संसारसुखंभुञ्जमानयोर्दिवसाः प्रयान्ति । क्रमेणभाग्यवशतोलक्ष्मीदेवीप्रकुपितेवतद्गृहसंवासंविहातुमैच्छत् । यतः क्षेत्रगृहादिकंसर्वंविक्रीयजठरपूर्त्तिंकुर्वाणयोस्तयोर्जीविकामात्रमपिविचंदुर्लभमासीत् । अतोनिर्वाहहेतोर्गोमहिष्यादिकंसंरक्ष्यतौदम्पतीनिर्वाहंकुरुतः । परमेतयोरपत्यसुखंनास्ति ।

दैवायत्तंजगत्सर्वं, सुखंदुःखश्चकर्मतः । सन्ततिर्दैवयोगेन, दैवलीला बलीयसी ॥ १ ॥

एवंवर्त्तमानयोस्तयोर्भूयान्कालोव्यतीयाय, ततोलक्ष्मणसिंहंसन्ततिहीनंनिरीक्षमाणास्तत्सम्बन्धिनोविशेपतश्चतद्भार्याचन्द्रावतीतत्सुहृदश्चसर्वेसंभूयाऽपरांभार्यांपरिणेतुंतमनिच्छन्तमप्यतिनिर्बन्धेनस्वीकारयामासुः । अथसारङ्गपुरत्रास्तव्यस्यकेसरिसिंहस्यशीलवतीनामभार्यायाः कुक्षितोवभूवसुलक्षणापुत्रीनाम्नाऽपिसुलक्षणा । क्रमेणशुक्लपक्षीयशशधरकलेववर्द्धमाना सा युवजनप्रार्थ-

नीयंयौवनमियाय, तन्मातापितरौवराहांतांविज्ञायचिन्तार्त्तमानसौजातौ, निजोचितसंबन्धंगवेषयतोस्तयोर्लक्ष्मणसिंहोमिलितः, समानशीलगुणसम्पन्नंतंपरीक्ष्यनिजात्मजांतेनसहपरिणाय्यनिवृत्तिभाजौतौबभूवतुः। सुलक्षणांपरिणीयलक्ष्मणसिंहःपूर्ववद्धनवाननभूत्, सुलक्षणायथानामतथागुणवतीबभूत्। इतोदैवयोगाच्चन्द्रावत्याःपुत्रोऽजनि। इत्थंप्रतिदिनंप्रवर्द्धमानलक्ष्मीकोलक्ष्मणसिंहोधनपुत्रप्राप्तिलब्ध्वातत्सर्वंसुलक्षणाप्रभावंमेने। चन्द्रावतीसुलक्षणाचोभेपरस्परंस्नेहवत्यौगृहकर्मवितेनतुः, उभयोर्भार्ययोः सन्ततप्रेमनिर्वाहंकाङ्क्षमाणोलक्ष्मणसिंहस्तेपृथगावासयोःस्थापयामास, द्वयोःप्रमदयोर्यथावैमनस्यंनस्यात्तथाव्यवस्थालक्ष्मणसिंहेनाकारि, भोगार्हपदार्थसार्थसन्तुष्टंभार्यायुगलंनित्यंप्रमोदप्राजितंविलोक्यनिजात्मानंसुखिनंमन्यमानोलक्ष्मणोगृहकार्याणिकरोति। अथाऽन्यदादैवयोगतस्तत्पत्नीचन्द्रावतीपुत्रंप्रासूत, तत्पित्राऽशोकसिंहइतिनामनिर्दिष्टम्, शुक्लपक्षीयचन्द्रइवप्रतिदिनंप्रवर्द्धमानःस मातापित्रोःप्रमोदंवर्द्धयतिस्म। ततोलक्ष्मणसिंहोमनसिव्यचिन्तयत्-अधुनाजातपुत्रोऽहंदेशान्तरंगत्वाप्रभूतंद्रव्यमुपार्ज्यकौटुम्बिकानांमाननीयोभवामीतिनिश्चित्यस्वनगरसन्निधिस्थेदेवपुरनगरेनिजसुहृच्छूरसिंहोनिवसति, तंसमाहूयसकलंगृहकार्यं भार्यादिरक्षणञ्चतस्मैनिवेद्यस्वस्थचित्तोलक्ष्मणसिंहोदेशान्तरमियाय। अथनिजभर्त्तरिविदेशंगतेनिजधर्मपरायणावनिताऽऽचारनिपुणासुलक्षणापतिव्रतपालनैकप्रवणादिनानिव्यनैषीत्। जातसूनुश्चन्द्रावतीतुमदोद्धताकुलटावद्यत्रतत्रपर्यटन्तीमनोऽभीष्टान्भोगान्भुञ्जन्तीस्वेच्छाचारिणीसञ्जाता। शूरसिंहोऽपिनिजमित्रवचनेनप्रतिबद्धःप्रतिवासराष्टकंतत्रसमागत्ययोग्यवस्तूनिसमादायमित्रस्यभार्याभ्यांददाति, कथयतिचयद्यत्कार्यंमत्सत्कंभवेत्तत्सर्वंमह्यंनिवेदनीयमितितयोःसंभावनांविधायनिजगृहंप्रयाति। इत्थंवर्त्तमानयोस्तयोर्भार्ययोर्द्वादशमासाव्यतीयुः।

अथतस्मिन्नगरेलक्ष्मणसिंहस्यगृहान्तिकेराजसद्मनिकश्चिज्जारकर्मरतोराजनियोगीनिवसति, तत्समीपवर्त्मनाप्रतिदिनंचन्द्रावती मुहुर्मुहुरसामयिकंगमनागमनंकरोति, सुन्दराङ्गींतांविलोक्यसदुर्गपालःकामविवशोऽजनि । प्रतिसमयंचन्द्रावतींनिजरागिणींविज्ञायहास्यवचनैस्तामुपहसन्कामकेलिंद्योतयतिस्म, साऽपितंनिजासक्तंचिन्तयित्वाहावभावंद्योतयन्तीकामचेष्टांप्रकटीचकार । अथैकदापतिविरहान्मन्मथपीडिताचन्द्रावतीकटाक्षबाणैर्विद्धंतंराजपुरुषंकामविह्वलं "रात्रौममसद्मनित्वयासमागन्तव्यमिति" सङ्केतयित्वानिजनिकेतनेसमागत्यतमेवध्यायन्तीचिन्तातुराऽस्थात् । सकामुकोऽपिसङ्केतसमयंप्रतीक्षमाणोव्याकुलेन्द्रियःकृच्छ्रेणदिनंव्यनैषीत् । अथैतस्मिन्वासरेशूरसिंहःस्वमित्रस्यवचनानुसारेणतद्गृहकार्यंप्रसाधयितुंसमागतः,कार्यबाहुल्यात्सूर्यास्तकालःसञ्जातः,शूरसिंहःसाधितकार्यःसुहृद्भार्यांसमनुज्ञाप्यनिजनगरंगन्तुंसमुत्थितस्तदाचन्द्रावतीनिजेष्टकार्यंसमीहमानाकिमपिनोवाच, सरलाशया सुलक्षणातुससंभ्रमंतंप्राह–किमिदंगृहंभवदीयंनास्ति ? अद्यखलुसायंकालःसंजातःमार्गोऽपिविषमः, नद्यामद्यप्रभूतंजलंसमायातम्, निशिसरित्प्रवाहोदुरुत्तरणीयः, अतःसुखेनाऽस्यांरजन्यामत्रतिष्ठतुभवान्, प्रभातेगन्तव्यंनिजपत्तने, इतिभृशमाग्रहेणतंप्रातिनिवृत्त्यसुलक्षणारक्षतिस्म, ततोमधुरांरसवतींनिष्पाद्यतंभोजयित्वासानिजाङ्गणेपर्यङ्कंप्रगुणीकृत्यप्रस्वापयामास । सोऽपितस्याःप्रतिपत्त्यारञ्जितःसुखेनतत्रसुप्तः । इतश्चन्द्रावतींकामुकागमनंप्रतीक्षमाणानिद्रामलभमानागृहद्वारिचिन्तार्त्ताऽस्थात् । तदानींराजपुरुषःसङ्केतसमयंविज्ञायस्वच्छाम्बरधारीसुरभिकुसुमतैलादिनापरिकर्मितकेशपाशःसालङ्कृतसर्वाऽवयवःशनैर्निजस्थानान्निर्गत्यलक्ष्मणसिंहस्यगृहान्तिकमाजगाम, झम्पकाद्बहिःस्थित्वायावत्सविलोकयतितावत्तदङ्गणमध्यभागेपर्यङ्कसुप्तंकश्चित्पुमांसंज्ञात्वाचिन्तयितुंलग्नः । कोऽयंपुरुषः ? कस्मादत्रनिर्भयइवप्रसुप्तः ? मादृशोऽयंजारपुरुषोनास्ति, अन्यथेदृशंनिद्रासुखंकथमनुभवेत् ? भविष्यतिकश्चिदस्याः-

सम्बन्धिजनः । अस्तु यःकोऽपिमदीयकार्यविघातकस्तावदयंजातः, इतिव्याकुलचित्तःपुनःपुनःसुप्तपुरुषंवीक्षमाणःशनैर्झम्पकमुद्-घाट्यमन्दसञ्चारोभूपीठेशयानएवसत्रजन्गोमहिषीणांविण्मूत्रभृतंस्थानमासाद्यनिजंगोपयित्वास्थितः । चन्द्रावतीव्यचिन्तयत्—मध्यरात्रंजातम्, अद्याऽपिसदुर्गपालःकथंनागतः ? मांविस्मृत्याऽन्यत्रतुनव्रजेत्क्वाऽपि ! इत्थंव्याकुलितमानसामनोभवशरपीडितारतिमलभमानाचन्द्रावतीशय्यांकदर्थयन्तीजागरुकातिष्ठति तावत्पालनकेसुप्तस्तद्बालोरुदन्नुत्थितः, सत्वरंतदन्तिकंगत्वासास्तनपानेनतंशिशुंस्वस्थीकृत्यपुनःप्रस्वाप्यक्षणमान्दोलयित्वामूत्रोत्सर्जनमिषाद्गृहाद्बहिर्निश्चक्राम, गुप्तसञ्चारासायावत्पशुस्थानमागच्छतितावत्तत्रस्थितेनव्यथमानेनतेनजारेणमन्दस्वरंसीत्कारेणनिजात्मातस्यैज्ञापितः । ततश्चन्द्रावतीप्रमुदितानिजचातुर्येणतंनिजशयनान्तिकंनिनाय, द्वारश्चापिधायदम्पतीवितौशयनासनमाधिष्ठायस्थितौ । अत्रान्तरेतयोःपादसञ्चारेणविनिद्रितःशूरसिंहस्तयोःकामाभिलाषुकयोर्निन्द्याचरणंविलोक्यविस्मयाविष्टःशयनादुत्थायकपाटविवरेनिविष्टदृष्ट्यातच्चेष्टितंविलोकयति, तावत्तयोर्विघ्नकरःसबालोभृशंरोदितुंलग्नः कुसुमायुधकदर्थिताचन्द्रावतीनिजसुतमपिवैरिणंमन्यमानास्तनपानाद्युपचारैर्बहुधातोषितोऽपियावत्सरोदनान्नविररामतावत्तयादुराचारिण्यागलग्राहणेपञ्चत्वंप्रापितः । अहो!!!मन्मथमथितमानसोमहिलाजनःकिमकृत्यंनकरोति ? कामग्रहेणग्रसितप्रभावा—लुठन्तिभूमौबहवोऽपिविज्ञाः । कियद्धिधैर्यंमहिलाजनस्य, मनोजयक्षेणगृहीतवृत्तेः ॥ १ ॥ इत्थंबालघातिनींचन्द्रावतींसाक्षान्निरीक्षमाणःशूरसिंहोविस्मितस्तत्रतच्चेष्टनंविलोकयन्स्थितः । तथैवसजारोऽपितदन्तिकेस्थितस्तच्चरित्रंनिरीक्ष्यभृशंवेपमानोविमूढोजातः, क्षणाल्लब्धस्वास्थ्योव्यचिन्तयत्—अहो ! अनयाकामाभिभूतयारण्डयाकिंविहितम् ! ईदृशंकर्मचाण्डाल्यपिनकरोति, हा! अधुनाक्वगन्तव्यम् ? ममकागतिर्भविष्यति ? अस्यादुष्टायाःसङ्गतिर्मयामूढमतिनाकथंविहिता !

अस्मात्स्थानात्पलायनमप्यशक्यंमेप्रतीयते, यतोगृहाङ्गणेरत्तकइवकश्चिन्नरःसुप्तोविद्यते, इत्थंविकल्पजालंकुर्वन्राजसेवकोभयमापन्नःकामकेलिसुखात्पराङ्मुखीभूयदीनमुखस्तुष्णींस्थितः।ततश्चन्द्रावतीरतिविलासंध्यायन्तींतंराजसेवकंपाणौगृहीत्वा।निजपर्यङ्कोपरिन्यवेशयत्, तथाऽपिप्रक्षीणधैर्यःसतुभयभीतमानसोविमनस्कइवविलक्षीभूयकिमप्युत्तरंनादात्। ततोदीनचेतस्कंतंविज्ञायमदोद्धताचन्द्रावतीव्यचिन्तयत्—हा ! यस्यार्थेमयापुत्रघातोविहितःसतुजाल्मइवकार्यमूढोजातः, अधमनरसंगतिःखलुविडम्बनायैवमेसंजाता, इदानीमयंमदन्तिकाज्जीवन्यास्यतिचेत्पुत्रवधव्यतिकरःप्रकटीभविष्यति, ततोमांपुत्रघातिनींलोकावदिष्यन्ति, मुखञ्चलोकेकथंदर्शयिष्यामि ? अतोऽयमपिसद्योयमसदनंमयानेतव्यः। इतिनिश्चित्यसाराजपुरुषंजगाद—रे ! कामचार ! कथंहीनसत्त्वायसे ? धैर्यंधेहि, सत्त्वरमुत्तिष्ठ, कटितटनिबद्धंतवखड्गमह्यंदेहि, विलोकयामिसकीदृशोऽस्तीतिनिगदन्तीसातदीयंखड्गंकरेणगृहीत्वासद्योनिष्कोशंतंविधायअहो ! यादृशोऽयमसिस्तेजस्वितांबिभर्त्तितादृशंजलंत्वयिनास्तीत्यभिधायतेनैवखड्गेनतच्छिरश्चिच्छेद। इत्थंचन्द्रावत्यादुश्चरित्रंविलोक्यशूरसिंहोमौनमुद्रामाधायसत्त्वरंनिजखट्वायांवस्त्राऽऽच्छादितदेहःसुष्वाप। ततश्चन्द्रावतीखड्गकराभयस्वरूपिणीदेवीवद्वारमुद्घाट्यशूरसिंहस्यखट्वान्तिकमागत्यतंविनिद्रयामास, सोऽपिद्रुतमुन्निद्रइवससंभ्रममुत्थायलोहितार्द्रंतत्करसंस्थितमसिलतांनिरीक्ष्यबभाषे, भ्रातृजाये ! निशायांविद्यमानायामधुनाकिमहंत्वयाजागरितः ? किमेतादृशंकार्यमकस्मादापतितम् ? किञ्चायंनिस्त्रिंशस्तवकरस्थितोरुधिरलिप्तःकथंदृश्यते ? इत्यादितद्वचनानिनिशम्यचन्द्रावत्यवदत्—देवः ! लघुशङ्कानिमित्तमहंद्वारमुद्घाट्यबहिरागतातावत्कश्चिद्दुर्विनीतकामातुरोगृहान्तर्गत्वारहसिस्थितः, पुनरहंनिर्वृत्तकार्याकपाटंपिधायनिजशयनमभजम्, ततःसदुष्टोनिजकर्मचिकीर्षुर्मदीयंशीलंभ्रंशयितुंसमुद्यतः। मयाबहुधानिषिद्धोऽपिसमानवाधमोबलान्मांपीड-

यितुंप्रवृत्तस्तदारक्तेक्षणयामयाऽनेननिस्त्रिंशेनपञ्चत्वंनीतः । इदानींतच्छवंकुत्राऽपिरहसिप्रक्षेपणीयं, यथाकश्चिन्नजानातितथा-विधातव्यमतोगृहमायाहीतिचन्द्रावत्याःकूटभाषितंसमाकर्ण्यसमयवेदीशूरसिंहस्तदाज्ञाऽनुसारेणराजपुरुषकलेवरंखण्डशः कृत्वा-निजवस्त्रेणनिबद्ध्वातत्पोट्टलकंस्वकीयमस्तकेनिधायतत्प्रक्षेपणायवर्त्मनिसावधानोऽचलत् । यतःसमयेकृच्छ्रगतःखरमपिपितृव्यं-कथयेत् । अथनिःकोशंखड्गंदधतीचन्द्रावतीतमनुगच्छन्तीतिव्यचिन्तयत्—यद्ययमद्यताज्ञःस्थास्यतिचेदिदंवधवृत्तान्तंप्रकटी-करिष्यत्यतोऽयमप्यवश्यंमयावध्यः । अस्तु, तावदयंमृतपुरुषःकुत्राऽपिनिक्षेपणीयः, पश्चादस्याऽप्यन्यवस्थांकरिष्यामीतिवि-कल्पयन्तीसाशूरसिंहंपुरस्कृत्यसरित्तटमियाय । अथशूरसिंहोऽपिमनस्येवंविज्ञातवान्, इयंरण्डाऽकृत्यकारिणीविद्यते, माम-पियमसदनंनेष्यति, अथवा किमनयाचिन्तया ? अहमपिसावधानोऽस्मीतिसचिन्तयति, तावच्चन्द्रावतीजगौ—शूरसिंह ? अस्यामापगायामिमांशवग्रन्थिंप्रक्षिपेतिकथयित्वातंनिहन्तुमिच्छन्तीसातत्पृष्ठभागेखड्गकरासावधानाऽस्थात् । तथाविधां तदी-यचेष्टांनिरीक्ष्यशूरसिंहोऽवादीत्—भोभ्रातृपत्नि ? मत्पार्श्वभागेत्वंतिष्ठ, यतोऽहंदूरतोगत्वाजवेनधावित्वामच्छिरसिस्थितंपोट्टल-कंप्रक्षिपामिचेन्मध्येप्रवाहंपतितंप्रवाहेणवाह्यमानंतत्केषामपिदृष्टिगोचरंनस्यादन्यथातटस्थितंतद्विलोक्यलोकाअस्मदीयंवृत्तान्तं-ज्ञास्यन्ति, परम्परयानृपतिर्वेत्तिचेदस्माकंप्राणान्ताशिक्षास्याद् । चन्द्रावत्यपितद्वचनंसत्यंमन्यमानापार्श्वतोऽपसृत्यतस्थौ । शूरसिंहस्ततःसत्वरंदूरंगत्वाप्रधाव्यशवपोट्टलकंसरिदन्तरेनिक्षिप्यप्रोवाच—रेदुष्टे ? किंविलोकयसि ? त्वद्दृष्टितोव्रजाम्यहमि-त्युदीर्यद्रुतंसरित्प्रवाहंतीर्त्वापरतटमियाय । मां प्रतार्यगतोऽयंदुष्टइतिवदन्तींचन्द्रावतींसजगाद—रेपापिनि ? त्वयामुक्तोऽहंनव्र-जामि, निजशक्तितोऽहंनिर्बन्धनोजातोऽस्मीत्यभिधायनिजगृहंप्रययौ । चन्द्रावत्यपित्वरितगत्यानिजनिकेतनंसमागत्यगृहभूमि-

विशोध्यप्राग्वत्स्वच्छतरांशयनव्यवस्थांविधायपश्चिमरात्रेकपटप्रबन्धंविनिर्मायनिजसपत्नींसुलक्षणांजागरयामास, साऽपिप्रबुद्धा शयनंतत्याज, ततस्तांसोपालम्भंसाप्राह—रेस्वसः ! गृहेस्थिताऽपित्वन्तुदेशान्तरास्थितेवमृतांजीवन्तींवामांनस्मरसि, मत्सन्निधौ तुसमागच्छ, सहसामदीयमुदरंशूलपीडयाभृशंतुद्यते, येनक्षणोऽपिमेदुःसहोजायते, अयंबालोऽपिरोदनेनमांव्याकुलयति, इदानीमे-वैतमान्दोलयित्वाबलात्स्वास्थ्यमनैषम् । यावदहंपुरीषोत्सर्गंविधायशीघ्रमागच्छामि, तावत्त्वमत्रातिष्ठ, रज्जुंगृहीत्वाशिशुश्चान्दो-लय, अधुनैवाहमायामीतिनिगद्यसामायाविनीबहिर्भूमिंजगाम । ऋजुस्वभावासासुलक्षणातुगृहाऽभ्यन्तरेऽपिनगता, बाह्यापवर्क-स्थितैवबालमान्दोलयति, क्षणाच्चन्द्रावतीपश्चादागत्यनिजसूनुंपालनकाद्गृहीत्वाभृशंपूत्कारंकुर्वन्तीसाश्रुनयनाप्रालपत् । हा ! हा ! हताऽस्मि, ममसपत्न्या रोषवशान्मत्सूनुर्गलग्राहेणनिहतोऽस्ति, मदीयंसर्वस्वमनयादुष्टयाविनाशितम् । इत्थंचन्द्रावत्याआ-क्रन्दितंश्रुत्वासुलक्षणाभयभ्रान्ताऽजनि, मृतंबालञ्चनिरीक्ष्यविशेषतोव्याकुलचित्तासानिजचेतसिव्यचिन्तयत्-हेजगत्प्रभो ? कोऽय-मकाण्डेदुरुत्पातोऽजनि ! रेदैव ? अधुनामयाकिंविधातव्यम् ? क्वमयागन्तव्यम् ! कस्याग्रेमयासत्यार्थःप्रकाशनीयः ! अहंतथ्यं-कथयिष्यामितथापिजगज्जना मदुक्तंवचनंनमंस्यन्ते । सर्वेऽप्येवंकथयिष्यन्ति, विमातुरेवकुकर्मेदंनिजमाताकदाचिदपिस्वसूनुंकिं-निहन्यात्? ग्रस्तु, दैवोपनीतंसुखदुःखंसर्वेषांसहनीयमेव । अकाण्डसंजातमिदं कदर्थनं,सोढव्यमेकान्तधियामयापुरा । विनिर्मि-तानां किलकर्मणां फलं, यो भुज्यते सर्वगतैर्हिमानवैः ॥ १ ॥

अतस्तुष्णींभावंसमाश्रित्ययद्भवतितत्सर्वमयाविलोकनीयम्। अत्रान्तरेसहस्रशोजनाःप्रातिवेश्मिकाअन्येतत्सम्बन्धिनश्चसह-सातत्रसंमिलिताः । "कौतुकप्रियाणामाह्वानंक्वाऽपि न भवति" यतस्तेपरस्परंस्वस्वमनोऽभिलषितमूचुश्च । केचिदाचख्युः—

सुलक्षणातुसुलक्षणैव, इदमकृत्यंप्राणान्तेऽपिसानकुर्यात्, जगतः स्थितिर्विचित्रावर्त्तते, यतोऽपरेजनाएवंवदन्ति, किमस्यजननी-
मंबालंमारयेत् ? अन्येकथयन्तिमातासुतंहन्यादितितुनसंभवति, परमहिवृश्चिकपल्ल्यादिविषसम्पर्केणायंमृतःसंभाव्यते, इति-
विविधसङ्कल्पदोलामारूढाःसर्वेजना मृतबालस्याऽग्निसंस्कारंचक्रुः। ततस्तेलक्ष्मणसिंहंपत्रिकांसंप्रेष्यपुत्रमरणव्यतिकरंज्ञापया-
मासुः। पत्रिकांवाचयित्वाशोकशङ्कुनिहतः स निजनगरंप्रतिप्रयाणमकरोत्। यदर्थंद्रव्योपार्जनंक्रियते, सतुपञ्चत्वमापन्नः। यतो-
निरपत्यानांव्यवहारप्रवृत्तिः शून्यैवलक्ष्यते, इत्थंचिन्तयन्सनिजनिकेतनमाययौ। पुत्रमरणदुःखेनदुःखितः स कथञ्चित्सम्ब-
न्धिभिः स्वास्थ्यमनीयत। अथचन्द्रावतीयथातथंवदन्तीसुलक्षणामुद्दिश्यगालिप्रदानंकरोति, सातु दीनवदनाऽधोमुखीसर्वंसह-
मानातिष्ठति। इत्यनयोः प्रवृत्तिंविलोक्यलक्ष्मणसिंहेनस्वमनसिव्यचिन्ति–प्राणान्तेऽपीदमकृत्यंसुलक्षणातुनैवसमाचरेत्, त-
न्माताचन्द्रावत्यप्येवंविधंदुष्कर्मविधातुंकथंप्रवर्त्तेत ? तर्हिकिमेतज्जातम् ? प्रथमंतावत्सुलक्षणांपृच्छामि, साकिंब्रवीति ? इति-
निश्चित्यतदन्तिकंगत्वालक्ष्मणसिंहःप्रोवाच–सुलक्षणे ? अयंबालोऽयसन्नस्तद्विषयेत्वंकिंजानासि ? सद्योब्रूहि। सुलक्षणाऽवदत्–
स्वामिन् ! निशाऽवसानेजठरपीडयाबाध्यमानामदीयज्येष्ठभगिनीनिद्रितांमांविबोध्यसुप्तमर्भकमान्दोलयेत्यनुशास्यसाबहिर्भूमिं-
जगाम। अहन्तुबाह्यापवर्के स्थिताशिशुमान्दोलयन्तीस्थिता तावत्सापश्चादागत्यपालनकाद्बालंगृहीत्वाऽनयामत्सुतोमारितइतिप्रब-
लकोलाहलेनभूरिजनान्मेलयामास। परन्तुतस्मिन्दिनेतवमित्रः शूरसिंहोऽस्माकंनिरीक्षणकृतेऽपेक्षितवस्तूनिप्रदातुञ्चभवद्वचनानु-
सारेणात्रसमागतः। कार्याणिकुर्वतस्तस्यनैशिकःसमयोजातः, नद्याश्चप्रभूतंजलंतस्मिन्दिनेपमायातमतोनिशिसरित्तरणंभया-
वहमितिकथयित्वाबह्वाग्रहेणमया स रक्षितः। ततोनिवृत्तभोजनकार्यः सोऽपिगृहाङ्गणेखट्वायां सुप्तोऽभवत्। निशान्तेसमुत्थायाऽ-

लक्षिगमनः स गतः। यद्येतद्वृत्तान्तंतेनविज्ञातश्चेत्सप्रष्टव्यः। अहन्तुकिमप्यधिकंनजानामि। इतिविदितवृत्तान्तोलक्ष्मणसिंहोभृ-
शंचिन्तातुरोऽजनि, पुत्रस्तुमृतः, अपवादश्चनिजसद्मन्येवसंप्राप्तः? अस्यसत्याऽसत्यनिर्णयः प्रसिद्धरीत्याकथंविधीयते? यतः
संभावितानांदारा राजसभांप्रविशन्तितदनुचितमभिधीयते, महाकष्टमिदमापतितमितिशोकार्णवनिमग्नःस व्यचिन्तयत्—देवपुर-
नगरे शूरसिंहस्यपितृव्योविशालबुद्धिर्न्यायविशारदोमन्त्रीनिवसति, तत्सन्निधौभार्याद्वयसमेतोऽहंव्रजामि, सत्यनिर्णयं स करि-
ष्यति, इतिविचार्यसभार्योलक्ष्मणसिंहोदेवपुरमियाय। विशालबुद्धिमन्त्रिणमभ्येत्यनिजव्यतिकरंसर्वंनिवेदयामास। तदनुकथि-
तश्चतेन—मन्त्रीश्वर! यथामेऽपभ्राजनालोकेनस्यात्तथाविधोनिर्णयोभवताविधातव्यः। तेनमन्त्रिणाप्रथमतोविवादस्फोटनायसप्ता-
पवर्काःकारितास्तेषामादिमापवर्केचन्द्रावतीमन्तिमेचसुलक्षणांस्थापयामास। अत्रान्तरेऽनेकेजनाः कौतुकितास्तत्रसंमिलिताः,
कीदृग्विधोन्यायोमिलति? द्वयोर्वनितयोः सत्यवादिनी का? इतिकौतुकजिज्ञासवः के नभवन्ति?। अथैतद्वृत्तान्तंनिशम्यशूर-
सिंहोव्यचिन्तयत्—चिरकालीनंमन्त्रिपदंभुञ्जतोमत्पितृव्यस्याद्यपरीक्षाभविष्यति। यथार्थंन्यायंविदधाति? किंवावितथवादेन-
सर्वजनान्वञ्चयतिस इत्येतत्स्फुटमद्यज्ञास्यते, यतोमयैतत्सर्ववृत्तान्तंपुराप्रत्यक्षीकृतमस्ति। अथविशालबुद्धिः प्राक्प्रथमापवर्के-
स्थितांचन्द्रावतींपृच्छतिस; स्वसः? त्वदीयोबालःकिमपघातितः? तथ्यस्वरूपंमदग्रेप्रकाशय, कूटकारिणीसाऽवदत्—मन्त्री-
श्वर? जन्मतोऽहंमायालेशंनजानामि, सत्यवचनंब्रवीमि, सावधानस्त्वंशृणु, मामकीनोबालः सौभाग्यैकनिलयः सर्वजनवल्लभोऽ-
भवत्, तमसहमानामत्सपत्नीगलमर्दनेनदीर्घनिद्रांप्रापयत्। पुत्रहीनाऽहंमृतवत्सागौरिवजीवामि, किंकरोमि, दुराशयाइमेप्रा-
णामांनपरित्यजन्ति, इतिचन्द्रावत्याभारतीमाकर्ण्यमन्त्रीआह—इदमश्राव्यंप्रभूतदुःखकरमस्मादृशानामपिजातमस्ति, तवसपत्न्या-

दुर्विलसितमिदं स्पष्टंज्ञायते, तथाऽपित्वंवसनाऽऽच्छादितमुखेनवदसिततोऽहंस्पष्टंनशृणोमि। अतोवस्त्राडम्बरंपरित्यज्यनिरावर्ण-
मुखेनसत्यंब्रूहि। चन्द्रावतीजगाद–मन्त्रीश्वर! ह्यत्रकुलप्रसूतानामस्माकमितरजनवन्निर्मर्यादाप्रवृत्तिः सर्वदानिषिद्धाऽस्ति, त-
स्मान्निजकुलाचारंनत्यक्ष्यामि। मन्त्रिणासाभणिता–यशस्विनि? सर्वथात्वंलज्जावतीभव, नास्माकंकाऽपिक्षतिः। परन्त्वनेन-
त्वदाचारेणत्वत्तनुस्त्वयैवमारितइतिनिश्चयोभविष्यति। इत्थंमन्त्रिवचनंसमाकर्ण्यसाऽवदत्–मन्त्रिपुङ्गव? एवञ्चेन्नास्तिमेल-
ज्जायाः प्रयोजनमितिकथयित्वावस्त्रञ्चनिराकृत्यनिजमुखमुद्रातयाप्रकाशीकृता। ततोमन्त्रिणागदितम्–क्षणमात्रंत्वमत्रविलम्बस्व,
सुलक्षणांपृष्ट्वायावदहमागच्छामीतितामभिधायमन्त्रीततःसमुत्थायद्रुतंसप्तममपवर्कमियाय। सरलस्वभावांनिजचेतसिवीतरागं-
स्मरन्तींलज्जावनतमुखकमलांभूतलस्थितांतांसुलक्षणांनिरीक्ष्यमनस्येवंव्यचिन्तयत्–भामिनीयंनिजाचार–प्रथिताशीलशालिनी।
तथ्यवाग्वादिनीमन्ये, ह्याकृतिर्गुणशंसिनी॥ १॥ अनयावनितयाबालोनैवमारितइतिसत्यंप्रतीयते, तथाप्येतद्वृत्तान्तमस्यंप्रष्ट-
व्यमितिसञ्चिन्त्यसोऽवदत्–सुभगे? त्वयाऽसौबालोनिहतइतिजनश्रुतिः किंसत्या! सामन्दस्वरमवादीत्–भवादृशाअपिसर्वेऽ-
धुनैवंवादिनस्तर्हिकोऽस्मिन्विषयेसन्देहः? यद्येवंनस्याच्चेदेतादृशापवादसेविर्नीमांसर्वेजनाः कथंवदन्ति? साचिवोऽवादीत्–
अस्तु, तावत्त्वंमुखाऽवगुण्ठनंदूरीकृत्यपश्चाद्वक्तव्यार्थंप्रकाशय, वस्त्राच्छादितमुखेनवदन्त्यास्तववचनानिस्पष्टतयानज्ञायन्तेमया।
इतिमन्त्रिवचनमाकर्ण्यसहसासोत्कम्पंरोमाञ्चंदधतीसाप्रोवाच–सचिवेश्वर! किंकरोमि! न मेकश्चिदुपायःप्रस्फुरति, प्राक्तन-
दुष्कर्मयोगादाकस्मिकमिदंदुःखाऽभ्रपटलंमय्यावृतमस्ति, तस्मादियन्मात्रमपिभवतःसन्निधौवचनंमयोदीर्यते। अन्यथाश्वशुरस-
मानस्यभवतः समीपेमेजल्पनमप्ययुक्तम्, मुखंतुकथंदर्शयामि! तद्वार्त्तामदन्तिकेभवतानविधातव्या। मन्त्रिणागदितम्–तर्हि-

त्वयैवाऽस्याः सूनुर्मारितइतिनिर्णयोभविष्यति । तच्छ्रुत्वासुलक्षणाऽब्रवीत्–मन्त्रीश्वर ! भवताऽत्रविषयेनवीनंकिमभिधीयते ? अयमपवादस्तुमह्यंसर्वजनैर्दत्तचरएव । एतस्मादप्यधिकतरमवर्ण्यवादं जल्पन्तुनामजनाः । परंनिजकुलाचारंप्राणान्तेऽप्यहंनमोक्ष्यामि । इत्थंसत्यगिरंतांविज्ञायमन्त्रिणाव्यचिन्ति–नेयंवनिताकूटवादिनी, पवित्राचाराशीलशालिनीचेयंविद्यते, मायाप्रपञ्चस्तुचन्द्रावत्यांस्थितः । सैवबालघातिनीतिनिश्चीयते । इतिविहितनिश्चयोमन्त्रीचन्द्रावतीमभ्येत्यप्राह–हेभगिनि ! त्वत्पुत्रवधस्त्वयातुनैवविहितः ? । मन्त्रीश्वर ? किंनिजपुत्रंस्वयंघातयामि ? इत्थंचन्द्रावत्याअभिप्रायंज्ञात्वामन्त्रिणासाजगदे–यद्येवंतर्हियदहंकथयामितत्सर्वंत्वयासंपादनीयं, नोचेत्त्वमेवत्वत्पुत्रघातिनीतिनिर्णयोभविष्यति । चन्द्रावतीजगौ–आज्ञापयतुभवान्, त्वदादिष्टंसर्वंकरिष्यामि । मन्त्रीजगाद–इतोबहिर्निर्गत्यसद्योगृहंगत्वाचर्पटिकात्रयंविधायसद्योऽत्रसमागच्छ, इतिसचिववचनंनिशम्य साऽवदत्–नाहंसभ्यजनेभ्योबिभेमि, त्वदुक्तंवचनंकृतमेवविलोक्यताम्, तदधिकमपिकिञ्चिदपरंसमादिश । सुभगे ! अधुनाक्षणंप्रतीक्षस्व, सुलक्षणांपृष्ट्वायावदहमागच्छामीत्यभिधायमन्त्रीकञ्चित्समयमितस्ततः पर्यटनेनव्यतीत्यपुनस्तत्रसमागत्यचन्द्रावतीमब्रवीत्–त्वदग्रेयद्वचनंमयाऽभिहितंतदेवसुलक्षणामवोचम्, तच्छ्रुत्वासात्वेवंवदति-प्राणात्रजन्त्वथशिरोनिपातोऽथवानरेशोनिग्रहंकरोतु । तथाऽपिलज्जांवनितोचितांनो, त्यक्ष्यामिशीलैकविभूषणाऽहम् ॥ १ ॥ मन्त्रिपुङ्गव ? असूर्यम्पश्याःखलुराजदाराइतिकिंनश्रुतंत्वया ? तत्कुलोद्भवांमांजानीहि, याःक्षात्रकुलसंभूताअपिनिर्मर्यादंवर्त्तन्तेताभिःकुलटाभिः क्षत्रकुलंकिलविगोपितमेव । इत्थंसुलक्षणायाअभिप्रायंचन्द्रावत्यैविज्ञाप्यपुनर्विशालबुद्धिस्तामपृच्छत्–सभ्यजनसमक्षं मदुक्तंकार्यंत्वयाकर्त्तव्यंनवा ? तयाकथितं, सचिवेश्वर ? किमपरंवदामि ? भवतइच्छाचेन्नग्नीभूयनृत्यंकुर्वन्तीसर्वान्सभ्यान्रञ्जयामीतिचन्द्रावतीवचनमाकर्ण्यवि-

शालबुद्धिनान्यायस्वरूपंप्रकटीकृतमनयादुराचारिण्यैवबालोनिहतइति । तदानींतत्रस्थितःशूरसिंहोऽवदत्—न्यायविदांशिरोमणे ! पितृव्य ? धन्यस्त्वं, जगत्यस्मिन्विशालबुद्धिस्त्वमेवाऽसि । इमंन्यायस्वरूपंनिर्णयतस्तवबुद्धिबलमगाधंमन्ये । केवलंबालमरण-मेवनविहितंकिन्तुदुर्गपालघातश्चाऽनयादुष्टयानिजहस्तेनैवनिष्पादितः । इत्येतत्सर्वंमयाग्रतस्थतयादृष्टम् । अहमपितत्करगतस्त्वां-वञ्चयित्वामहताकष्टेनजीवितोऽस्मीतिशूरसिंहगिरंसमवधार्यसर्वेचमत्कृतास्तंमन्त्रिणंप्रशंसन्तिस्म । ततोलक्ष्मणसिंहः कर्मणांप्र-धानत्वंमन्यमानश्चन्द्रावतींभृशंनिर्भर्त्स्यनिजनिकेतनान्निरवासयत् । अथनिजधर्मनिरतोलक्ष्मणसिंहः सुलक्षणानुगतः सुखेन-दिवसानत्यवाहयत् । कियत्यपिसमयेव्यतीतेसतिगृहावाससुखंसेवमानयोस्तयोः क्रमेणशुभलक्षणलक्षितौद्वौपुत्रौजातौ । निजक-र्मानुसारतोलक्ष्मणसिंहोगृहाश्रमिणांधौरेयतामवाप, यतः—यत्रसत्यमतिस्तत्र, विजयः सर्वकामदः । पापवृत्तिः सुगुप्ताऽपि, गर्ज-त्यनर्थदायिनी ॥ १ ॥ इतिसत्यधर्मपालयतस्तस्यमनसिदुःखमयःसंसारवासोऽभवत् । ततोभर्तृहरिवद्वैराग्यवासितमानसोलक्ष्म-णसिंहः सुलक्षणासमेतः सद्गुरोश्चरणान्तिकेभवनाशनंचारित्ररत्नंजग्राह । लक्ष्मणमुनिर्गुरुपादौसेवमानोनिजाचारमशिक्षत । सुलक्षणासाध्वीचप्रवर्त्तिन्याः सन्निधौस्थिताशुद्धचारित्रमार्गसेवमानास्वजन्म कृतार्थयन्तीविचरतिस्म । ज्ञानध्याननिरतोयोल-क्ष्मणमुनिः सैवाहंपुरपत्तननगराणिपरिभ्रमन्नत्रगिरिराजयात्रार्थमागतोऽस्मि, पावनेऽस्मिन्घूर्यवनेचात्मध्यानंविदधामि । हेभव्या ! समस्तमिदंसंसारस्वरूपंवैराग्यस्यैवनिदानमस्ति, तथाऽपिमद्वैराग्यकारणन्तुमुख्यतोमद्भार्याचन्द्रावत्येवजाताऽस्ति, या कमलानि-विचिन्वन्तीत्वयासरसिविलोकिता । निजकृतदुष्कर्मयोगात्साासर्वत्रधिक्कारंलभमानापश्चात्तापपरायणानिजपापपङ्कंक्षालयितुमस्मि-न्नेवपवित्रवनेऽतिष्ठत् । अन्यदापर्यटन्तीसाध्यानस्थितंमामपश्यत्, व्रीडाऽवनतकन्धराविनीतभावंव्यञ्जयन्तीसा ध्याननिर्मुक्तंमा-

मभ्येत्यस्वापराधंक्षमयित्वाद्वादशव्रतान्ययाचत । मयाऽपिसद्बोधपूर्वकंगृहस्थधर्मोचितानिजिनेन्द्रकथितानिद्वादशव्रतानितस्यैप्र-दत्तानि । ततः सासम्यक्त्वधारिणीचंन्द्रावतीस्वात्मोद्धारकृतेऽस्मिन्पुण्डरीकाद्रौनिवसति, प्रत्यहंप्रत्यग्रैः कमलैरिदंसूर्यवनंविभूष-यतः श्रीमदृषभदेवजिनेशस्यपूजांविधायशुद्धांभावनांभावयति । यत्प्रभावेणसास्वर्गसुखंभुक्त्वाक्रमेणमोक्षपदंयास्यति । इत्थंमुनी-न्द्रमुखाद्देशनामृतंनिपीयमायामयंभवस्वरूपंचविज्ञायचन्द्रराजोमुनिवरंतमभिवन्द्यपुरस्तादचलत् । क्रमेणगिरिराजंप्रदक्षिणीकृत्य-स कृतकृत्योबभूव । ततोनिजनगरंप्रविविक्षुर्मकरध्वजोवरघोटकंसमहोत्सवंसज्जयामास, समारूढगजरत्नःशिरसि धृतातपत्रःपार्श्व-योश्चामराभ्यांवीज्यमानश्चन्द्रराजःसवयोभिःपरिवारितोऽग्रे चलितः । मकरध्वजोऽपि स्वयंप्रवरद्वीपमारुह्य तदन्वगात् ? अपरे नागरिका निजोचितवाहनारूढाःसप्रमोदमन्योन्येपांनिष्पीडितगात्रा मन्दंमन्दंप्रचेलुः ।

अनेकानि सुवाद्यानि, निनदन्तिस्म सर्वतः । गुडिका उच्छलन्तिस्म, स्तुतिं चक्रुश्च वन्दिनः ॥ १ ॥ याचकेभ्यो धनं प्राज्यं, ददन्तिस्म नियोगिनः । नटाः कुर्वन्ति नृत्यानि, गायन्ति वारयोषितः ॥ २ ॥ गर्जन्तीं दुन्दुभिध्वानै-र्भूपितां ध्वज-तोरणैः । पौरानानन्दयंश्चन्द्रो-विवेश विमलां पुरीम् ॥ ३ ॥ त्यक्त्वाऽशेपस्वकृत्यानि, पौरवृन्दानि ददृशुः । सहर्षं चन्द्रभूपालं, प्रेमलां स्तुवतेस्म ताम् ॥ ४ ॥ समहोत्सवमेतौ हि, भूपालौ नृपवेश्मनि । समागत्यार्थिनोदानै-स्तोपयामासतुर्भृशम् ॥ ५ ॥ ततः शिवकुमारं त,-माहूय चन्द्रभूपतिः । अनर्गलं धनं दत्त्वा, स्वसमानमचीकरत् ॥ ६ ॥ असंख्यातार्थदानेन, निजसामन्त-मण्डली । तोपिता मित्रवत्तेन, मानिता मानधारिणा ॥ ७ ॥

ततोगृहीतोचितसत्काराःसर्वे स्वस्वस्थानंभेजुः । तदानीं प्रमोदाङ्कुरपूरितंभूमण्डलंभृशंदिदीपे, इतःप्रेमवशायाःप्रेमलालक्ष्म्या-

हर्षभरेणरोमाञ्चितवपुषोनवीनोऽपि कञ्चुकस्तुत्रोट, अथमकरध्वजोनिजसुतामासाद्य साश्रुनयनःस्वापराधंचमयन् प्राह ।

शुच्यभूत्ते पुरा खेदो,—मयि प्रतीपगामिनि । चिराद्वैरायमाणस्य, मा मे दोषान्विचिन्तय ॥ १ ॥ कुष्ठिवचनविश्वस्तो—विष कन्येति विब्रुवन् । अविमृश्य कृतात्पापा—त्कां गमिष्यामि दुर्दशाम् ॥ २ ॥ मन्त्रिवाक्यमनादृत्य, त्वद्वधायोद्यतस्य मे । सत्यार्थे प्रकटीभूते, पश्चात्तापोऽधुना महान् ॥ ३ ॥ त्वद्भाग्येनैव हेपुत्रि !, जीवितासि गरीयसा । अहन्तु केवलं दुःख—दायकस्तव भूतवान् ॥ ४ ॥ त्वया तु गदितं पूर्वं, मद्भर्त्ताऽऽभापतिः खलु । किन्त्वन्यथा वचोऽबोधं, तावकं कुष्ठिवञ्चितः ॥ ५ ॥ मन्मतिरेव विभ्रान्ता, विपरीतं कृतं मया । अधुना त्वत्पतिं दृष्ट्वा, मानसं मुदितं मम ॥ ६ ॥ चन्द्रराजनृपोऽयं क्व, क्व स कुष्ठी नरोऽधमः । उभयोरन्तरं भूरि, क्व मेरुः क्व च सर्षपः ॥ ७ ॥ वत्से ! बलिष्ठं भाग्यं ते, विद्यते तेन साम्प्रतम् । अस्मन्मनोरथाः सर्वे, फलिताः शुभदायकाः ॥ ८ ॥ अङ्गजे ! मामका दोषा,—न्समर्त्तव्यास्त्वयाऽधुना । कृतेन त्वद्विरोधेन, पश्चात्तापपरोऽस्म्यहम् ॥ ९ ॥ आकर्णितस्वपितृवचना प्रधानांदैवगतिंमन्यमाना प्रेमला प्राह—हेतात ! नात्र तावकीनोदोषःकश्चिद्विद्यते वामे, विधातरि कृतेऽपि यत्ने स्ववाञ्छितंनैव फलति, यतः—सञ्जातसान्द्रमकरन्दरसां क्रमेण, पातुं गतश्च कलिकां कमलस्य भृङ्गः । दग्धा हिमेन पतता सहसैव सैषा, वामे विधौ न हि फलन्त्यभिवाञ्छितानि ॥ १ ॥ सिंहो बली गिरिगुहागहनप्रवासी, वासोदरे वसति भूमिभृतां बिडालः । नो पौरुषं कुलमपि प्रचुरा न वाणी, दैवं बलीय इति मुञ्च पितर्विषादम् ॥२॥ सदसि विदुरभीष्मद्रोणशारद्वतेषु, पतिभिरमरकल्पैः पञ्चभिः पालिताऽपि । अहह !! परिभवस्य द्रौपदीपात्रमासी—द्बलवति सति दैवे बन्धुभिः किं विधेयम् ॥ ३ ॥ गुणवदगुणवद्वा कुर्वता कार्यमादौ, परिणतिरवधार्या यत्नतः

पण्डितेन । अतिरभसकृतानां कर्मणामाविपत्ते-र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ४ ॥

तात ! प्राणिनःस्वकर्मणैव सुखदुःखानि लभन्ते, अन्यस्तु निमित्तमात्रोभवति, यतः—

स्वकृतं भुज्यते कर्म, देहिभिः कर्मयन्त्रितैः । रज्जुपाशनिबद्धो हि, वृषभो भ्रमतेऽनिशम् ॥ १ ॥

हेजनक ? ईदृग्गुणाढ्योभर्त्ता भवत्प्रभावेणैव मया लब्धः, अहन्तु गुणहीनाऽस्मि, यद्भावि तद्दैवेन सम्पादितमधुना तत्किमपि मनसि त्वया नानेयम् । यैर्दुर्जनैर्भवान्वञ्चितस्तेभ्योऽपि भद्रंभूयात् । यदस्ते ईदृक्कर्म नाचरिष्यंस्तदा ममेदृशी ख्यातिर्लोके नाभविष्यत् । हेतात ? साम्प्रतमहमखण्डप्रीत्या त्वया निरीक्षणीया, मद्भर्त्तारमपि स्नेहदृष्ट्या विलोकय, यतोऽधुना प्रवहणमर्वाक्तटे वर्त्तते, मकरध्वजःप्राह—वत्से ! विहाय परिचिन्तनमेतदीयं, शान्तिं लभस्व नितरां मदवेक्षिता त्वम् । आभापुरीपतिरयं मम देशरक्षा-मप्युग्रवीर्यविभवः सकलां विधाता ॥ १ ॥ ममान्वयस्त्वया पुत्रि ?, शीलवत्या विभूषितः । त्वद्भाग्येनैव जामाता, संप्राप्तो मे गुणान्वितः ॥ २ ॥ सुते ! त्वच्चरितं लोके, गास्यन्ति कवयो मुदा । शास्त्रेष्वपि प्रभावस्ते, विस्तारमेष्यति ध्रुवम् ॥ ३ ॥

इतिब्रुवता तेन सत्यसंगरेण प्रदत्ते सर्वभोगसुन्दरे मनोरमे प्रासादे निवसंश्चन्द्रराजःसभार्योदोगुन्दक इवाप्रतिमान्भोगान् भुञ्जानोगतवासरानपि नाज्ञासीत्—अथान्यदा मकरध्वजोजामातरंरहोगतःपृच्छति—

राजंस्त्वं कुक्कुटः केन, हेतुना केन निर्मितः । भवानत्र कया रीत्या, किमर्थश्च समागतः ॥ १ ॥ परिणीता कथं पुत्री ? मदीयेतः कथं गतः ? । वृत्तान्तं सर्वमाचक्ष्व, तच्छ्रोतुं मम कौतुकम् ॥ २ ॥ तेनोचे सर्ववृत्तान्तं, वीरमत्या कृतश्च यत् । पुरी-

मुद्रिय विमलां, पुनरागमनावधि ॥३॥ विमलाद्रिमहिम्ना च, मानवत्वं प्रपन्नवान् । इदानीं कृतकृत्योऽस्मि, दुर्लक्ष्यं हि पुरार्जितम् ॥ ४ ॥ एवंचन्द्रमुखतःसर्ववार्त्तांविदित्वा स्मृतनिजाचरणोमकरध्वजःपश्चात्तापपरायणःस्वचेतसि व्यचिन्तयत्–दक्षोऽप्यहंकुष्ठिना वञ्चितः सत्यार्थंनाऽविदम् । बुद्धिमता मन्त्रिणा मे कुमारी नारक्षिष्यत चेत्तदाऽज्जीवमिदंदुःखंशन्यत्त्वदभविष्यत् । दुरन्तादस्मात्पापाच्च मे मुक्तिर्नाभविष्यत्, अहो ? कुष्ठिनोऽस्यदुष्टत्वंकियद्वर्णयामि, निजदोषंगोपयित्वा निर्दोषाऽपि मत्सुताऽनेन कुष्ठिना सदोषीकृता, अद्यैतत्कपटंप्रकटीभूतं सत्यवार्त्ता च सर्वत्र प्रथिता, सुगुप्तमपि पापकर्म प्रच्छन्नंनैव तिष्ठति, इदानीमेतेषांपापवृत्तीनां योग्यशिक्षांकरोमीति विचिन्त्य मकरध्वजेन कारागृहस्थिताः कुष्ठ्यादयःपश्चाऽपि निजान्तिके समाकार्य सक्रोधमभाष्यन्त—

दुष्टाः ? दुष्टमिदं कार्यं, कृत्वाद्य क्व गमिष्यथ । सिंहलेश ? नृपो भूत्वा, त्वया किं न विचारितम् ॥ १ ॥ दुष्टोचितमिदं कार्यं, कुर्वता भवता न किम् । उत्पादितं व्यलिकं मे, नीतिमार्गानुसारिणः ॥ २ ॥ सुप्तसिंहस्त्वया मूढ ?, परवञ्चनबुद्धिना । जागरितोऽस्ति कालात्मा, स्वविनाशाय केवलम् ॥ ३ ॥ त्वं तु हास्यमिदं वेत्सि, मत्पुत्र्याः प्राणघातकम् । कलङ्किता मुधा पुत्री, भवता निर्भयात्मना ॥ ४ ॥ किं वर्णयामि तव दुष्टधियं हताश ?, स्वल्पान्यहानि तव जीवितमेव मन्ये । मिथ्याभिवादवदनस्य तवाद्य मास्तु, वक्त्रं मुखं ससचिवस्य विलोकनार्हम् ॥ १ ॥ एवं तु परुषाक्षरैस्तिरस्कुर्वता तेन भूपेन समादिष्टा घातकिनस्तान्पश्चाऽपि वध्यस्थानमनैषुः । स्वपापान्धितचेतसस्तेऽपि मुद्रितमुखाः किमपि नाऽवदन् । तस्मिन्समये परोपकारैकरसिकश्चन्द्रराजः स्वयमुत्थाय जगौ. पञ्चाऽप्येते नराधीश ?, भवन्तं शरणं श्रिताः । प्राणान्तशिक्षाऽतस्तेषां, नैव योग्या भवादृशाम् ॥ १ ॥ अनिष्टकारिणोऽनिष्टं, सज्जना नैव कुर्वते । अन्यथा

को विभेदः स्या-दुष्टसज्जनयोरपि ॥ २ ॥ पुनरेते कृतोपकारा इव भवता मन्तव्याः, अन्यथाऽज्ञातकुलशीलयोरावयोः सम्बन्धः कुतः संघटेत, गुणिषु गुणबुद्धयोबहवो विद्यन्ते, दुर्जनेष्वपि योगुणबुद्ध्या प्रवर्त्तते सैव सत्सु विराजते, पुनरेषामभयदानेन सर्वत्र भवतोयशोवृद्धिर्भविष्यति, आगस्कृतोदण्डनीया एवेति मन्यसे चेदेषांमूर्द्धनि बहुतरंजातमिदमितः प्रभृतीमे कदापीदृशम कृत्यं मनसाऽपि न चिन्तयिष्यन्ति, राजंस्तव सुतैव दुर्बलदैवा किमन्ये तत्र कुर्वन्ति ? कुष्ठिकुमारोऽप्ययं दयार्होऽस्ति, इत्यभ्यर्थनां कुर्वाणस्य चन्द्रराजस्य वचनं प्रमाणीकृत्य मकरध्वजस्तान् पश्चाऽपि बन्धनादमोचयत् । तदानींनिजभर्त्तुर्महिमानं प्रकटयितुकामा प्रेमला सभामागत्य शुद्धोदकेन चन्द्रराजचरणौ प्रक्षाल्य तज्जलेन कुष्ठिनः शरीरमसिञ्चत् । ततस्तत्प्रभावेण तत्कालमेव स नीरोगी जातः, तदा नभःस्थितैर्देववृन्दैश्चन्द्रराजस्य जयघोषंविधाय तन्मूर्ध्नि कुसुमवृष्टिर्विहिता, ततः कनककान्तिः कनकध्वजश्चन्द्रराजचरणयोः पतित्वा स्वाऽपराधंक्षमयामास, सर्वे सभ्या विस्मिताश्चन्द्रराजमहिमानंवर्णयामासुः । ततोदत्ताऽभयदानोमकरध्वजः सिंहलनरेशंसत्कृत्य निजदेशंव्यसर्जयत् । अथान्यदा निशीथे स्मृतगुणावलीगुणश्चन्द्रराजः स्वचेतसि व्यचिन्तयम्—दैव ? मद्दासरास्त्वत्र, व्रजन्ति सुखतः परम् । मद्भार्याया गुणावल्याः, न जाने कीदृशी स्थितिः ॥ १ ॥ प्रयाणावसरे पूर्व, मया पञ्जरसेविना । प्रदत्तं वचनं तस्यै, विस्मृतं तत्कथं हहा ॥ २ ॥ तद्यथा—यदाहं मानुषीभावं, प्राप्स्यामि प्रथमं तव । समागमं करिष्यामि, सुलभे सर्वसाधने ॥ ३ ॥

तद्वचनन्त्वत्र प्रेमलायाः प्रेम्णि लीनोऽहं विस्मृतवान् । साम्प्रतमपि येन केनाऽप्युपायेन तत्समागमंसाधयाम्यन्यथा मद्वचनंवृथा भविष्यति, यतोयः शुद्धभावेन यमभिकांक्षति स कदापि तेन न विस्मरणीय इति मानवोधर्मः । तस्माद्यावज्जीवं

सा प्रियतमा न मे विस्मर्त्तव्या, एवं चिन्तयतस्तस्य प्रभातसमयोऽजनि यथा—कुकुटे कुर्वति क्वण-माननं श्लिष्टयोस्तयोः। दिवाकरकराक्रान्तं, शशिकान्तमिवाबभौ ॥ १ ॥ नभोवनं नक्तमसौ विगाह्य, नक्षत्रसेनासहितः शशाङ्कः। कराग्रलग्नान्कतिचित्प्रहृत्य, पान्थान्प्रभाते प्रपलायतेऽद्य ॥ २ ॥ दिशि दिशि मृगयन्ते वल्गुना घासमेते, मुहुरपगतनिद्राः सप्तयो हेषितेन। अयमपि च सरोषैः कामिभिः श्रूयमाणो—नदति मधुरतारं ताम्रचूडोऽतिरक्तः ॥ ३ ॥ द्रुमाः पाण्डुप्राया—धृतनिबिडगर्भाः स्त्रिय इव। प्रफुल्लास्ते कुन्दा—नृपतिकृतमाना इव जनाः। पिको मन्दं मन्दं, हृदि मदननामानि जपति। प्रभोरग्रे पूर्वा—ऽपरिचितसभाकः कविरिव ॥ ४ ॥ ततः सुखशय्यांविमुच्य विहितनित्यकर्मानुष्ठानः स निजहस्तेन सुन्दरंलेखमलिखत्—

इति श्री चन्द्रराजचरित्रे चतुर्थोल्लासे तृतीयः सर्गः ॥ ३ ॥

मरुदेवीसुतं वन्दे, मोक्षदं सुखसेवधिम्। यतोऽखिलमनोवाञ्छा, सिद्ध्यति प्राणिनां सदा ॥ १ ॥ श्रीमदाभापुरीवासा, ऽनेकवर्योपमायुता। गुणावली महाराज्ञी, सद्गुणालीधरा वरा ॥ २ ॥ गाम्भीर्येण जितोदन्वा, क्षमया विजितक्षमा। रूपनिर्जितकामस्त्री, शुद्धशीलवती सती ॥ ३ ॥ विमलानगरीस्थस्य, चन्द्रभूभृत आशिषम्। विज्ञाय विततानन्दं, दधातु हृदि भावतः ॥ ४ ॥ विशेषकम् ॥ श्रीनाभेयप्रसादेन, कुशलं वर्त्ततेऽत्र मे। यत्क्रमाम्भोजसेवायां, देवेन्द्रवृन्दमुत्सुकम् ॥ ५ ॥ प्रिये ! त्वत्कुशलोदन्त—पत्रं प्रेष्यं विधानतः। देशान्तरस्थितानान्तु, पत्ररूपो हि संगमः ॥ ६ ॥ उदन्तं मामकं ज्ञेय—मिहानन्दप्रदायकम्। सूर्यकुण्डप्रभावेण, मङ्गलान्यजनि प्रिये ! ॥७॥ अन्यच्च—श्रीपुण्डरीकाचलतीर्थमत्र, समस्ति विघ्नौघविनाशमूलम्। अनेकभव्याः कृतकर्मनाशाः, सिद्धिंगता यत्र भयोज्झितां द्राक् ॥ ८ ॥ त्वत्प्रमोदविवृद्ध्यर्थं, लेखोऽयं प्रेषितो मया। यदि

हार्दं भवेत्प्रेम, त्रिलोक्यैतं प्रमुद्यताम् ॥ ९ ॥ प्रिये ? प्रतिक्षणं भूयः, स्मरामि तावकान्गुणान् । किन्तु कम्बाप्रहारस्य, नैव विस्मर्यते दिनम् ॥ १० ॥ मत्प्रीतिरीतिर्न ज्ञाता, श्वश्रूवश्यतया त्वया । स्मृत्वा तदखिलं वृत्तं, मनो दीनं प्रजायते ॥ ११ ॥ कामिनि ! तव किं वच्मि, ! त्वमप्यत्र करोषि किम् । वनिता कस्यचिन्नास्ति, लौकिकोक्तिरिति स्फुटा ॥ १२ ॥ विक्रीणीते पतिं सुप्तं, व्याघ्रं स्तेनश्च हन्ति या । बिभेत्याखुभुजो नेत्रा-त्तादृशी निष्ठुरा रमा ॥ १३ ॥ कटाक्षयन्त्यन्यनरं, स्मरन्ती हृदये परम् । भाषयन्तीतरं कश्चि-त्कुलटा लक्ष्यतेऽनया ॥ १४ ॥ चक्षुषा बोधयत्येक-मपरं करसञ्ज्ञया । नारीणां चरितं चित्रं, ज्ञानिनो हि विजानते ॥ १५ ॥ तारकान्गणयेत्सद्य-स्तोलयेद्वारिधेर्जलम् । स्त्रीचरित्रं प्रवक्तुं नो, वाचस्पतिरपि क्षमः ॥ १६ ॥ निःस्नेहा कपटावासो-वनिताऽसत्यवादिनी, इन्द्रचन्द्रौ वशं नीतौ, को गर्वोऽन्यजनस्य वै ॥ १७ ॥ अगाधसरितस्तोयं, स्वभुजाभ्यां तरत्यहो ? । तथाऽप्यबला लोकेऽस्मिन्, कथ्यते वनिता जनैः ॥ १८ ॥ केवलं विषयाकृष्टा, निहन्ति स्वामिनं निजम् । कीदृगासां बलं धैर्यं, ब्रह्माऽप्यन्तं न गच्छति ॥ १९ ॥ बिभेति श्वानतो ग्रामे, गृह्णाति द्विपिनं वने । अहिं वशं नयत्येषा, रज्जुं दृष्ट्वा पलायते ॥ २० ॥ भर्तृहरिस्तथौजस्वि-विक्रमादिनरोत्तमाः । तेऽपि नान्तं गता नारी-चरित्राणां कदाऽप्यहो ? ॥ २१ ॥ प्रिये ! संसृतिरीतिः सा, किं वदामि तवाग्रतः । किन्तु न त्वं मया ज्ञाता, नीतिहीनेदृशीत्वरी ॥ २२ ॥ प्रिये ? न युज्यते कर्त्तुं, कपटं तादृशं तव । सत्यप्रीतिं मदीयां त्वं, त्यक्त्वा जाता पराङ्मुखी ॥ २३ ॥ मत्तः पृच्छ्यगोष्ठीत्व-मकृथाः श्वश्रूसंगता । यथोप्तं तादृशं लूनं, फलं लब्धं यथाकृतम् ॥ २४ ॥ मयि प्रेमवती त्वं नो, श्वश्रूस्ते वल्लभाऽभवत् । श्वश्रूवध्वौ मिलित्वोभे, यथेच्छं नन्दतां चिरम् ॥ २५ ॥ नास्ति दोषोऽत्र ते कश्चि-द्दैवमेवाऽत्र चिन्त्यते । यद्भावि तद्भवत्येव

कर्मरेखा बलीयसी ॥ २६ ॥ त्वद्दोषस्मरणाद्रोषो-मानसं भजते मम । गुणान्स्मरंस्तवाहञ्च, सन्तोषं परमं भजे ॥२७॥ लेख्यं भूरितरं पत्रे, स्वल्पं हि लिखितं मया । सामुद्रमुदकं धर्त्तुं, कथं शक्तो भवेद् घटः ॥ २८ ॥ यस्यसत्त्वे लोकसत्त्वं, यो हि वर्ण-द्वयात्मकः । सर्वशक्तिधरः सोऽयं, वल्लभे ! त्वयि तिष्ठति ॥ २९ ॥ लक्ष्मीकान्तकरस्थं यद् , यच्च पश्चात्तरान्वितम् । आद्याक्षरेण हीनं त-च्छेषं मह्यं प्रदीयताम् ॥ ३० ॥ नीलभासौ मदीराक्ष्यौ, वसतोऽम्बुनि सर्वदा । त्वदीयदर्शनोत्कण्ठां, ते हि धारयतस्तराम् ॥ ३१ ॥ मठे वसति योगीन्द्रः, क्षिप्यतां जिस्तदन्तरे । आवयोस्तादृशी प्रीति-र्जानीते तज्जगत्प्रभुः ॥ ३२ ॥ समस्यार्थरहस्यं त-द्विभाव्यं मनसा त्वया । येन प्रीतिः प्रमोदश्च, महोत्कर्षत्वमाप्नुयात् ॥ ३३ ॥ इमं लेखार्थमवधार्य, देयं प्रत्युत्तरं द्रुतम् । जानासि यदि चेच्छ्वश्र्वै, । न निवेद्यमिदं त्वया ॥ ३४ ॥ पुनर्दूतश्च तेन भणितः-आभापुरीं द्रुतं याहि, मिलित्वा मन्त्रिणं पुरा !। अयं लेखो गुणावल्यै, दातव्यो रहसि त्वया ॥ ३५ ॥ मद्विमाताऽतिचण्डाऽस्ति, मम द्वेषविधायिनी । सा चेज्जानाति वृत्तान्त-मिदं विघ्नकरी भवेत् ॥ ३६ ॥ त्वयाऽपि गुप्तभावेन, वर्त्तितव्यं पुरान्तरे । यथा-कोऽपि न जानाति, तथा कार्यं प्रयत्नतः ॥ ३७ ॥ इदंवाचिकश्चत्वया निवेदनीयम्-निश्चिन्ता भव रंभोरु ! अचिराद्भावि नौ सुखम् । आभापुरीमहाराज्यं, करिष्यावः सह स्थितौ ॥ ३८ ॥ दुष्टानां नयनश्रेणि-र्मर्दिताशु भविष्यति । पुण्यलब्धिमतां लोके, साहाय्यं कुर्वते सुराः ॥ ३९ ॥ अत्रानन्दरसव्याप्तो-नित्यं तिष्ठामि वल्लभे ! तथाऽपि स्नेहवत्यास्ते स्मरणं जायते मुहुः ॥४०॥ श्वश्रूबुद्ध्या त्वया नाऽयं, विस्मर्त्तव्यो जनः प्रिये ! । विदेशमालतीपुष्पा-त्प्रियो हि देशकण्टकः ॥ ४१ ॥ सुखार्णवनिमग्नस्य, मानसं जायते मम । त्वत्संगमोत्सुकं सुभ्रु ! सुधासमवचस्विनि ! ॥ ४२ ॥ यदा त्वत्संगमो भावी, सफलं दिनमेव तत् ।

मन्येऽहमङ्गने ? ताव–द्वासरा व्ययिता मुधा ॥ ४३ ॥ तदानीं हृद्गतं वृत्तं, कथयिष्यामि तेऽग्रतः । स्वल्पे पत्रे कियाँल्लेखो–लिख्यते वाग्मिनाऽपि वै ॥ ४४ ॥

एवंसंदिश्यमानोनिजाप्तदूतो दत्तलेख स्तेनाभापुरींप्रति प्रेषितः । सोऽप्यविलम्बप्रयाणेन तांपुरीमासाद्य गुरुतरप्रमोदंलेभे, ततोगुप्तसञ्चारःस सचिवगृहंगत्वा तल्लेखंतस्मै प्रादात् । सोऽपि लेखमुन्मुद्य विज्ञातसारोगुणावलीसन्निधौ गत्वा तत्पत्रंस्वहस्तेनैव रहसि तांप्रायच्छत् । सा तु पत्रसारंविभाव्य तावन्तंप्रमोदंहृदि बभार, यस्तत्रानवकाशत्वादमान्नेत्रपुटादश्रुरूपतया बहिरगात् । अतीव मोदमाना सा निजभर्त्तारमिव तंलेखंसंपूज्य वक्षसाऽऽलिङ्गतिस्म, ततस्तेन दूतेन निजस्वामिसंदेशवचनानि श्राविताानि, तदाकर्ण्य च सा तदुत्तरंलिखति—

स्वस्तिमद्विमलापुर्यां, वीरसेनान्वये शशी । राजराजेश्वरो धैर्य–निधानश्चन्द्रभूपतिः ॥ १ ॥ आभापुरीस्थिता दासी, भवद्दर्शनकांक्षिणी । निवेदयति सप्रेम, प्रणतिं ते गुणावली ॥ २ ॥ युग्मम् ॥ भवत्पुण्यप्रसादेन, वर्त्ततेऽत्र निरामयम् । सततं क्षेमदं पत्रं, लेखनीयं पुनस्त्वया ॥ ३ ॥ स्वामिन्मयि कृपां कृत्वा, पत्रं संप्रेषितं त्वया । तेन त्वन्महिमाऽतुल्यः, क्षत्रवंशशिरोमणे ! ॥ ४ ॥ भवल्लेखहरादासं, कुशलोदन्तपत्रकम् । तन्निरीक्ष्य महानन्दो–हृदि नो माति मामके ॥ ५ ॥ सूर्यकुण्डप्रभावेण, सफलं जनुरावयोः । समस्तं कुशलं वृत्तं, विज्ञातं त्वत्प्रसादतः ॥ ६ ॥ स्वामिन् ? हताशया श्वश्रू–र्न ज्ञाता कुटिला मया । निजक्षिप्रां हि को भुक्त्वा, कुर्याद्दथिलसङ्गतिम् ॥७॥ हीनपुण्यस्य सद्बुद्धि–रप्येति विपरीतताम् । यथा राज्ञी सुखावासे पिण्याकं जग्धुमिच्छति ॥ ८ ॥ प्रपञ्चजालमुत्कीर्य, श्वश्रूः स्नेहमदर्शयत् । ततः प्रवर्द्धिता वार्त्ता, पिच्छस्य वायसोऽजनि ॥९॥

क्वाभापुरी क्व विमला, वीचितं सर्वकौतुकम् । हास्यमूलोऽभवत्कासः, पश्चात्तापश्च भूरिशः ॥ १० ॥ वार्त्ता वैवाहिकी प्रात-र्भवता मे निवेदिता । ताञ्चेच्छ्वश्रूं ब्रुवेऽहं नो, नैतत्संकष्टसंभवः ॥११॥ स्वकृतं हि मया भुक्तं, न केनाऽपि निवारितम् । स्तेन-माता कुशूलायां, मुखं धृत्वा हि रोदिति ॥१२॥ पश्चात्तापोऽधुना व्यर्थो–मुखतः किमु वर्ण्यते । जलं पीत्वा गृहप्रश्नो–हास्य-हेतुः प्रकीर्त्त्यते ॥ १३ ॥ यः कोऽपि भाविभावो हि, विधिना लिखितोऽलिके । भोक्तव्यं तत्फलं तेन, मीनो मेषः कथं भवेत् ॥ १४ ॥ षोडशाब्दी गता स्वामि–न्नन्तरायकरी मम। तत्तु मद्धृदयोदन्तं, जानाति केवली स्वयम् ॥ १५ ॥ नररूपं मम श्वश्रूः, श्रोष्यति त्वां जनान्तिकात् । विधास्यति तदोत्पातं, दुर्जनो हि न शाम्यति ॥ १६ ॥ सावधानं त्वया स्थेयं, हृदयोल्लासिना ततः । यादृक्तादृग्जने नैव, विश्वासः सुखदायकः ॥ १७ ॥ विमात्रे च निवेद्याऽत्र, त्वयाऽऽगमनभावना । यादृगत्ताः पत-न्त्येव, तादृक् क्रीडाऽभिसारणा ॥ १८ ॥ षोडशाब्दी व्यतीता मे, वियोगेन तव प्रभो ? । वाचयन्त्यास्ततो लेख–मश्रुधारा-वहे दृशौ ॥ १९ ॥ दर्शिता ये उपालम्भाः, पत्रे ते नाधिकास्त्वया । ततोऽधिकतरा दोषा–मयि सन्ति नरेश्वर ? ॥ २० ॥ भवान्विलेखितुं योग्यः, श्रोतुमर्हास्म्यहं विभो ! । यथा देवस्तथा पूजा, न मृषेति जनश्रुतिः ॥ २१ ॥ भवदीयसमस्यार्थं, विभाव्य मम मानसे । महानन्दः समुत्पन्नो–विनष्टा दुःखसन्ततिः ॥ २२ ॥ मयि दुर्गुणपेटायां, गुणलेशो न विद्यते । मारु-तेन प्रभो ! नश्येत् , पक्वमाम्रफलं यथा ॥ २३ ॥ मदागः स्मरतस्तेऽह–मनुग्राह्या कदाऽपि नो । धैर्याधरीकृतोदन्वा, किन्तु राजन्विभाव्यसे ॥ २४ ॥ निर्हेतुकं गुणं स्वामिन् ! सन्तः कुर्वन्ति देहिनाम् । मेघो वर्षति सर्वत्र, किञ्चिन्मूल्यं न याचते ॥२५॥ अश्मखण्डप्रहारेण, फलमाम्रः प्रयच्छति । तथैव त्वादृशाः स्वामिन् ! धरायां गुणलुम्बिकाः ॥ २६ ॥ छिन्नोऽपि चन्दनतरुः,

सौरभ्यं न जहाति वै । मद्दोषा भवता क्षान्ता-धन्यस्त्वं विदुषां वर ! ॥ २७ ॥ मादृशी नैव पापात्मा, दृश्यते भूतलेऽपरा । श्वश्रूशिक्षाऽनुसारिण्या, हा ! मया बञ्चितः पतिः ॥ २८ ॥ मूढया न मया ज्ञातं, विमातुर्दुष्टचेष्टितम् । पतिता व्यसने मौग्ध्या-त्स्वामिन्भूरितरे मुधा ॥ २९ ॥ अपराधसहस्रं मे, क्षारवारिणि मज्जतु । दासीयं माननीया ते, सततं प्राणवल्लभ ! ॥ ३० ॥ कृपां कृत्वा शुभं पत्रं, प्रेषणीयं त्वयाऽनिशम् । सत्वरं दर्शनं देयं, वपूरक्ष्यं च यत्नतः ॥ ३१ ॥ मत्स्वसा प्रेमलालक्ष्मी-र्वल्लभाऽतीव मे प्रिय ! । प्रष्टव्या कुशलोदन्तं, बहुस्नेहपुरःसरम् ॥ ३२ ॥ सूर्यकुण्डप्रभावेण, स्वामिन् ? विघ्नलता गता । तर्हि पुण्यप्रसादेन, सर्वं भव्यं भविष्यति ॥ ३३ ॥ वृत्तान्तमिदमागोप्य, प्रयाहीतो निजां पुरीम् । क्षेमपत्रं निजं दत्त्वा, व्यसृजत्तं सगौरवम् ॥ ३४ ॥ दूते तस्मिन्गते तत्र, वार्त्ता संगोपिताऽपि सा । प्रससार प्रतिस्थानं, लोकविस्मयकारिणी ॥ ३५ ॥

यतः—वार्त्ता च कौतुकवती विशदा च विद्या, लोकोत्तरः परिमलश्च कुरङ्गनाभेः । तैलस्य बिन्दुरिव वारिणि वार्यमाण-मेतत्त्रयं प्रसरतीति किमत्र चित्रम् ॥ ३६ ॥ स्थाने स्थाने कौतुकं मन्यमानाः सर्वे जनास्तामेव वार्त्तांकुर्वन्तिस्म, चन्द्रराजः सत्वरमत्र समायात्वित्याशीर्वचनानि च प्रोचुः । अथ कुकुटीभूतश्चन्द्रराजोमानवदेहंप्रपन्न इति वार्त्तापरम्परया वीरमती शृणोतिस्म, ततः प्रदीप्तक्रोधानला सा व्यचिन्तयत् । कोऽसौ मूढो यमातिथ्य-मिच्छति कश्च शक्तिमान् ! । मत्कृतं कुकुटं योऽत्र, नररूपं व्यधत्त हा ॥ १ ॥ एवञ्च श्रूयते सोऽत्र, समागन्तुमभीप्सति । तत्तु ममैव मूर्खत्वं, जीवन्मुक्तः पुरा मया ॥ २ ॥ उक्तञ्च-जातमात्रं न यः शत्रुं, रोगञ्च प्रशमं नयेत् । महाबलोऽपि तेनैव, वृद्धिं प्राप्य स हन्यते ॥३॥ तथाच-उत्तिष्ठमानस्तु परो-नोपेक्ष्यः पथ्यमिच्छता । समौ हि शिष्टैराम्नातौ, वत्स्यन्तावामयः स च ॥४॥ अपिच—उपेक्षितः क्षीणबलोऽपि शत्रुः,

प्रमाददोषात्पुरुषैर्मदान्धैः । साध्योऽपि भूत्वा प्रथमं ततोऽसा-वसाध्यतां व्याधिरिव प्रयाति ॥ ५ ॥ तथाच-आत्मनः शक्तिमुद्वीक्ष्य, मानोत्साहश्च यो व्रजेत् । शत्रून्हन्ति स एकोऽपि, क्षत्रियान्भार्गवो यथा ॥ ६ ॥ लघीयान्स मां पराजेतुं समीहते, परं मूढमतिस्तन्न जानाति, मिष्टान्नभोजनवत्संग्रामकरणं न सुकरम् । प्रागेव तत्र गत्वाहं लघिष्ठं तं निरुध्य तदभिमानं सत्वरं मोचयामि तदैव मे जीवितंसफलम् । एवंविचार्य सा गुणावलींसमाकार्य सक्रोधंप्राह--मुग्धे ! विमलपुर्यां ते, भर्त्ता जातोऽस्ति मानवः । अत्रागन्तुमनो धत्ते, श्रुतं तत्सत्यमस्ति किम् ? ॥ १ ॥ विमूढः स मया सार्द्धं, स्पर्द्धां कर्त्तुं समीहते । केवलं तदविज्ञत्वं, जानामि गजगामिनि ? ॥ २ ॥ मनुजत्वं समासाद्य, सांप्रतं मानभूधरम् । विवेकविकलः सोऽद्य, समारूढोऽस्ति मूढधीः ॥ ३ ॥ इदं वृत्तान्तमाचक्ष्व, जानासि सकलं ध्रुवम् । मत्तस्त्वया न संगोप्यं, वाञ्छसि शुभमात्मनः ॥ ४ ॥ जीवद्भर्त्तृके ! अत्रागत्य राज्याभिलाषा त्वया न विधातव्येति पत्रंविलिख्य त्वद्भर्त्तारंविज्ञापय, मदुक्तेयंवार्त्ता कुत्राऽपि त्वया न प्रकाशनीया, मदग्रे च त्वया प्रपञ्चबुद्ध्या न वर्त्तितव्यम् । यदि कपटभावेन वर्त्स्यसि चेन्मादृशी दुःखदायिनी काऽपिनास्तीति त्वया न विस्मरणीयम् । पुनस्त्वत्स्वामिना पत्रादिकंप्रेषितश्चेत्तद्वारिणि प्रक्षालनीयम् । मृगाक्षि ! इदानीमहंविमलापुरींगन्तुमिच्छामि त्वमेकाकिन्यत्र सुखेन तिष्ठ, तंधूर्त्तंशिक्षयित्वा सद्यःसमागच्छामि, गुणावली सभयंप्राह—मातर्मन्ये वृथा वार्त्ता-मिमां दुर्जनभाषिताम् । श्रीमत्या कल्पितं वक्तुं, नोचितं स्वमुखेन माम् ॥ १ ॥ तव मन्त्रप्रभावेण, योऽभवच्चरणायुधः । त्वत्प्रसादं विना सोऽद्य, नरत्वं कथमाप्नुयात् ॥ २ ॥ मातस्त्वत्तोऽधिका पूज्या, जगत्यस्मिन्न विद्यते । त्वत्प्रभावं वृथा कर्त्तुं, कोऽन्योऽस्ति भूतले क्षमः ॥ ३ ॥ नटेभ्यो विहगो दत्तो-विमला दूरतः स्थिता । त्रयोदश्यास्तृतीयाया-योगो भवति दुर्लभः

॥ ४ ॥ तत्र त्वद्गमनं मात-र्निष्फलं सहसा कृतम् । वारिदर्शनतः पूर्व-मुपानत्त्यागवत्किल ॥ ५ ॥ नाऽस्मि त्वत्तोऽधिका दक्षा, यतस्त्वां शिक्षयाम्यहम् । सुविचार्यैव कुर्वन्ति, स्वकार्यं मतिशालिनः ॥ ६ ॥ प्रभूतप्रभावशालिन्या भवत्यास्तदुपरि प्रयाणमनुचितंमन्ये, यतश्चोक्तम् । तृणानि नोन्मूलयति प्रभञ्जनो-मृदूनि नीचैः प्रणतानि सर्वतः । समुच्छ्रितानेव तरून्विबाधते, महान्महत्स्वेव करोति विक्रमम् ॥ १ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो-बली बलं वेत्ति न वेत्ति निर्बलः । पिको वसन्तस्य गुणं न वायसः, करी च सिंहस्य बलं न मूषकः ॥ २ ॥ अतोऽहंब्रवीमि तत्र तव गमनमनुचितम् । इतिनिगद्य गुणावली स्वस्थानंगता तामेव च चिन्तामकरोत् ।

इतिश्री चन्द्रराजचरित्रे चतुर्थोल्लासे चतुर्थः सर्गः ॥ ४ ॥

इतोवीरमत्यपि निजकार्यंसाधयितुकामा मन्त्रप्रभावेण देवान् समाहूय " चन्द्रराजोमानवत्वंप्रतिपन्नस्तमधुना यूयंव्यापादयतेति " तान् समादिशत्-देवा अपि सुदीर्घंविचार्य तांप्रोचुः, भगिनि ! सूर्यकुण्डे स्नानविधिना स मनुष्यत्वंप्राप्त इति सत्यमस्ति, तं प्रभाविनंनरेशंविनिहन्तुंवयमक्षमाः, त्वत्प्रयासोऽपि तस्मिन्निष्फलोभविष्यति, तद्रक्षकाणामग्रेऽस्माकंकियद्बलम् ?

यतः—अविदित्वाऽऽत्मनः शक्तिं, परस्य च समुत्सुकः । गच्छन्नभिमुखो वन्हौ, नाशं याति पतङ्गवत् ॥ १ ॥

तथाच—यो बलात्प्रोन्नतं याति, निहन्तुं सबलोऽप्यरिः । विमदः स निवर्त्तेत, शीर्णदन्तो गजो यथा ॥ २ ॥

अतोवयंनिन्द्यकर्मणि करप्रसारं न करिष्यामः, तवाऽभीष्टमन्यत्साधयितुंबद्धपरिकराःस्मः । भगवति ! यद्यस्माकंवचनंमन्यसे चेत्तवाऽपि स्वसुतेन सार्द्धंवैरबुद्धिर्नोचिता, इदंराज्यंचतस्मै वितीर्य त्वंनिवृत्ता भव, तदाज्ञांसर्वत्र प्रवर्त्तय, त्वत्पुत्रसम्प-

त्विस्तवैव गीयते इतिदेवगिरंनिशम्य वीरमती भृशंचुकोप, पुनस्तैर्बोधिताऽपि सा स्वहितमजानन्त्यसदाग्रहंनामुचत् । ततः कदाग्रहग्रस्तां तांविज्ञाय विद्यासिद्धा अमराःस्वस्वस्थानंजग्मुः। अथवीरमती स्वमन्त्रिणंसमाकार्य बभाण—व्रजामि विमलापुर्यां, विनेतुं चन्द्रभूपतिम् । राज्यभारस्त्वया ग्राह्यो—भुजाभ्यां सचिवेश्वर ? ॥ १ ॥

मन्त्रीजगाद—देवि ? त्वद्वचनं मान्यं, कथं त्वां वारयाम्यहम् । पन्थानस्ते शिवाः सन्तु, मङ्गलानि पदे पदे ॥ २ ॥

इतिमन्त्र्यभिप्रायंविदित्वा मोदमाना वीरमती तंसप्रमाणंमेने, ततःकोपाक्रान्तमानसा सापुनस्तानमरानाहूय तैःपरिकरिता करतले कर्त्रिकांनर्त्तयन्ती नभोमार्गेण विमलापुरीमभिययौ, योहि स्वहितंपरोपदिष्टंन मनुते स पराभवमाप्नोति,

यतः—यो मदावेशतो नैव, मन्यते हितमात्मनः । स पराजयमाप्नोति, वारितोऽपि न तिष्ठति ॥ १ ॥

नभोवर्त्मनि व्रजन्ती वीरमती सरोषंचिन्तयति, अधुनैव मानवापसदंचन्द्रराजंपराभूय निहत्य वा पश्चादागच्छामि, अहो ? परेषामनिष्टचिन्तनेन स्वस्यैवानिष्टंजायते इतिविमूढधीः सा न जानाति, स्वयमेव राज्यप्रदानाय विमलापुरींयावत्सा व्रजति तावन्निजभाग्यप्रेरित इव कश्चिद्देवश्चन्द्रराजमभ्येत्यावदत्—महाराज ? अस्माकंवचनमनादृत्य त्वांनिहन्तुकामा त्वद्विमाताऽत्र समायाति, अतस्त्वया सावधानीभूय स्थातव्यम् किञ्च—तव पुण्यप्रभावोऽद्य, गरीयान्वर्त्तते नृप ? । दैवेन रक्षितो देही, निहन्तुं केन शक्यते ? ॥ १ ॥ तथापि रत्नानि सुराक्षितानि, तिष्ठन्ति कालेऽपि न यान्ति विक्रियाम् । उपेक्षितान्यत्र फलन्ति-नैवं, निगद्य दिव्यन्तरितो बभूव सः ॥ २ ॥ इति देवगिरंनिशम्य चन्द्रराजोभूरिमोदंबिभ्राणः सत्वरंविमातरमभियातुंसज्जी-बभूव, वज्रायमाणंसन्नाहंवपुषि धारयन्कटितटे निबद्धखड्गलतिकः स्वयंमारुततुल्यवेगमेकंतुरङ्गममारुह्य भूरिविक्रमैःसप्तसह-

साश्ववारैःसमन्वितोमृगयामिषेण पुरान्निर्गतः । कियद्दूरंगत्वा परितोवीक्षमाणेन तेन नभोवर्त्मना समागच्छन्ती सा दूरतोदृष्टा, मुखतःकोपाऽनलज्वालामुद्वमन्तीमङ्गारशकटीमिव विक्रान्तदेहांतांविलोक्य प्रसन्नीभूतश्चन्द्रराजोमामामन्त्रितुमियंसमागच्छतीति विज्ञातवान् । साऽपि दूरतःसमायान्तंचन्द्रराजमपश्यत् । तदानींनभःस्थितया तया भणितम्—

चन्द्र ! त्वदागमनमद्य सुखाय मन्ये, विस्मृत्य कुक्कुटगतिं गुरुतां प्रपन्नः । केनाऽपि ते श्वशुरपक्षगतेन पुंसा, नो वारितस्त्वमधुनाऽत्र समागतोऽसि ॥ १ ॥ मयि जीवन्त्यां तवाभापुर्यामागमनेच्छा वृथैव, यत्क्रमेलकोनागवल्लीदलानि चर्वितुंनार्हति, रेमूढ ? मत्सन्मुखंकिंविलोकयसि ? अधुनैव त्वांयमातिथिंकरिष्यामि, सत्वरंनिजेष्टदेवतांस्मर, ततस्तांशान्तमनाश्चन्द्रराजोऽवदत्—पूज्यपादे ? प्रकोपं मा, कुरुष्व विनते मयि । कदाऽप्यज्ञानतो नैव, त्वद्विरुद्धं समाचरम् ॥ १ ॥ स्वपुत्रेण समं युद्ध्वा, प्रतिष्ठां कामवाप्स्यसि । मद्वचस्त्वद्धितायैव, परिणामे भविष्यति ॥ २ ॥ त्वयेष्टदेवस्मरणं, मद्धितायोपदर्शितम् । परलोकहितं धर्मं, त्वमपि स्मर सत्वरम् ॥३॥ किमर्थमागताऽसित्वं, नूतनं कर्तुमिच्छसि । तावकं चरितं वेद्मि, वर्णितुं तदसाम्प्रतम् ॥४॥

दुराचारे ? पुनस्त्वमखिलजगद्भारं कथंवहसि ? निजंमहत्त्वंवृथैव ख्यापयसि, यतस्त्वदुत्सङ्गे च्छगणकंवर्त्ततेऽतोगरिष्ठमभिमानं मा कुरुष्व, इति चन्द्रवचोनिशम्य भृशंरुष्टा दुष्टवृत्तिर्वीरमती प्रथममेव खड्गेन चन्द्रराजंप्रजहार, तत्कवचमास्फाल्य सैवासिर्वीरमत्या वक्षसि व्यलगत्, तत्प्रहारेण मूर्च्छिता सा पृथिव्यांनिपपात । पुनस्तत्खड्गश्चन्द्रराजाऽन्तिके समागतः, सोऽपि मौक्तिकैर्वर्द्धापयित्वा तं स्वीचकार, ततो विज्ञातविष्णुकुमारनमुचिमन्त्रिदृष्टान्तश्चन्द्रराजो दुर्जनाय तदुचितंफलंदातव्यमिति ध्यात्वा तां केशपाशे जग्राह, ततः स प्रलपन्तींतांनभसि चक्रवद्भ्रमयित्वा रजकोवस्त्रमिव शिलातले पस्फाल, ततः निरुद्धश्वासा

सा सद्योमृत्वा षष्ठीनिरयभूमिमगमत् । अहो ? दुर्जनलोकानां, निजकर्मानुसारतः । सुलभा दुर्गतिर्मन्ये, दुर्लभा सुगतिः पुनः ॥ १ ॥ चन्द्रराजशिरसि कुसुमवृष्टिंविधाय जयशब्दंकुर्वन्तोदेवा नभस्तलंगर्जयामासुः । वीरमती तत्र घोरतमंदुःखमनुभूय भवसागरे निममज्ज, योहि धर्मभृतां वैरमुत्पादयते स दुरन्तांगतिंलभते । ततश्चन्द्रराजः समुद्धृतवैरिशल्योविमलापुरींसमागतः। जयदुन्दुभिनादंशृण्वानोमकरध्वजोऽप्रमितप्रमोदमासाद्य स्वकीयमर्द्धराज्यंतस्मै ददौ, महानन्दनिमग्ना प्रेमलालक्ष्मी रचिताञ्जलिःक्षणमपि स्वपतिसान्निध्यंनात्याक्षीत् । मिलितमानसौ तौ दम्पती सुखविलासाननुभवतःस्म । अथ चन्द्रराजःआभमङ्गलो-वीरमतीमरणवार्त्तादेवमुखेन गुणावलींव्यजिज्ञपत् । स अमरस्तद्वार्त्तांतस्यै निवेद्य स्वस्थानमगमत् । अमृतोपमंतद्वचनंनिपीय गुणावली प्रसन्नहृदया निजमन्त्रिणंसमाकार्य तद्वृत्तान्तमचीकथत् । सोऽपि प्रफुल्लवदनोऽब्रवीत्—

देवि ? दुःखोदधिर्जातो,-गोष्पदप्रः सुदैवतः । फलितं प्राक्तनं पुण्यं, साम्प्रतं सफलं जनुः ॥ १ ॥ श्रुतैतद्वृत्तान्ताः पौराअपि सप्रमदास्तद्दर्शनाऽभिलाषुका निजाभीष्टदेवान्प्रार्थयामासुः । देव देव ! जगत्स्वामिन्, चन्द्रराजस्य दर्शनम् । अस्माकं तृप्तिदं शीघ्रं, जायतां कृपया तव ॥ १ ॥ सर्वलोकैर्मिलित्वाऽथ, दत्तपत्रः पुमान्वरः । तमामन्त्रयितुं दक्षः, प्रेषितो विमलापुरीम् ॥२॥ ततःप्रसन्नमुखीगुणावलीस्वचेतसिव्यचिन्तयत्—ममचेतोहरो भर्त्ता, सौराष्ट्रे संस्थितोऽधुना । प्रादर्शयत्स्वसत्त्वं, प्रेमला मे सपत्न्यपि ॥ १ ॥ यतस्तद्यत्नतो जातो—मत्पतिर्मानवो ध्रुवम् । तयैव युक्तितस्तस्य, रक्षणं विहितं सुखम् ॥ २ ॥ श्वशुरालयवासेन, पुमाँल्लाघवमाप्नुयात् । गत्वेति तं वदेत्कश्चि—दत्रागच्छेत्स सत्वरम् ॥ ३ ॥ रे ! दैव ! वारितरङ्गवन्मन्मनोरथास्तत्रैव विलीयन्ते, अहो ! दरिद्रिणामीदृश्येवस्थितिस्तथाऽपि धैर्यंसमाधेयम् । यतः--धैर्यं न त्याज्यं विधुरेऽपि काले—तथाच—दरिद्रता

धीरतया विराजते, कुरूपता शीलतया विराजत । कुभोजनं चोष्णतया विराजते, कुवस्त्रता शुभ्रतया विराजते ॥ १ ॥ पौरजनाश्चैवं विवदन्ते, पूर्वपरिणीतांस्त्रियंपुरुषा बहु मन्यन्ते, नवोढाऽपि प्रिया केषाञ्चित्प्रियतरा भवति, लोके यथा क्षीणोऽपि द्वितीयाशशी वन्द्यते तथा पूर्णकलःपूर्णिमाशशाङ्कोननम्यते, इति लोकोक्तिंसरन्ती गुणावली व्यलपत्, अहो ! स्वामिनःसुखंमया नासादितम् । प्रेमबुद्धया प्रेमलामेव स पश्यति, श्वश्रूमतिमनुसरन्त्यहं तस्य नयनपट्टिकेव संजाता, अन्यथा यत्र कुक्कुटत्वंप्राप्तं तत्र संस्थितिस्तस्मै कथंरोचते । अहन्तु तद्दर्शनाभिलापुका साश्रुनेत्रा वत्सरसमान्वासरान्निर्गमयामि, निशाऽपि वैरिणीव मे कष्टदायिनी भवति–दन्दह्यते शरीरं मे, विरहाऽनलतापितम् । संयोगेन विना तस्य, स्वामिनो नैव शान्तता ॥ १ ॥ विलपन्त्यां तथा तस्यां, कीरस्तत्र समागमत् । मनुष्यवाचा तां सोऽपि, पपृच्छ विनयाश्रितः ॥ २ ॥ मृगाक्षि ? केनासि विबाध्यमाना, दीनं मुखं त्वं वहसे कथं वा । मां विद्धि दिव्यं विहगं सुगात्रि ! निवेद्य दुःखं सुखिनी भव त्वम् ॥ ३ ॥ शुकोक्तिमाकर्ण्य चमत्कृता सा, जगाद तं पक्षिवरं प्रमोदात् । भर्त्तुर्वियोगो मम दैन्यहेतु,–र्नैतत्समं दुःखमहो ! रमाणाम् ॥ ४ ॥ पुनर्मे वाचिकं कश्चि–न्न तं प्रापयते जनः । तत्रत्यं न समेत्यत्र, तेन दुःखेन दुःखिता ॥ ५ ॥ केवल्येव विजानाति, वार्त्ता मे मनसि स्थिताम् । अधिकेन प्रवादेन, हताशायाः स्रुतं मम ॥ ६ ॥ सप्रमोदंशुकेन भणितम्–मा कुरूष्व भगिन्येतां, चिन्तामत्र मयि स्थिते । पत्रं विलिख्य मे देहि, दास्यामि स्वामिने तव ॥ ७ ॥ साश्रुनेत्राऽपि सा पत्रं, लिखित्वा तमदाच्छुकम् । गृहीतपत्रकः सोऽपि, नभोमार्गेण जग्मिवान् ॥ ८ ॥ आसाद्य विमलां कीरः, प्रणम्य चन्द्रभूपतिम् । स्वहस्तेनैव तत्पत्रं, प्रादात्स्वहृदयं यथा ॥ ९ ॥ चन्द्रोऽपि तत्समुन्मुद्य, वाचयितुं समुद्यतः । आभापुरीस्थिता भार्या, तवैतज्ज्ञापयत्यरम् ॥१०॥ वियोगार्त्तां विदित्वा मां, शीघ्रमागम्यतां

प्रभो ? । त्वद्दर्शनं विना प्राणा-नैव स्थास्यन्ति मामकाः ॥ ११ ॥ तथाच-वरमसौ दिवसो न पुनर्निशा, ननु निशैव वरं न पुनर्दिनम् । उभयमेतदुपैत्वथवा क्षयं, प्रियजनेन न यत्र समागमः ॥१२॥ अहमिह स्थितवत्यपि तावकी, त्वमपि तत्र वसन्नपि मामकः । न तनुसंगम एव सुसंगमो,-हृदयसंगम एव सुसंगमः ॥ १३ ॥ बकुलमालिकयाऽपि मया न वै, तनुरभूष्यत तेऽन्तरभीरुणा । तदधुना विधिना कृतमावयो-र्गिरिदरीनगरीशतमन्तरम् ॥ १४ ॥ दहनजा न पृथुर्दवथुर्व्यथा, विरहजैव यथा यदि नेदृशम् । दहनमाशु विशन्ति कथं स्त्रियः, प्रियमपासुमुपासितुमुद्धुराः ॥ १५ ॥ तावन्मात्रंतदीयं लेखं प्रवाच्य तदर्थस्तेन विज्ञातः । अन्यस्तु तदश्रुपातेन विलुप्ताक्षरो लेखो न वाचितस्ततोविज्ञातपत्ररहस्यश्चन्द्रराजोऽ्यचिन्तयत् ।

किं करोमि पराधीनोऽ-पृष्टेतो गम्यते कथम् । तत्राऽसहाया भार्या मे, वासरान्वाहयेत्कथम् ॥१॥ आभापुरीप्रजाः पाल्या-धर्मपत्न्याश्च रक्षणम् । विधातव्यं मया सद्यः-पूर्वोढा गेहिनी हि सा ॥ २ ॥ एवंचिन्तयतस्तस्य, विषण्णं वीक्ष्य मानसम् । प्रेमला पृच्छति स्वामिन् !, ब्रूहि निर्वेदकारणम् ॥ ३ ॥ स्वदेशः स्मर्यते किंवा, प्रथमा वल्लभा तव । सोराष्ट्रश्च नवीनोयं, वामोरुः किं न रोचते ? ॥ ४ ॥ स्वामिन् ? गुणावलीकार्यं, तदात्रैतां समाह्वय । किङ्करीभूय वर्त्तिष्ये, तदाज्ञापालिनी सदा ॥ ५ ॥ पित्रा दत्तमिदं राज्यं, पालयस्व सुखेन मे । मुखाग्रे पतितं ग्रासं, कः पुमांस्त्यक्तुमिच्छति ॥ ६ ॥ चन्द्रराजस्तांप्रत्याह-आभापुरी चकोराक्षि, ? विधवा शोभते कथम् । निर्नायकस्य देशस्य, व्यवस्था संभवेत्कुतः ॥ १ ॥ प्रत्यन्तभूमिपालाश्च, वीरमत्याऽतिपीडिताः । वैरमुत्पादयन्त्युग्रं, प्रजापीडनतत्पराः ॥ २ ॥ अवश्यं शासनीयास्ते, मया तत्र गतेन वै । पत्रमप्यागतं तेषां, तिष्ठाम्यत्र कथं प्रिये ! ॥ ३ ॥ इति भर्त्तृवचः श्रुत्वा, तद्रहस्यं विवेद सा । बुद्धिमन्तो हि जानन्ति, गूढोक्तिमपि सत्वरम्

॥ ४ ॥ ततश्चन्द्रनृपो गत्वा, मकरध्वजभूभृतम् । विनिवेद्य निजां वार्त्तां, स्वप्रयाणमयाचत ॥ ५ ॥ नृपरत्न ! नमस्तुभ्यं, महोपकृतिकारिणे । तवानृण्यं कथं गन्तुं, शक्नोमि जीवितावधि ॥ ६ ॥ अधुनाज्ञां प्रदेहि त्वं, मत्पुर्यां यामि सप्रियः । त्वत्स्नेहपाशबद्धस्य, हृदयं मेऽत्र तिष्ठति ॥ ७ ॥ क्षेमवार्त्ता कृपां कृत्वा, प्रेषितव्या ममोपरि । विस्मर्त्तव्यस्त्वया नाऽयं, जनस्त्वद्ध्यानतत्परः ॥ ८ ॥ इति विदितचन्द्राभिप्रायोमकरध्वजस्तद्विरत्नया बहूनुपायानकरोत्तथाऽपि तेन निजसङ्कल्पोन मुक्तस्तदा पुनरपि स तंप्रत्यवदत्—

राजन्ननाविष्कृतदानराजि—र्दन्ती कराभ्यां स्थगितो न तिष्ठेत् । निबद्धलोकैः कृषिकर्म नश्ये—द्विभूषणं सार्गितमल्पकालम् ॥१॥ प्राघूर्णकाः किं गृहकार्यदक्षा,—वैदेशिकप्रेम कियच्चिरं स्यात् । अतः सुखेन स्वपुरं व्रजस्व, गृहीतमन्मानसशम्बलस्त्वम् ॥२॥ रोद्धुं न शक्तोऽस्मि भवन्तमद्य, राजन्स्वकीयां कुरु कार्यसिद्धिम् । इत्युक्तवान्भूपतिरुच्चभावः, प्रयाणसंभारमचीकरत्स्राक् ॥ ३ ॥ ततश्चन्द्रराजःप्रमुदितो निजोत्तारकंगत्वा स्वसामन्तान्सद्यःसज्जयामास, इतो मकरध्वजःप्रेमलांसमाहूयप्रोक्तवान्—वत्से ! त्वं जीवितं मेऽसि, मन्ये त्वां गुणसारिणीम् । त्वद्भर्त्ताऽऽभापुरीं यातु—मुत्सुकोऽस्त्यधुना निजाम् ॥१॥ तत्र यातुं तवेच्छाऽस्ति, किंवेह स्थातु-मिच्छसि ? । ब्रूहि यद्रोचते तुभ्यं, तद्व्यवस्थां करोम्यहम् ॥२॥ लज्जांनाटयन्ती सा जगाद—तात ! त्वं किं न जानासि, सतीनां चरितं वरम् । छायेव भर्त्तृसंयोगं, सती नैव विमुञ्चति ॥ १ ॥ यतश्चोक्तम्—सतीमपि ज्ञातिकुलैकसंश्रयां, जनोऽन्यथा भर्त्तृमतीं विशङ्कते । अतः समीपे परिणेतुरिष्यते, प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥२॥ तथाच—मुदं विषादः शरदं हिमागम—स्तमो विवस्वान्सुकृतं कृतघ्नता । प्रियोपपत्तिः शुचमापदं नयः, श्रियः समृद्धा अपि हन्ति दुर्नयः ॥ ३ ॥ अन्यच्च—अर्थो नराणां

पतिरङ्गनानां, वर्षा नदीनामृतुराट् तरूणाम् । स्वधर्मचारी नृपतिः प्रजानां, गतं गतं यौवनमानयन्ति ॥ ४ ॥ पुराऽपि तेन वञ्चिताहमसह्यपीडामवाप्नुवमधुना तद्वियुक्ता क्षणमपि न स्थास्यामीति प्रेमलाया अभिप्रायंविदित्वा तज्जननी चिन्तयतिस्म—पुत्रं जातं वरं मन्ये, गृहस्थाश्रमभूषणम् । दत्तामपि सुतां मन्ये, परगेहविभूषणम् ॥ १ ॥ पुत्रीमन्तः परायत्ताः, परगेहशुभङ्कराः । पुत्रीणां शतकेनाऽपि, स्वगृहं तमसा वृतम् ॥ २ ॥ स्वगृहं भूरिवित्ताढ्यं, जनको निर्धनो भवेत् । तथाऽपि धनमिच्छन्ति, पुत्र्यो नेतुं पितुर्गृहात् ॥३॥ परिणीता सुता स्वीय—भर्त्तारं पश्यति प्रभुम् । पितृपक्षं सुधीः साऽपि, मनसाऽपि न चिन्तयेत् ॥ ४ ॥ इतिविचिन्तयन्ती राज्ञी निजभर्तृसङ्गमभिलषन्तींस्वसुतांविज्ञाय निजपतिं प्राह—स्वामिन् ! दुहितरं विद्धि, पतिपार्श्वानुसारिणीम् । यौवनं दुर्जरं मन्ये, प्रमदानां पतिं विना ॥ १ ॥ सभार्यः पार्थिवस्तस्यै, दासदासीगणं ददौ । शय्यासनादिरत्नानि, वसनाभरणानि च ॥ २ ॥ ततश्चन्द्रनृपो वाजि—रत्नमारुह्य सत्कृतः । तत्रागत्य नृपं नत्वा, प्रयाणाज्ञामयाचत ॥ ३ ॥ अथविहितशृङ्गारांप्रेमलांशिविकायामुपवेश्य सभार्योमकरध्वजःसविनयंतंजगाद—अद्ययावत्सुतेयं मे, वर्द्धिता कल्पवल्लिवत् । इदानीमर्पयित्वा त्वां, निवृत्तोऽस्मि नरेश्वर ! ॥ १ ॥ संरक्षणं त्वया चास्या—विधातव्यं क्षितीश्वर ! । प्रतिष्ठा प्रमदानां हि, स्वभर्त्तृकरसंस्थिता ॥ २ ॥ मुग्धेयं बालिका गेहा—न्न कदाऽपि बहिर्गता । अपराधो भवेत्काऽपि, क्षन्तव्योऽस्या दयालुना ॥ ३ ॥ सुताया विरहोऽसह्यः, पितॄणां शल्यवत्सदा । अशक्तोऽस्मि निरोद्धुं तां, तथाऽपि पतिसङ्गिनीम् ॥ ४ ॥ इदं राज्यं त्वदायत्तं, रक्षितव्यं सदा त्वया । वटशाखेव विस्तारं, प्रयातु त्वन्मनोरथः ॥ ५ ॥ दर्शनं सत्वरं देयं पुनरागत्य भूमिप ! । सोढव्या मेऽपराधाश्च, गुणिनो हि दयालवः ॥ ६ ॥ ततः प्रेमलांसमालिङ्गय तन्माता प्राह—पुत्रि !

श्वशुरगृहं गत्वा सदाचारेण निजपितुःप्रतिष्ठां वर्द्धयस्व, यतः—

पतिर्हि देवो नारीणां, पतिर्बन्धुः पतिर्गतिः। पतिस्तीर्थं पतिः पूज्यः, पतिः सर्वस्वमिष्यते ॥ १ ॥ अन्यच्च—भक्तिः प्रेयसि संश्रितेषु करुणा श्वश्रूषु नम्रं शिरः, प्रीतिर्यातृषु गौरवं गुरुजने क्षान्तिः कृतागस्यपि। अम्लाना कुलयोषितां व्रतविधिः सोऽयं विधेयः पुन-र्मद्भर्तुर्दयिता इति प्रियसखीबुद्धिः सपत्नीष्वपि ॥ १ ॥ अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता, तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम्। सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति, प्राच्यैः पुत्रि! निवेदितः कुलवधूसिद्धान्तधर्मागमः ॥ २ ॥ शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने, भर्तुर्विप्रकृताऽपि रोषणतया मास्म प्रतीपं गमः। भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी, यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ३ ॥ निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु भक्ता भव, स्निग्धा बन्धुषु वत्सला परिजने सेरा सपत्नीष्वपि। भर्त्तुर्मित्रजने सनम्रवचना खिन्ना च तद्वैरिषु, प्रायः संवननं नतभ्रु! तदिदं वीतौषधं भर्त्तृषु ॥ ४ ॥ स्नानाम्भो बहु साधिता रसवती देवादिकार्योचितः, संभारो रचितो विशुद्धवसने कालोचिते योजिते। स्नानं नाथ! विधीयतामतिथयः सीदन्ति नान्या त्वरा, धन्यं बोधयते शनैरितिपतिं मध्याह्नकाले सती ॥ ५ ॥ सञ्चारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतं, चेतः कान्तसमीहितावधि महामानोऽपि मौनावधि। हास्यं चाधरपल्लवावधि पदन्न्यासावधि प्रेक्षितं, सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम् ॥ ६ ॥ शुश्रूषामनुरुन्धती गुरुजने वाक्येन नो दुःस्थिता, दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि। सन्नद्धाऽतिथिसत्कृतौ गृहभरे नैस्तन्ध्यमाबिभ्रती, वत्से! किंबहुना भजस्व कुशलं भर्त्तुः प्रिये जाग्रती ॥ ७ ॥ इत्युपदिश्य तज्जननी वियोगा-

श्रुधाराभिस्तां स्नपयामास, प्रेमलाऽपि तद्वियोगेनातीवदुःखिता जज्ञे, सम्भूय समागतास्तत्सहचर्योऽपि रुद्धकण्ठास्तांस्निग्धवचनैः सान्त्वयामासुः। दिविस्थिता देवाअपि प्रमुदिता भूयस्तांविलोकयामासुः॥

इति श्रीचन्द्रराजचरित्रे चतुर्थोल्लासे पञ्चमः सर्गः॥ ५॥

ततःप्रेमदृष्ट्या सर्वान्संभाव्य प्रेमलालक्ष्मीःप्रयाणाज्ञांजग्राह, अथमकरध्वजमहिषी चन्द्रराजस्यभालंतिलकेन विभूषयामास, श्रीफलञ्चतत्करयोः प्रायच्छत्, ततश्चन्द्रराजसमादिष्टाःसैनिकाःप्रयाणंचक्रुः। दुन्दुभिध्वानैर्दिशोगर्जयन्मकरध्वजेनाऽनुसृतश्चन्द्रराजोराजपथमवतीर्णः–मौक्तिकैर्वर्द्धयामासुः, पौरलोका इतस्ततः। गायन्तिस्म मदीरात्य–आशीर्वादपरायणाः॥ १॥ आनन्दपूर्वकं यान्तः, सर्वे सिद्धाचलान्तिके। तलहट्टिकांसंप्राप्य, स्तुतिं चक्रुर्जिनेशितुः॥ २॥ तनोतु शं यस्यमुखाग्रतो नट–त्सुरेन्द्रनेत्रप्रतिबिम्बलाञ्छिता। सभा बभौ रत्नमयी महोत्पलैः, कृतोपहारेव स वोऽग्रजो जिनः॥ ३॥ स पातु यस्य स्फटिकोपलप्रभे, प्रभावितानं विनिमग्नमूर्त्तिभिः। विदिद्युते दुग्धपयोधिमध्यगै–रिवामरैर्वः शशिलाञ्छनो जिनः॥४॥ अनन्तविज्ञानमनन्तवीर्यता–मनन्तशर्म्मत्वमनन्तदर्शनम्। बिभर्त्ति योऽनन्तचतुष्टयं विभुः, स नोऽस्तु शान्तिर्भवदुःखशान्तये॥ ५॥ जराजरत्याः सरणीयमीश्वरं, स्वयंवरीभूतमनश्वरश्रियः। निरामयं वीतभयं भवच्छिदं, नमामि वीरं नृसुरासुरैः स्तुतम्॥ ६॥ नमस्कारसमो मन्त्रः, शत्रुञ्जयसमो गिरिः। गजेन्द्रपदजं नीरं, निर्द्वंद्वं भुवनत्रये॥ ७॥ कृत्वा पापसहस्राणि, हत्वा जन्तुशतानि च। इदं तीर्थं समासाद्य, तिर्यञ्चोऽपि दिवं गताः॥ ८॥ स्पृष्ट्वा शत्रुञ्जयं तीर्थं, नत्वा रैवतकाऽचलम्। स्नात्वा गजपदं कुण्डे, पुनर्जन्म न विद्यते॥ ९॥ यो दृष्टो दुरितं हन्ति, प्रणतो दुर्गतिद्वयम्। संघेशार्हन्त्यपदकृत्, स जीया-

द्विमलाचलः ॥ १० ॥ वच्मः किमस्य चोच्चैस्त्वं, येन पूर्वजिनेशितुः । अधिरुह्यात्र लोकाग्रं, पौत्रैरपि करे कृतम् ॥ ११ ॥ शत्रुञ्जयाद्रिरयमादियुगे गरीया–नासीदसीमसुकृतोदयराशिरेव । आदीयमानसुकृतः किल भव्यलोकैः, काले कलौ भजति सम्प्रति दुर्बलत्वम् ॥ १२ ॥ शत्रुञ्जये जिने दृष्टे, दुर्गतिद्वितयंक्षिपेत् । सागराणां सहस्रञ्च, पूजास्नात्रविधानतः ॥ १३ ॥ मिथ्यात्वगरलोद्गारः, सम्यग्दृष्टिसुधारसः । पूर्वो ह्रस्वः परो दीर्घो–नाभिनन्दनवन्दने ॥ १४ ॥ वपुः पवित्रीकुरु तीर्थयात्रया, चित्तं पवित्रीकुरु धर्मवाञ्छया । वित्तं पवित्रीकुरु दानपात्रतः, कुलं पवित्रीकुरु सच्चरित्रतः ॥ १५ ॥

इतिस्तुतिपाठपूर्वकंतीर्थाभिवन्दनंविधाय सर्वे क्षणंध्याननिमग्ना बभूवुः । ततश्चन्द्रराजोमकरध्वजप्रमुखान्निवर्त्य सपरिकर आभापुरीमुद्दिश्य प्रयाणमकरोत् । सपरिवारः शिवकुमारोऽपि तमन्वचलत्, प्रत्यहंस नूतनाभिर्नाट्यकलाभिस्तंरञ्जयतिस्म, निरन्तरंप्रयाणंकुर्वन्स विविधदेशान्वीक्षमाणः प्रत्यनीकान्नरेन्द्रान्नम्रीकुर्वन्स्वसैनिकान्वर्द्धयन्ननेकराजसुताः परिणयंश्चक्रमेण पोतनपुरपत्तनमगात् । तत्परिसरे च ससैन्यःस तस्थिवान् । जनमुखाच्चन्द्रराजंसमागतंनिशम्य प्रमुदितोलीलाधरःश्रेष्ठिसूनुःसपरिवारस्तत्रागतः, विहितप्रणामश्चन्द्रराजंप्रत्याह–राजंस्त्वद्दर्शनान्मन्ये, सफलं जन्म मामकम् । पुरा कुक्कुटरूपस्त्वं, हेतुर्देशान्तरस्य मे ॥ १ ॥ ततस्तदनुरागिणी लीलावती कौक्कुटंस्नेहंसरन्ती निजपतेर्निदेशमधिगम्य चन्द्रराजंस्वगृहे भोजनार्थंन्यमन्त्रयत् । सुधास्वादुंरसवतींसम्पाद्य विनीतया तया तद्भक्तिर्विहिता, सोऽपि स्वसृसमांमन्यमानोऽलङ्कारादिभिस्तांसम्भावयामास, ततोगृहीताज्ञःस निजशिबिरे समागतस्तदासूर्योऽप्यस्तमितः । नैशिकमावश्यकंसमाप्य भूपतिःशयनतूलिकामसेवत । इतोऽमरेन्द्रोदेवसभामास्थितः प्रोवाच—जम्बूद्वीपगतं भरत–क्षेत्रमस्ति मनोहरम् । तत्राभानगरी वर्या, शास्ति चन्द्रनरेश्वरः ॥१॥ तद्दिसात्रा

वीरमत्या, कुकुटः स विनिर्मितः । सिद्धाचलं गतस्तत्र, सूर्यकुण्डे निमज्जितः ॥२॥ तत्प्रभावेण मानुष्यं, प्राप्तवान् शीलसंयुतः । अधुना पोतनपुरे, तिष्ठत्येष नरेश्वरः ॥३॥ शीलात्तं भ्रंशितुं भूपं–देवो विद्याधरोऽथवा । नैव शक्तोऽस्ति लोकेऽस्मिन्, धर्मशक्तिर्गरीयसी ॥४॥ इति शक्रवचः श्रुत्वा, कश्चिच्छ्रद्धापराङ्मुखः । तत्परीक्षाकृते देवः, सद्यस्तत्र समाययौ ॥५॥ विद्याधरीस्वरूपं स–विकुर्व्य सुमनोहरम् । निशीथे वाटिकावासे–रुरोद करुणस्वरम् ॥ ६ ॥ क्षीणनिद्रश्चन्द्रराजोरुदनस्वरंश्रुत्वा व्यचिन्तयत्–अहो ? अर्द्धरात्रसमये दीनमुखी काचिदबला रोदिति, तत्कारणन्तु मया विज्ञातव्यमिति ध्यात्वा परोपकृतिकुशलःस खड्गसहायःसद्यस्तच्छब्दानुसारी तामेव वाटिकामगात् । निजतेजसा वृक्षघटांद्योतयन्तीं मीनध्वजदीपमालामिवभासमानांदीव्यालङ्कारभूषितांतांविद्याधरींविलोक्य विस्मितमानसःस तांप्रत्यवदत् । सुन्दराङ्गि ! निशीथिन्यां, केन दुःखेन रोदिषि । कथमेकाकिनी चात्र, संस्थिता त्वं वदाऽसि का ? ॥१॥ मा बिभेहि मदीराक्षि !, मत्तः शङ्कस्व मा भयम् । त्वद्दुःखं नाशयिष्यामि, ब्रूहि निःशङ्कमानसा ॥ २ ॥ इतिप्रगल्भंपुरुषाधिराजस्य वचोनिशम्यस्वांगोपयन्ती सा सविस्मयमाह ।

राजन्नवेहि मां विद्या–धर वंशसमुद्भवाम् । दुःखार्णवनिमग्नाऽस्मि, कियद्दुःखं वदाम्यहम् ॥ १ ॥ क्रूरभावो मम स्वामी, रुष्टो मुक्त्वाऽत्र मां गतः । दीनां काऽपि न तच्छुद्धिं, जानामि पार्थिवोत्तम ! ॥ २ ॥ अनाथाऽहं क गच्छामि, काऽन्नलाया गतिर्मम । अतो रोदिमि भूजाने ? योषितां हि बलं कियत् ॥ ३ ॥ यतः–दुर्बलस्य बलं राजा, बालानां रोदनं बलम् । बलं मूर्खस्य मौनत्वं, तस्करस्यानृतं बलम् ॥ ४ ॥ अतोमे रक्षणंकुरु, रुदन्तींमांत्यक्तुंनार्हसि, त्वामेव पतित्वेनाहंवृताऽस्मि, दुःखार्णवान्मांसमुद्धृत्य विजयी भव, क्षत्रियर्षभ ? मत्प्रार्थनामङ्गीकुरु, क्षत्रियाःशरणागतवत्सलाःश्रूयन्ते, परोपकारप्रवणांपुत्रंकाचिदेव

जननी जनयति, त्वदाकृतिरेव परोपकारित्वंसूचयति, तद्यथा—आकृतिर्गुणसमृद्धिशंसिनी, वाक्क्रमः कथितशास्त्रसंक्रमः। नम्रता कुलविशुद्धिसूचिका, संयमश्च भवतो वयोधिकः ॥ १॥ तदाकर्ण्य चन्द्रराजःप्राह— भद्रे ! नैतादृशंवचनंकुलोद्भवानांवक्तुमुचितम् । क्षत्रियाःपरस्त्रीलम्पटा न भवन्ति, यतः—व्याघ्रव्यालजलाऽनलादिविपदस्तेषां व्रजन्ति क्षयं, कल्याणानि समुल्लसन्ति विबुधाः सान्निध्यमध्यासते । कीर्त्तिः स्फूर्त्तिमियर्त्ति यात्युपचयं धर्मः प्रणश्यत्यघं, स्वर्निर्वाणसुखानि संनिदधते ये शीलमाबिभ्रते ।।१॥ वन्हिस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा—न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते । व्यालो माल्यगणायते विषरसः पीयूषवर्षायते, यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ २ ॥ तथाच—हरति कुलकलङ्कं लुम्पते पापपङ्कं, सुकृतमुपचिनोति श्लाघ्यतामातनोति । नमयति सुरवर्गं हन्ति दुर्गोपसर्गं, रचयति शुचि शीलं स्वर्गमोक्षौ सलीलम् ॥ ३ ॥अतोविज्ञाततत्त्वाःपरस्त्रीसङ्गंदूरतःपरिहरन्ति, यतः—स्वाधीनेऽपि कलत्रे, नीचः परदारलम्पटो भवति। सम्पूर्णेऽपि तडागे, काकः कुम्भोदकं पिबति ॥ १ ॥ अन्यच्च—वरं शृङ्गोत्तुङ्गा—द्गुरुशिखरिणः क्वाऽपि विषमे, पतित्वाऽयं कायः, कठिनदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः, फणिपतिमुखे तीक्ष्णदशने, वरं वन्हौ पात—स्तदपि न कृतः शीलविलयः ॥२॥ तथाच—यः परवादे मूकः, परनारीवक्त्रवीक्षणेऽप्यन्धः । पङ्गुः परधनहरणे, स जयति लोके महापुरुषः ॥ ३ ॥ सुभगे ! या वनिता परपुरुषंसमीहते सा विविधांयातनांलभते, अतिमधुरमपि परोच्छिष्टंमिष्टान्नमुत्तमजना नैव भुञ्जते तत्तु वायसाःस्वादन्ते, अतस्त्वमघटितवार्त्तांजहीहि, तवेच्छा चेत्त्वांत्वत्पतिसमीपंनयामि, कुलाङ्गनानांपतिसेवैव श्रेयस्करी—सुभगे ! येऽकुलीनास्त एव परस्त्रियंस्पृहयन्ति, कदाचिदपि कुलीना नैवमाचरन्ति, एवंनृपोक्तंवचनंनिशम्य प्रचण्डरोषा विद्याधरी तं भणति—

मत्प्रार्थनां परिहरन्, न त्वं चत्रकुलोद्भवः । स्त्रीहत्यापातकं दास्ये, नो गृहीष्यसि मां यदि ॥ १ ॥ यदि चत्रकुले जातः, परकार्यरतो यदि । तदा दीनतराया मे, प्रार्थनां स्वीकुरु प्रभो ! ॥ २ ॥ चन्द्रराजोवदति–सुभगे ! स्त्रीहत्यापातकादपि शील-भङ्गपापंविशेषतरंनिगद्यते–यतः–दत्तस्तेन जगत्यकीर्त्तिपटहो गोत्रे मषीकूर्चक–श्चारित्रस्य जलाञ्जलिर्गुणगणाऽऽरामस्य दावा-नलः । सङ्केतः सकलापदां शिवपुरद्वारे कपाटो दृढः, शीलं येन निजं विलुप्तमखिलंत्रैलोक्यचिन्तामणिः ॥ १ ॥ सुमते ! पुनस्त्वंशृणु–पुरा सीतां समीहानो–रावणः कां दशां गतः । पद्मोत्तरनृपो हृत्वा, द्रौपदीं दुःखितोऽभवत् ॥ १ ॥ अहल्यायाः सङ्गमादिन्द्र–स्तद्भर्तुः शापमीयिवान् । सहस्रभगतां प्राप्तः, शीलखण्डनतश्च वै ॥ २ ॥ हिमालयसुतामिच्छन्, वीरभस्मा-ङ्गदोऽसुरः । पापकर्मरतः सद्यो–भस्मीभूतोऽभवत्खलु ॥ ३ ॥ आयुष्मति ? परदारसङ्गरतःकःसुखी जातः ? योह्यखण्डितंशी-लव्रतंपालयति स ऐहिकंसुखमनुभूय पारमार्थिकंसुखंलभते, प्रमदाजनस्तु भवार्णववर्त्तिनामश्मगणायते, किंवा शृङ्खलायते, परप्रमदांलोहपुत्तलिकामिवसमालिङ्ग्य कियन्तःपुरुषा भवार्णवे निमज्जिता अद्याऽपि ते तस्मादुन्मज्जितुमप्रभवः ।

किञ्च–ललिताङ्गकुमारोऽपि, परस्त्रीसङ्गमोत्सुकः । असह्यदुःखमापन्नः, कामग्रहानिपीडितः ॥ १ ॥ शोभनाङ्गि ! नाहंकाम-सुभटेन पराजितः, यतोभवाटव्यांपरिभ्रमन्नसह्यदुःखभाजनंभवामि, मानिनि ! स्त्रीहत्याभयेनशीलव्रतंनखण्डयिष्यामि । योहि भवनिवृत्तिमाकांक्षमाणः, परिणीतामपि भार्यामुपेक्षते तस्य मोक्षसुखंसुलभंभवति, कामाग्निज्वलितोनरोभवान्तरेष्वपि दुःखराशि-मनुभवति, किंबहुना–त्वामहं धर्मभगिनीं, वेद्मि वा धर्ममातरम् । तस्मात्ते सत्कुलीनाया–वक्तुमेतन्न साम्प्रतम् ॥ एवंशीलव्रते दृढमतिंतंनरेशंविज्ञाय स देवस्तुष्टमानसःसद्यःखेचरीरूपंविहाय निजरूपंप्रकटीचकार, सत्यसङ्गरस्य चन्द्रराजस्य मूर्ध्नि पुष्प-

वृष्टिंविधाय देवःप्राह–त्वन्मातापितरौ भूरि–भाग्यवन्तौ धरातले। नन्दनस्त्वादृशो याभ्यां, लब्धोऽस्ति गुणसेवधिः ॥१॥ शीलरत्नधरोऽसि त्वं, यथा शक्रेण संस्तुतः। देवोऽस्मि राजशार्दूल ? त्वत्परीक्षार्थमागतः ॥२॥ प्रणिपत्य निगद्यैवं, विबुधोन्तरधीयत। चन्द्रराजस्ततः सद्यः, प्रेमलासन्निधौ गतः ॥३॥ ग्राहीताज्ञस्ततो मार्गे, जितसर्वारिमण्डलः। कन्याः सप्तशतीं राज्ञा–मुपयेमे स सन्मतः ॥४॥ क्रमेणाभापुरीं निकषा, विजयी स समागतः। तद्वृत्तान्तं समाकर्ण्य, जहर्षुः पुरवासिनः ॥५॥ गुणावली गतप्राणान्, लब्ध्वेव मुदिताऽभवत्। सुमतिः सचिवः स्वामि-दर्शनान्मुदितो भृशम् ॥६॥ नागराः सज्जिताः सर्वे, महोत्सवपुरःसरम्। नृपं प्रवेशयामासुः, पुरं सत्तोरणध्वजाम् ॥७॥ दृष्टिक्षेपेण राजेन्दुः, सर्वान्संमानयन् जनान्। राजमार्गमभीयाय, सर्वलोकनमस्कृतः ॥८॥ माङ्गलिकाः सदाचारा–विलोकयन्ते प्रतिस्थलम्। लब्धप्राणा इवाभूवन्, पौराः प्रेमाङ्कुराञ्चिताः ॥ ९ ॥ निषादिनो रथारूढाः, सादिनश्च पदातयः। अस्खलितोत्सवाः सर्वे, चलन्तिस्म तदग्रतः ॥ १० ॥ रथारूढा महिष्यस्ताः, समोदाः पुरतोऽगमन्। अनेकानि सुवाद्यानि, गर्जयन्ति दिगन्तरम् ॥ ११ ॥ अर्थिनस्तोषयंश्चन्द्रो–ऽनल्पदानेन जग्मिवान्। वर्द्धयन्तिस्म पौराणां, योषितो रत्नमौक्तिकैः ॥१२॥ नववध्वः प्रमोदिन्यो–मङ्गलानि पदे पदे। गायन्तिस्म वयोवृद्धा–आशीःपिच चक्रिरे ॥ क्रमेण राजप्रासादमभ्येत्य गजरत्नादुत्तीर्य सचिवेन दत्तकरःपार्थिवः पौरान्संभावयन्सचिवप्रमुखानपि स्वस्थानंगन्तुमनुमेने, सभार्यश्चन्द्रराजोऽपि स्वनिकेतनंप्रविवेश, गुणावली स्वपतिंप्रणम्य कृतकृत्याऽजनि। ततस्तन्महिषीवृन्दं, प्रणिपत्य गुणावलीम्। परस्परं मिलित्वाऽथ, बभूव मुदितं भृशम् ॥ १ ॥ यतः—गुणोज्ज्वलं योग्यपतिं प्रपद्य, प्रमोदकंदच्छुतेव रूद्रम्। शीलार्थिनी का कमनीयरूपं, न वै वृणीयाज्जलजोत्तमाक्षी ॥ २ ॥ ततस्ताभ्यः पृथक्पृथग्निवासान्वितीर्य स्वयंभूपतिगुणा-

वलीप्रासादंगतः । अनन्यमोदा सा नूतनांरसवतींनिष्पाद्य स्वभर्त्तारंभोजयित्वा भृशंतुष्टा तंमोदयामास, तथैव—अभिन्नवृत्तयः सर्वा-महिष्यो नृपतेर्वराः । क्रीडमाना न जानन्ति, सपत्नित्त्वं मिथोगताः ॥ १ ॥ तेन पट्टपदं दत्तं, पार्थिवेन दयालुना । गुणावल्यै समीच्यैत-न्मुदिता योषितोऽपराः ॥ २ ॥ सुखेन पालयन्राज्यं, चन्द्रराजनरेश्वरः । नीतिमार्गविदां मान्यो-जनानां वल्लभोऽभवत् ॥ ३ ॥ अथैकदा रहोगतंचन्द्रराजंसकौतुकंगुणावली प्रत्यवदत्—षोडशाब्दी मया नीता, विरहव्यथया प्रभो ? । त्वद्दर्शननिदानन्तु, जानामि प्रेमलां ध्रुवम् ॥ १ ॥ वीरमत्या समं नाह-मत्रजिष्यं विशांपते ! । विमलां प्रेमलां तर्हि, पर्यणेष्यत् कथं भवान् ॥ २ ॥ अतोऽहमुपकारकारिणी तव जाताऽस्मि, ईषद्विहस्य चन्द्रराजोभणति-शशिवदने ! इतोऽप्यधिकामुपकृतिंकिंन स्मरसि—इयन्तं समयं याव-त्पक्षित्वं प्राप्तवानहम् । तामप्युपकृतिं मन्ये, त्वदीयामेव शोभने !॥ १ ॥ गुणावली पुनः सस्मितमाह—यदि त्वं कुक्कुटो नाऽभू-स्तदा त्वद्गमनं कुतः । विमलाद्रौ महातीर्थे, सुखावाप्तिश्च दुर्लभा ॥ १ ॥ मद्दोषान्माविलोकस्व, गुणग्राही भव स्वयम् । महात्मनामयं पन्था-विश्रुतः प्राणवल्लभ ! ॥ २ ॥ यतः—मनसि वचकाये पुण्यपीयूषपूर्णा-स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं, निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ३ ॥ किञ्च—मन्दमत्या मया दुष्ट-श्वश्रूशिक्षणमादृतम् । तत्फलं विपुलं लब्धं, कृतकर्मानुसारतः ॥ ४ ॥ शास्त्रेऽपि स्त्रीबुद्धिःक्षुद्रभावा निगद्यते—यतः—आत्मबुद्धिर्हितायैव, गुरुबुद्धिर्विशेषतः । परबुद्धिर्विनाशाय, स्त्रीबुद्धिः प्रलयान्तिका ॥ १ ॥ स्वामिन् ? प्रमदाःसर्वदाऽविश्वसनीयाः—अनुचितकर्मारम्भः, स्वजनविरोधो बलीयसा स्पर्धा । प्रमदाजनविश्वासो-मृत्युद्वाराणि चत्वारि ॥ १ ॥ तथाच—अबला यत्र प्रबला, शिशुरवनीशो निरक्षरो मन्त्री । नहि नहि तत्र धना-

शा, । जीवितआशाऽपि दुर्लभा भवति ॥ २ ॥ प्रियपते ! त्वद्विरहाग्निव्यथिता नेत्रपुटयोरश्रुधारांवहमानाऽतीव कृच्छ्रेण दिनान्यत्यवाहयम् । विशेषतोदैवंप्रार्थयामि, भवान्तरेऽपि तादृशी श्वश्रूर्मे मा मिलतु । यस्याःसङ्गवशादहंविपुलांवेदनामन्वभूवम् । यांस्मर्त्तुमपि मे हृदयंन प्रभवति, जगत्प्रभुकृपयैव साम्प्रतंमानवरेखामाश्रिताऽस्मि, स्वामिन्निदंवृत्तान्तंभवद्रञ्जनाय मया नाऽभिहितम् । अथ सस्नेहंनृपतिःप्राह—पुरैव ज्ञातमेतद्धि, त्वदुक्तं सकलं मया । त्वामेव जीवनं मन्ये, प्रिये ! सर्वसुखप्रदाम् ॥ १ ॥ त्यक्त्वाऽहं विमलांसद्य-स्ततोह्यत्र समागतः । मकरध्वजभूपेन, वारितेऽपि वरानने ! ॥२॥ अधुना गृहभारोऽयं, सर्वदा त्वयि तिष्ठति । निश्चिन्तोऽहमिदानीं त्व-त्प्रदत्तं भोक्तुमुत्सुकः ॥ ३ ॥ आनन्दञ्च करिष्यामि, धर्मबुद्धिरहर्निशम् । इत्थं पतिवचः श्रुत्वा, मुदिताऽभूद्गुणावली ॥ ४ ॥ प्रतिदिनमभिनवगोष्ठीभिस्तयोर्वासराःक्षणप्रायाव्यतीयुः । अन्यदा राजसभामधिष्ठाय चन्द्रराजःसकलसामन्तसेवितः पौरान्समाहूय मूलतःस्ववृत्तान्तंज्ञापयामास.

इतिश्री चन्द्रराजचरित्रे चतुर्थोल्लासे षष्ठःसर्गः ॥ ६ ॥



अथविज्ञातनृपवृत्तान्ता विस्मितचेतसःसर्वे तंप्रशंसमाना दिव्यसुखानुभवंमेनिरे । प्रत्यहंच नवनवं नैपुण्यं दर्शयन्त्योराजपत्न्योगीतप्रहेलिकागाथादोधकच्छन्दःप्रमुखैःकाव्यैस्तंनरेन्द्रंतोषयामासुः । उदितसुकृतश्रेणिश्चन्द्रराजस्ताभिःसहानेकान्सुखभोगान्सेवमानोऽखण्डराज्यंपालयामास, शिवकुमारप्रमुखानांनटानामुपकारं संस्मरंस्तेषामभिनवोपचारैरुचितसत्कारंव्यधात् । सम्पदंलब्ध्वाऽपि सत्पुरुषा उपकृतंन विस्मरन्ति, यतः—उपकर्त्तुं प्रियं वक्तुं, कर्त्तुं स्नेहमकृत्रिमम् । सज्जनानां स्वभावोऽयं, केनेन्दुः शिशिरीकृतः ॥ १ ॥ तथाच—उपकारिषु यः साधुः, साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः, स साधुः सद्भि-

रुच्यते ॥ २ ॥ योह्युपकृतंविस्मरति सत्वदृष्टव्यमुखःस्मृतः । यतश्चोक्तम्—उपकारिणि विश्वस्ते, साधुजने यः समाचरति पापम् । तं जनमसत्यसन्धं, भगवति वसुधे ! कथं वहसि ॥ १ ॥ दुर्जना विद्यमानानप्यन्यगुणान्न पश्यन्ति, साधवस्तु दासत्वमङ्गीकुर्वन्ति, चन्द्रराजेन पुराऽपि प्रभुतंद्रव्यंनटेभ्यःप्रदत्तं, पुनरपि ग्रामादिकंकियद्वस्तु वितीर्य तानप्रीणयत् । दिगन्तकीर्त्तिश्चन्द्र राजोलब्धविजयोभूयसींप्रसिद्धिमवाप, गुणावलीप्रेमलालक्ष्म्यौ क्षणमपि वियोगं न सहेते तद्यथा—रथाङ्गनाम्नोरिव नेत्रयोर्यथा, यथा च भारण्डवपुर्द्वयस्य । यथा सुशिष्यस्य गुरोर्बभूव, तयोस्तथा भावनिबन्धनं दृढम् ॥ १ ॥ नृपोऽपि तयोःसमान दृष्टिरभूत् । तद्दृष्टिरूपतक्रसंयोगेन तयोः प्रेमगोरसः पिच्छिलत्वमियाय । एवंतयोःसुखविलासेन कियत्सु व्यतीतेषु वासरेषु क्रमेण कश्चिद्देवोदिवश्च्युत्वा गुणावल्याःकुक्षौ शुभस्वप्नसूचितपुत्रत्वेनावतीर्णः । पूर्णेषु गर्भमासेषु, गुणखानिर्गुणावली । स्वामिनाऽवेक्षिता नित्यं, पुत्ररत्नमजीजनत् ॥ १ ॥ आनन्दितमनाः काचि-दन्तःपुरनिवासिनी । प्रणम्य नृपतिं दासीं, पुत्रजन्म न्यवेदयत् ॥ २ ॥ दारिद्र्यनाशकं तस्यै, धनं दत्वा नराधिपः । भूरिद्रव्यव्ययाच्चक्रे, पुत्रजन्ममहोत्सवम् ॥ ३ ॥ प्रशस्तलक्षणंपुत्रं, दृष्ट्वा तुष्टो नरेश्वरः । वृद्धानामनुरोधेन, षष्ठीजागरणं व्यधात् ॥ ४ ॥ द्वादशेऽन्हि ततस्तेन, नाम चक्रे यथागुणम् । गुणशेखर इत्याख्यं, जन्मनक्षत्रसंगतम् ॥ ५ ॥ कल्पवृक्ष इवाऽजस्रं, पितृभ्यां पालितोऽर्भकः । दिने दिने परां वृद्धिं, पुपोष पितृवेश्मनि ॥ ६ ॥ ततः श्रीप्रेमलालक्ष्मीः सुषुवे पुत्रमुत्तमम् । मणिशेखरनामानं, तं व्यधत्त नरेश्वरः ॥ ७ ॥ सहैव क्रीडमानौ तौ, पितुर्मोदमनुत्तमम् । वर्द्धयामासतुर्नित्यं, संसारसुखभोगिनः ॥ ८ ॥ चन्द्रराजः सुतौ योग्यौ, निजोत्सङ्गे निधाय वै । क्रीडयन्बाललीलाभिः, प्रमोदं जग्मिवान्परम् ॥ ९ ॥ मानसाख्यसरस्तीरे, विलसन्तौ सितच्छदौ । उभौ सुताविवाजस्रं, शुशुभाते

सदोगतौ ॥ १० ॥ कुमारभावं कलयन्तौ तौ यत्र यत्र व्रजत स्तेषामलङ्कारभूतौ बभूवतुः, तद्यथा—नरागुणाढया मणयोऽपि हंसाः, श्रयन्ति याँस्तानिहभूपयन्ति, हानिस्तु तेषां खलु यान्विहाय, व्रजन्ति तेऽन्यत्र पवित्रभासः ॥ १ ॥ क्रमेण प्राप्तवयस्कौ तौ गजाश्वारूढौ स्वेच्छया परिभ्राम्यतः। पौरलोका अपि मनोरमंतदाननंविलोकमानाः प्रहर्षं जग्मुः। तथाच—प्रणतः सर्वभूपालै-रखण्डाज्ञो महीतले। सिद्धाचलप्रभावं स, दध्यौ चन्द्रनरेश्वरः ॥ १ ॥ अभ्रंलिहाननेकांश्च, निजकीर्त्तिचयानिव। जिनालयान्सुधाशुभ्रान्, कारयामास सर्वतः ॥ २ ॥ अनेकजिनबिम्बानि, कारयित्वा यथाविधि। प्रतिष्ठितमुनीन्द्रैश्च, प्रतिष्ठां कारयत्यसौ ॥ ३ ॥ सदा धर्मरतो राजा, धर्ममार्गं प्रवर्त्तयन्। शासनोन्नतिमत्तोभ-श्चकार सर्वदा स्वयम् ॥ ४ ॥

इतो भावनाभावितान्तःकरणा दिवौकसः सनिर्जरनाथाः कम्पितासना अवधिज्ञानेन दत्तोपयोगाः श्रीमुनिसुव्रतजिनेन्द्रस्य समवसरणसमयंविज्ञाय तत्र समाजग्मुः, समागत्य च देवाःसविनयंसुत्रामानमित्यभापन्त, अमरेन्द्र! वयं भवदाज्ञानुजीविनःस्मः, यद्यस्मानाज्ञापयसि, तर्हि त्रिभुवनेन्द्रस्य श्रीमुनिसुव्रतस्वामिनः समवसरणं रचयामः, शक्रेण तथेति प्रतिपन्नं, तद्यथा—योजनमात्रप्रमितक्षेत्रे तृणकाष्ठादिरजःपुञ्जंक्षणान्मार्जनीजीविन इव वायुकुमारका निवर्त्तयामासुः। ततोमेघकुमारकामरा भक्तिभरभुग्नमूर्द्धानः सद्योऽभ्राणि विकुर्व्य पानीयमहिपानिव गन्धवारिभिस्तांभूमिंसिषिचुः। ततोऽपरे दिवौकसःस्वर्णरत्नोपलैरादर्शतलवद्विपमोन्नतंधरणीतलंसमानंबबन्धुः। ततो व्यन्तराऽमराः शक्रधनुः खण्डोत्करविडम्बिनीं पञ्चवर्णां जानुप्रमाणां सुमनोवृष्टिंचक्रुः व्यन्तरदेवाश्च तत्र यमस्वसृकल्लोलश्रीहराँस्तोरणानार्द्रैरनोकहपल्लवैश्चतसृष्वपि काष्ठासु बबन्धुः। तदभ्रमितशोभाविलोकनार्थसमागताः साक्षाद्देववनिता इव विविधाः शालभञ्जिकास्तोरणस्तम्भेषु चकासिरे। यत्र चञ्चलस्तोरणोपरि

संस्थितोध्वजव्रातः श्रीमुनिसुव्रतजिनान्तिके भव्यलोकानाकारयन्निव रेजे । तोरणानामधोभागे भूमिपीठेषु तेषु निर्जरा अष्टमङ्गलानि रचयामासुः । तत्रोर्व्यानिबद्धे पीठे वैमानिकसुरा रत्नाकरश्रीसर्वस्वमिव रत्नमयं प्रथमं वप्रंव्यधुः । तैरेव तत्र मानुषोत्तरगिरिसीम्नि चन्द्रचण्डांशुश्रेणिरिव नानावर्णमाणिक्यरत्ननिकरैः कपिशीर्षपरम्परा विदधे । ततोज्योतिष्पतयोवलयीकृत्य हेमगिरिशृङ्गमेकममलमिव मध्यमंप्राकारंसुवर्णमयं चक्रुः । तत्र त एव सप्रमोदाः सुचिरंप्रेक्षकप्रतिबिम्बितैःसचित्राणि वररत्नमयानि कपिशीर्षकाणि विदधुः । अथभवनपतयः कुण्डलीभूतशेषाहिभोगभ्रमविधायिनं राजतंवप्रमधस्तनंचक्रुः । तत्रोपरि ते क्षीरोदतीरनीरस्थसुपर्णश्रेणिविभ्रमांकाञ्चनीं कपिशीर्षकपरम्परांचक्रिरे । पृथिव्याः पट्टवलयाकृतिर्वप्रत्रयी व्यराजत, प्राकाराग्रावली नानाविधविच्छित्तिसंगता व्यभासत । तस्यां वप्रत्रय्यांनीलाश्मदलनिर्मितास्तोरणाः सर्वतोविरेजिरे ।

वप्रस्य स्वर्णस्या–न्तरे च संचक्रिरे प्रतिच्छन्दम् । ईशानदिग्विभागे, विश्रामाय प्रभोर्महारत्नैः ॥ १ ॥ प्रतिवप्रं चत्वारि, चकासिरे गोपुराणि चत्वारि । धर्मस्य चतुर्धेव, क्रीडावातयनानि रम्याणि ॥ २ ॥ नीलमणिस्तंभायित–धूमलता राजिता महाघट्यः । व्यन्तरदेवैर्विहिता–धूपानां रेजिरे प्रतिद्वारम् ॥ ३ ॥ तैश्चक्रिरे चतस्रः, सौवर्णकजैर्विराजिता वाप्यः । विस्फुर्जितगृहिधर्म–व्रतश्रियां क्रीडनायेव ॥ ४ ॥ मणिवप्रस्य द्वारे, पूर्वस्मिन् स्थापितौ प्रतीहारौ । सुवर्णवर्णशरीरौ, विकसद्धर्मानुरागिभिर्देवैः ॥ ५ ॥ याम्यद्वारि सिताङ्गौ, द्वौ द्वाःस्थौ निर्मितौ च तैरेव । यतिगृहिणोर्धर्माविव, मूर्त्तिधरौ व्यन्तराभिधौ देवौ ॥ ६ ॥ ज्योतिष्कौ रक्ताङ्गौ, पश्चिमगे द्वारि संस्थितौ हृष्टौ । चित्तोद्भूतेन तीर्थ–ङ्कररागेणेव विपुलेन ॥ ७ ॥ दिश्युत्तरस्यां भवनेश्वरौ द्वौ, द्वारे विशालेऽसितमूर्त्तिमन्तौ । संस्थापितौ देववरैः स्वभक्त्या, समागतावुन्नतवारिदाविव ॥ ८ ॥ अथ

द्वितीयवप्रस्य पूर्वस्मिन्द्वारे शस्ताभयहस्ता चन्द्राश्मद्युतिर्जया देवी तस्थौ, दक्षिणद्वारे पाशधारिणी पद्ममणिसंकाशमूर्त्तिर्विजया देवी विराजतेस्म, पश्चिमे द्वारे साङ्कुशकरा कार्त्तस्वरनिभाऽजिता देवी तस्थौ, उत्तरस्मिन्द्वारे मुद्गरपाणिरपराजिता देवी नील- कान्तिर्विरेजे । अन्तिमे वप्रे प्रतिद्वारं द्वाःस्थः खट्वाङ्गधरोमुण्डमाली जटामुकुटमण्डितस्तुम्बुरुस्तस्थिवान् । समवसरणस्य मध्यभागे चत्वारिंशदधिकशतद्वयधनुरुन्नतोऽशोकपादपोव्यन्तरामरैर्विहितो रत्नत्रयोदयं समादिशन्निव विराजते। तस्याधस्तले विविधैरत्नैस्तेऽमरा मनोरमंपीठंव्यधुः, तस्योपर्यप्रतिच्छन्दमणिमयंछन्दकं च चक्रिरे, तन्मध्ये पूर्वदिग्भागे सपादपीठं रत्नसिंहासनं स्वर्गश्रियांसारमिव विदधिरे । ततस्तस्योपरि तैः स्वामिनस्त्रिजगद्भर्त्तृत्वसूचकं चिन्हत्रयमिवोच्चकैर्विशुद्धंछत्रत्रयं- विचक्रे, तद्यथा—छत्रत्रयं राजति रत्ननिर्मितं, त्रिलोकनाथस्य शशाङ्कसन्निभम् । लोकत्रयस्वामिमहर्द्धिसूचकं, विनिर्ममे मूर्ध्नि विमानवासिभिः ॥ १ ॥ ततोयक्षावुभौ प्रभोः पार्श्वभागस्थितौ चामरौ वीजयतः । लसद्विसच्छेदसमानकान्ती, पार्श्वद्वये चञ्चलचामरावुभौ । विरेजतुस्तीर्थपतेरमान्तौ, भक्तेर्भरौ चेतसि यक्षयोरिव ॥ १ ॥

ततः समवसरणद्वारे सुवर्णपद्मस्थितमत्यद्भुतप्रभाविलासंधर्मचक्रं विकुर्वन्तिस्म दिवौकसः । अन्यदपि यत्कार्यंतदखिलं व्यन्तरामरा विचक्रिरे, साधारणे हि समवसरणे तेऽधिकारिणः । अथ चतुर्विधानां दिवौकसां कोटीभिः समन्वितः सपरि- वारो भगवान्मुनिसुव्रतजिनेशः प्रभातसमये तत्र समवसर्तुं प्रचक्रमे, तदानीं जगत्त्रयस्वामिनोऽग्रेसौवर्णानिसहस्रदलपङ्कजानि नवानिप्रमुदितमानसा निर्जराविकुर्व्य क्रमेणानिदधुः, तेषुच स्वामी द्वयोर्द्वयोः क्रमन्यासं विदधे, शेषाणि कमलानि प्रभोःपुरः सञ्चारयामासुरञ्जसा नाकिनः । जगत्पतिः पूर्वद्वारेण समवसरणं प्रविवेश, ततश्चैत्यवृक्षं त्रिः प्रदक्षिणयामास,

(नमस्तीर्थायेति) प्रजल्पँस्तीर्थं नमस्कृत्य प्राङ्मुखः स्वामी जगन्मोहतमश्छिदे पूर्वशैलमुष्णदीधितिरिव पञ्चाननविष्टरंभेजे। अन्यास्वपि दिक्षु तत्त्वणं सिंहासनस्थानि भगवतः प्रतिबिम्बानि त्रीणि चक्रिरे व्यन्तराः। प्रभोरङ्गुष्ठस्यापि सदृचंरूपंविनिर्मातुंनाकिनोनक्षमास्तथाऽपि स्वामिप्रभावात्तादृशानि तानि रचयितुंशक्तिमन्तोबभूवुः, विभोःपृष्ठभागे प्रवररत्नविभूपितं भासुरंभामण्डलं प्रादुर्बभूव, यस्याग्रे दिवाकरमण्डलं खद्योतशिशुवद्विभाति। तदानींजीमूत इव गम्भीरनादः प्रतिध्वानैश्चतस्रोऽपि ककुभोभृशंमुखरयन्दिवि दीव्यदुन्दुभिर्जगर्ज। लोकत्रयस्य प्रभुरयमेवैकः स्वामीतिधर्मेणोर्द्धीकृतोभुज इव स्वामिनोऽग्रे विशुद्धरत्नमयोध्वजोविरराज। अथ आदिमे वप्रे पूर्वद्वारेण प्रविश्य त्रिःप्रदक्षिणीकृत्य तीर्थञ्च प्रणम्य साधुसाध्वीनाञ्च स्थानं विहाय तदनन्तरेऽग्निकोणे वैमानिकस्त्रिय ऊर्द्धास्तस्थुः, भवनपतिज्योतिष्कव्यन्तरनार्यो दक्षिणद्वारेण प्रविश्य तेनैव विधिना नैर्ऋते कोणे क्रमेणाऽस्थुः। भुवनपतिज्योतिष्कव्यन्तराः सुराः पश्चिमद्वारेण प्रविश्य प्रागुक्तविधिना मरुद्दिशि तस्थुः। कल्पवासिनो देवा नरा नार्यश्चोदीच्यद्वारेण प्रविश्य तेनैव विधिना क्रमादैशान्यां दिश्यवतस्थिरे। तत्र प्रथममागतं महर्द्धिकंदेवमल्पर्द्धिकोदेवोनमन्नेव जगाम, पश्चादागच्छन्तमपि तंच नमतिस्म। स्वामिप्रभावतो भी–र्बाधा दुर्वादता च मात्सर्यम्। तत्रास्ति नैव भेदो–नियन्त्रणाऽहङ्कृतिर्विरुद्धानाम् ॥१॥ अथ द्वितीयस्य वप्रस्यान्तरे कण्ठीरवगजादयस्तिर्यञ्चोवैरिणोऽपि मिथःप्रेमलालसाः स्थितिमादधुः। तृतीयस्य वप्रस्य मध्ये सुराऽसुराणांक्ष्माभृताञ्च विमानवाहनानि यथाक्रमंतस्थुः, तस्य च बहिःप्रदेशे गमनागमनंकुर्वन्तःकेऽपि तिर्यग्नराऽमरा दृश्यन्ते। नृदेवतिर्यक्कोट्यः, संमान्त्यस्मिन्प्रभोः प्रभावो हि। योजनमात्रे क्षेत्रे, यदनाबाधं स केवलं ज्ञेयः ॥१॥ अथ ललाटतटनिघटिताञ्जलिः सौधर्मकल्पेन्द्रोनमस्कृत्य रोमाञ्चितगात्रस्त्रिजगत्पतिमिति स्तोतुमुपचक्रमे,

तद्यथा-क्व मे मतिर्दीनविचारभावा, स्वामिन् ? क्व तेऽगाधगुणाम्बुराशिः। तथाऽपि सद्भक्तिभरस्त्वदीयः, स्तोतुं मुदा मां मुखरीकरोति ॥१॥ विराजसे त्वं भुवि शुद्धदर्शन-ज्ञानातिवीर्यैरमितप्रभावैः। अनन्तकैर्लोकहितङ्कराग्रणी-रेकः समानारिसुहृत्स्वभावः ॥२॥ देवेह लोके चिरनष्टरूप-धर्मस्य बीजं त्वमसि प्रधानतः। ज्ञानप्रद ? क्षेमविधानदक्ष ! भूमीरुहस्येव भवाब्धितारक ! ॥३॥ अनुत्तराणां द्युसदामिहस्थो-जानासि सन्देहमनन्तधीस्त्वम्। छिनत्सि विज्ञानकृपाणतस्तं, न विद्यते त्वन्महिमाऽवधित्वम् ॥४॥ त्वद्भक्तिलेशस्य फलं निवासः, स्वर्गस्थितौ स्वर्गिगणस्य मोक्षद ! । महर्द्धिसौन्दर्यजुषः समन्ता-द्भवत्प्रभावो हि सुखाय केवलम् ॥५॥ त्वद्भक्तिविश्लेषितमानसानां, प्रभो ! गरीयांसि तपांसि जाने। क्लेशाय शास्त्राभ्यसनं नराणां, निर्बुद्धिकानामिव केवलं विभो ! ॥६॥ यस्त्वां स्तवीति क्षुभितस्वभावः, प्रद्वेष्टि यश्चाऽपि तयोः समानताम्। बिभर्षि लोकाधिप ! किन्तु चित्रं, शुभाऽशुभं यत्फलमस्ति भिन्नम् ॥ ७ ॥ स्वर्गश्रिया नास्ति ममैव तोषो-नाथाम्यदो नाथ ! ततोऽतिहृष्टः। त्वदेकभक्तिर्मम भूयसीस्ता-न्निरन्तरा शाश्वतशर्मदिष्टा ॥८॥ इत्थंदेवाधिदेवमभिष्टुत्य प्रणम्य च निर्जरनाथोनरनारीनरेन्द्रद्युसदामग्रे विहिताञ्जलिर्निषसाद। अथाऽन्ये केचन देवा अपि प्रभुंनत्वा गायन्ति, केऽपि प्रभोरग्रे नृत्यन्ति, केऽपि त्रिपदींस्फोटयन्ति, तथैव केचित्संस्तवंकुर्वन्ति, केचन निर्जरा जिनेन्द्रपादपद्मोपर्यमन्दमकरन्दबिन्दुसंवलितं नानावर्णपयोजसमूहं मुञ्चन्ति, केऽपि चेलाञ्चलैः प्रभुंवीजयन्ति, केऽपि भक्त्या प्रभोःपुरस्तादूर्ध्वीकृतभुजदण्डाश्चण्डताण्डवाडम्बरं वितन्वन्ति, सङ्गीतकरणपटीयस्यो रम्भाप्रमुखा विलासिन्यः प्रमुदितहृदयाः प्रकटितभावाभिनयंनृत्यन्ति। अत्रान्तरे श्रीकलितमुकुटमणिकिरणकपिशितदशाशाःसर्वे सुराऽसुरेन्द्रास्त्रिः प्रदक्षिणापूर्वकं प्रभुंनत्वा निजनिजसमुचितस्थानेषु निषण्णाः। ततः सहस्रनयनेन भुजमूर्द्धीकृत्य सहसा सुरजनकोलाहलोनिवा-

रितः । प्रभुरपि दशनमालामयूखवारिणा क्षालितयेव विमलयैकयाऽप्यनेकजनसन्देहहारिण्या सुरनरतिर्यग्जनसाधारणया वारिवाहगर्जारवगभीरया संसारदुःखसंतप्तसत्त्वसन्तापहारिण्या योजनमात्रप्रतिफलनक्षमया मधुरया वाचा धर्मकथयितुंप्रारभत ।

इतो द्वारपालनिवेदितोवनपालकःसमागत्यबद्धाञ्जलिरास्थानस्थितं चन्द्रराजमहीपतिंव्यजिज्ञपत् । कुसुमाकरउद्याने, स्वामिन्? भवरोगहारकः । मुनिसुव्रतस्वाम्यद्य, शान्तमूर्त्तिः समागतः ॥ १ ॥ निशम्य तत्सुधास्रावं, वचनं स नरेश्वरः । धनरत्नप्रदानेन, वनपालमतोषयत् ॥ २ ॥ ततश्चतुर्विधां सेनां, सज्जयित्वाऽतिहर्षितः । प्रभुं नन्तुं जगामाशु, परिवारसमन्वितः ॥ ३ ॥ देवैर्विरचितं प्रौढं, वप्रत्रयविराजितम् । दृष्ट्वा समवसरणं, नृपतिर्मुदितोऽभवत् ॥ ४ ॥ गत्वाऽन्तिके वाहनानि, विहाय क्रमतश्चरन् । लक्ष्यीकृत्य जगामैत–त्पञ्चाभिगमपूर्वकम् ॥ ५ ॥ अथदूरतःसहजवैरिणोऽपिप्राणिनोमिथःशान्तस्वभावान्भगवतः पर्षदि मैत्रीभावेन संस्थितान्विलोक्य चेतसिचमत्कृतिंदधानश्चन्द्रराजः स्वप्रियांप्रतिप्राह, हेकमलाक्षि ? इतो विलोकय, भगवतःपर्षदि नानाविधावस्कन्दसंग्रामैर्निहतग्रामनगरनिवासा नरेन्द्राः सुहृद्भावंदधानाःस्थिताः, प्रिये ? जगद्भर्त्तुः पर्षदि समागतोऽयंद्विरदोगण्डस्थलस्थलीं निजकरेण केसरिकरमाकृष्य मुहुःकण्डूयते, इतश्च महिषोऽयंमुहुर्मुहुः स्नेहतोरसनया हेषमाणमिमंहयवरं महिषमिवप्रमार्ष्टि, इतोऽयंमृगो लीलालोलितलाङ्गुल ऊर्ध्वकर्णो नमितवदनो घ्राणेन सिंहाननं जिघ्रति, प्रिये ? पश्य, पार्श्वयोरग्रतःपश्चाच्च ललन्तंमूषकं निजशिशुवदयंतरुणमार्जारः समालिङ्गति, निर्भयोऽयंसरीसृपोनिजाभोगंकुण्डलीकृत्य महानकुलस्य सन्निधौ वयस्यभावमापन्नोनिषण्णोऽस्ति, हे प्रिये ? ये केचिदन्येऽपि जीवाःशाश्वतवैरिणस्तेऽत्र निर्वैराः स्थिताः सन्ति, प्रभोरेवायमसमप्रभावः, इति जगत्प्रभोर्मुनिसुव्रतस्वामिनोमहिमानंस्तुवन्भूपतिः—

मोक्षालयप्ररोहाय, निःश्रेणीमिव शोभनाम्। सोपानश्रेणिमारुह्य, ददर्श मुनिपुङ्गवम् ॥१॥ ततः सपरिवारः स, कृतवन्दनसद्विधिः। प्रदक्षिणात्रयं कृत्वा, परमानन्दभागभूत् ॥ २ ॥ द्वादशधा परिषदः, स्वस्वस्थानस्थिताः खलु। परमात्ममुखाम्भोज–ध्यानासक्तैकचेतसः ॥ ३ ॥ अध्यात्मपटसत्तुरीं, भववल्लीकुठारिकाम्। सद्देशनां समारब्धां, प्रभुणा शुश्रुवुर्मुदा ॥ ४ ॥ तद्यथा–मिथ्यात्वप्रमुखैः सप्त–पञ्चाशद्बन्धहेतुभिः। जीवः कर्माणि बध्नाति, भवार्णवनिमज्जितः ॥५॥ मूलप्रकृतयस्तेषां, ज्ञानावरणीयादयः। अष्टौ सन्ति विरोधिन्यो–मोक्षमार्गस्य देहिनः। ॥६॥ उत्तराश्च स्मृता अष्ट–पञ्चाशदधिकं शतम्। अनादिकर्मवश्योऽयं, विस्मृत्यात्मस्वरूपकम् ॥ ७ ॥ विभावनादशायां हि, रमतेऽशुद्धवृत्तिकः। कर्मराजबलं तस्माद्, भूयिष्ठं वर्त्तते भवे ॥८॥ असंख्यातप्रदेशाश्च, संति जीवस्य विश्रुताः। तेषामष्टप्रदेशेषु, कर्माणि प्रभवन्ति नो ॥९॥ अत एवास्य जीवस्य, स्वरूपं नैव लुप्यते। यदि कर्मावृतास्ते स्यु–र्जीवोऽजीवत्वमाप्नुयात् ॥१०॥ अनादिकालतो जीवो–दृढकर्मभिरावृतः। स्वज्ञानादिगुणाद्भ्रष्टो–जायते मूढधीर्ध्रुवम् ॥११॥ मिथ्यात्ववासितोऽशुद्ध–पद्धतौ पतितो निजम्। अनात्मवस्तु मन्वानो–भ्राम्यति क्षुभितो भवे ॥१२॥ मदच्युत्करिणः स्कन्धे, द्विरेफालीव मूढधीः। पौद्गलिकपदार्थेषु, न जहाति भवाटवीम् ॥१३॥ मूलस्थानञ्च जीवानां, निगोदं सूक्ष्ममुच्यते। तच्चाऽव्यवहारराशि–रिति लोके प्रचक्ष्यते ॥ १४ ॥ केशाग्रप्रमिताकाशे, तत्रासंख्यातगोलकाः। असंख्याता निगोदस्थाः, पुद्गलाः प्रतिगोलकम् ॥ १५ ॥ प्रत्येकतच्छरीरेषु, ह्यनन्ता जीवराशयः। सूक्ष्मत्वात्तत्स्वरूपञ्च, जानन्ति विबुधोत्तमाः ॥ १६ ॥ अनादिकालतो जीवाः, सन्ति सूक्ष्मनिगोदगाः। तेषां भाग्यबलेनैव, जीवानां भावियोगतः ॥ १७ ॥ कश्चिद्व्यवहारराशिं, भजते बादराभिधम्। ततो विनिर्गतो जीवो–जायते विकलेन्द्रिये ॥ १८ । तस्मान्निर्गत्य तज्जीव–स्तिर्य-

क्पश्चेन्द्रियात्मके । उत्पद्यते क्रमेणैष—लभते मानवीं गतिम् ॥ १९ ॥ लब्धेऽपि मानुष्यभवेऽशुभानां, संयोगतोऽलब्धशुभोपचारः । प्रयाति जीवः पुनरेव मूढः, श्वभ्रादिकां दुर्गतिमल्पपुण्यः ॥ २० ॥ दुरन्तविपदामासां निदानन्तु विषयकषाया एव निगद्यन्ते, तदासक्ता जीवा विवेकविकलाः कृत्याकृत्यंनविदन्ति, अतएव ते स्वहितंन साधयन्ति ममत्त्वाभिमानिनः

विषयोपगतं जीवं, ममत्त्वगणिका पटुः । वशीकृत्य यथाकामं, नर्त्तयत्यशुभान्वितम् ॥१॥ ममत्त्वधीः सर्वविनाशहेतु—र्ममत्त्वमूलो भवसंभ्रमश्च । नैवं पराधीनविमुग्धजीवो—जानाति दुर्दैवविलुप्तभावः ॥ २ ॥ विस्मृतस्वस्वरूपः स,—सेवते बाह्यसम्पदम् । अज्ञातशुद्धदेवादि—स्वरूपस्तत्पराङ्मुखः ॥ ३ ॥ कुदेवादिरतः सत्यं, देवादिं न स मन्यते । अज्ञानतिमिरान्धो हि, सत्यासत्यं न पश्यति ॥ ४ ॥ पुनरपि तैजसकार्मण—शरीरनौकां समाश्रयञ्जीवः । भववारिनिधौ विषमे, भ्रमयति तां भ्रान्तचेतसा नित्यम् ॥ ५ ॥ एवं परिभ्रमन्ती सा, भवाब्धौ क्षुभिताऽप्यलम् । अर्हन्मततटं नैव, लभते मोक्षदायकम् ॥ ६ ॥ एवं परिभ्रमन्भूयः, शुभावाप्तिर्भवेद्यदा । तदा जीवः स्वहितकृ—त्सम्यक्त्वं लभते चिरात् ॥ ७ ॥ क्रमेण देशविरतिं, भजते व्रतकर्मणि । प्रत्याख्याने च तस्याशु, जायते रुचिरा रुचिः ॥ ८ ॥ पुरार्जितानि कर्माणि, विशीर्यन्ते शनैःशनैः ॥ पालयन्तस्ततः श्राद्ध—व्रतानि द्वादशार्हताः ॥ ९ ॥ लभन्ते सर्वविरतिं, केचित्पुण्यानुसारिणः । ततश्चारित्रमादाय, पालयन्तोऽप्रमादिनः ॥ १० ॥ पञ्च[1] प्राणान्समाराध्य, पूरकादिविधानतः । क्रमेणाष्टाङ्ग[2]योगं ते, साधयन्ति प्रभाविनः ॥ ११ ॥ तारादृष्टि

१ हृदि प्राणो गुदेऽपानः, समानो नाभिमण्डले । उदानः कण्ठदेशस्थो—व्यानः सर्वशरीरगः ॥ १ ॥

२ यम १ नियमाऽऽ २ सन, ३ प्राणायाम, ४ प्रत्याहार, ५ धारणा, ६ ध्यान, ७ समाधयोऽ ८ ष्टावङ्गानि ।

समारभ्य, लक्ष्यबिन्दुश्च साध्यते । कृताऽमृताऽनुष्ठानास्ते, चिदानन्दस्वरूपिणः ॥ १२ ॥ स्वस्वरूपं ततः प्राप्या-ऽनन्तकालसमावृतम् । लभन्ते केवलज्ञानं, त एव तत्त्ववेदिनः ॥ १३ ॥ अनिर्लेश्यास्ततः प्रान्ते, कृत्वा योगनिरोधताम् । एरण्डबीजवत्त्यक्त्वा, देहं यान्ति परां गतिम् ॥ १४ ॥ साद्यनन्तास्थितिं लब्ध्वा, जीवो नावर्त्तते पुनः । यत्र संसारमूलानां, कर्मणां सर्वदालयः ॥ १५ ॥ तस्माद्भोभव्याः ! व्याबाधविकलमक्षयसुखंसमीहमाना अहिंसामूलंसद्धर्ममाराधयत । यतः-

पठितं श्रुतञ्च शास्त्रं, गुरुपरिचरणं गुरुतपश्चरणम् । घनगर्जितमिव विपुलं, विफलं सकलं दयाविकलम् ॥ १ ॥ अतो-दयाहीनैर्धर्मोन साध्यते । यतः-अहिंसासंभवो धर्मः, स हिंसातः कथं भवेत् । न तोयजानि पद्मानि, जायन्ते जातवेदसः ॥१॥ तस्माद्दयामूलंसर्वज्ञप्रणीतंधर्ममनाराध्य प्राणिनःशिवसुखंनैव प्राप्नुवन्ति, यतः-अपूर्वसुखमिच्छन्तो-भव्याः ! भावसमन्विताः । सर्वज्ञकथितं धर्मं, निषेवध्वं यथाविधि ॥ १ ॥ शान्तं सुधारसं पीत्वा, तत्त्वदृष्टिर्विधीयताम् । यत्यतां कर्ममोक्षाय-भीष्टसिद्धिर्यतो भवेत् ॥ २ ॥ करस्थकङ्कणं दृष्टु-मादर्श इव निष्फलम् । अन्यद्दृष्टान्तमत्रार्थे, मत्तोऽनुभविनोबुधाः ! ॥ ३ ॥

एवंश्रीमुनिसुव्रतस्वामिनःसुधामयींदेशनांसमाकर्ण्य चन्द्रराजप्रमुखाःसर्वे सभ्या उल्लसितचेतसोबभूवुः । वैराग्यवासितान्तःकरणाः केऽपि यथोचितव्रतनियमजिघृक्षवोजातास्तदानींचन्द्रराजोरचिताञ्जलिःसमुत्थाय प्रभुंप्रणिपत्य पृच्छति--कर्मणाकेनमन्माता, कुक्कुटं मां विनिर्ममे । नटैः सार्द्धं ममावासः, कथं जातो जगत्प्रभो ? ॥ १ ॥ प्रेमलासन्निधौ केन, कर्मणान्यवसं सुखम् । सिद्धाद्रिसंगतोहं द्राक्, कथं मानवतां गतः ॥ २ ॥ हिंसकेन कथं छद्म, विहितं कनकध्वजः । कर्मणा केन कुष्ठित्वं, प्राप्तवान्परमेश्वर ? ॥३॥ गुणावल्याः पुनर्योगो,-ऽभवन्मे केन कर्मणा । प्रभो ? मत्संशयान्सर्वान् , छिन्धि ज्ञानाऽसिना द्रुतम् ॥४॥

सर्वान्भावान्भवान्वेद, भवाब्धौ पोतसन्निभः। किञ्चिन्नासीत्तवाज्ञातं, त्रैलोक्यं कलितं त्वया ॥ ५ ॥ इतिचन्द्रराजस्यविज्ञप्तिं निशम्य जगत्प्रभुस्तत्पूर्वभवस्वरूपंवक्तुंप्रारभत. जम्बूद्वीपेऽस्ति भरत–क्षेत्रमक्षीणसम्पदम्। विदर्भनामादेशोऽस्ति, तत्र धान्यादिसंभृतः ॥ १ ॥ तिलकीभूततिलका–पुरी तत्र मनोहरा। मदनभ्रमनामा तां, प्रशास्ति विजयी नृपः ॥ २ ॥ तस्य भार्याऽस्ति कमल–माला विद्युत्समप्रभा। तत्पुत्री कल्पवल्लीव, नाम्ना तिलकमञ्जरी ॥ ३ ॥ सा मिथ्यामतिराबाल्या–त्क्च्याऽभव्यविमूढधीः। जैनधर्मं सदा द्वेष्टि, दुरन्तेन स्वकर्मणा ॥४॥ तेन जैनधर्मस्य नैवहानिः किन्तु स्वयमेवदुरन्तदुःखभाजनं भवति, तथाच–न मक्षिका चन्दनपादपप्रिया, न तत्प्रभावः क्षयमेति तेन वै। तथैव जैनं मतमाद्विपज्जनो–विहन्यते मोहमदादिवैरिभिः ॥ १ ॥ मद्येन सिञ्चिता राजन्, विषवल्लीव कन्यका। पितृभ्यां पाल्यमाना सा, वर्द्धते प्रतिवासरम् ॥ २ ॥ कस्तूरिकागन्ध इवातितीव्रो–रसोनके तन्मनसि प्रकृष्टः। श्रीजैनधर्मः शिवसिद्धिदाता, न प्रादुरासीद्विपरीतभावे ॥ ३ ॥ अथ तस्य नरेन्द्रस्य, सुबुद्धिः सचिवाग्रणीः। रूपलावण्यसंपन्ना, रूपमत्यस्ति तत्सुता ॥ ४ ॥ मातुः स्तन्यं पिबन्ती सा, जैनतत्त्वरसं परम्। आस्वादयत्स्वबुद्ध्याऽपि, सुकृतं हि सदा फलेत् ॥ ५ ॥ सुधारसेन संसिक्ता, कल्पवल्लीव साऽनिशम्। पितुः प्रयत्नतो वृद्धिं, प्रयाति प्रतिवासरम् ॥ ६ ॥ साध्वीसङ्गेन सा बाला, शास्त्राभ्यासरताऽभवत्। विज्ञातनवतत्त्वार्था, जिनपूजादिकं व्यधात् ॥७॥ साधुसाध्वीगणेभ्यश्च, प्रत्यहं भक्तिसंयुता। दत्त्वा निर्दोषमाहारं, स्वयं भुङ्क्ते सुखेन सा ॥ ८ ॥

अथैवंवर्त्तमानयोस्तिलकमञ्जरीरूपमत्योः पूर्वभवसम्बन्धेन दृढतरा प्रीतिर्जाता, क्षणमप्युभे वियोगंन सहेते, अन्यदाऽभिन्नतांमन्वाने ते रहसि चिन्तयतः। आवयोरीदृशोऽप्रतिमः स्नेहोभिन्नपतिंवरिष्यावस्तर्हि कथंस्थास्यति! तस्मादावाभ्यामेक एव

पतिर्वरणीय इतिनिश्चयस्ताभ्यांविहितः । मिथ्यात्वधर्मरतांतिलकमञ्जरीमजानन्त्या रूपमत्याऽयंस्नेहोविहितः, ततस्तद्वृत्तान्तंतया शनैःशनैर्विज्ञातम् । परन्त्वतिदक्षा सा तद्वृत्तान्तंस्नेहभङ्गभयान्न प्रादुश्चकार, सचिवस्य गृहे तु साध्व्यः प्रतिदिनमाहारादिकं-समानेतुं समायान्ति, गुरुभक्तिमती रूपमती वन्दित्वा सविनयंताभ्योभक्तपानंवितीर्य कतिचित्पदानि तत्पृष्ठतोगत्वा पश्चात्स-मायाति, अथैकदा तद्गृहगता तथाविधांतद्भक्तिं विलोक्य जातरोषा तिलकमञ्जरी सचिवसुतांनिजान्तिके स्थापयित्वाऽवदत् ।

इमा आर्या महाधृष्टा–मलीनवसनासनाः । बकध्यानं प्रकुर्वन्त्यो–वञ्चयन्तीतराङ्गनान् ॥ १ ॥ आसामदर्शनं श्रेष्ठं, संगतिः श्रेयसी न वै । धूर्त्तानां धर्महीनानां, प्रवेशोऽप्यशुभङ्करः ॥ २ ॥ चूर्णेन मन्त्रितेनैता–वञ्चयन्ति भवादृशीः । मृषा-वार्त्तारता लोके, क्लेशमुत्पादयन्ति च ॥ ३ ॥ लुण्टितं नगरञ्चैतत्, वञ्चिताः काश्चनस्त्रियः । वशीकुर्वन्ति लोकांस्ताः, सातप्रश्नपुरःसराः ॥ ४ ॥ मूषकानां शतं हत्वा, मार्जारी पट्टसंस्थिता । तद्वदार्या इमा जाता–गार्हस्थ्यक्रपणाशयाः ॥ ५ ॥ मिष्टभोज्यमभीप्सन्त्य–स्त्वामध्यापयितुं सदा । आगच्छन्ति निजख्यातिं, काङ्क्षन्त्यो धर्मदम्भतः ॥ ६ ॥ कुलीनानामनर्होऽ-स्ति, तत्सङ्गोऽपि घृणात्मकः । मिलन्ति ताश्चतस्त्रश्चेत्, कुर्वन्त्युद्वासितं जगत् ॥ ७ ॥ गृहीतपात्रकास्ताश्च, पर्यटन्त्यो गृहे गृहे । यथेच्छं भोजनं लब्ध्वा, तृप्तिमामन्वते स्वतः ॥ ८ ॥ वन्दसे तत्पदाम्भोजं, पूज्यभावेन बालिके ! । त्वामपि तर्जयिष्यन्ति, नचेद्दत्सेऽन्नपानकम् ॥ ९ ॥ अतस्तासां संसर्गं निषेधयामि, मुण्डितशिरसः सर्वथाऽविश्वसनीयाः । तस्मादेवाहमपि तेभ्यो दूरतस्तिष्ठामि ॥

इतिश्री चन्द्राजचरित्रे चतुर्थोल्लासे सप्तमः सर्गः ॥ ७ ॥

इत्थंतिलकमञ्जर्या वचनं श्रुत्वा रूपमती सविस्मयंप्राह—भगिनि! त्वमिदं ब्रूपे, सहसा कल्पितं वचः। महाव्रतजुषां तासां, न जानासि गुणान्स्वयम् ॥१॥ विजित्य लोभमोहांस्ताः, संवेगसरसस्तटे। राजहंस्य इवाजस्रं, रमन्ते शुद्धवृत्तयः ॥२॥ तासामुपकृतिं भूरिं, विस्मर्त्तुं प्रभवामि नो। ममोपकारकारिण्य–स्ता एव प्रतिवासरम् ॥ ३ ॥ यदि तद्दूषणं व्यर्थं, पश्यामि नरकाय मे। जायते त्वन्तु तत्पापं, प्रक्षालयसि निन्दके! ॥४॥ ताभिस्तत्त्वोपदेशेन, उद्धृताऽस्मि भवार्णवात्। सर्वकन्याणमिच्छन्त्यः, स्वस्तिमत्यो भवन्तु ताः ॥ ५ ॥ जन्मान्तरगता काङ्क्षे, तासां सेवामनुत्तमाम्। स्मरणीयगुणा एता, वन्दनीयाः पदे पदे ॥ ६ ॥ किञ्चशीलव्रतजुषां साध्वीनामुभयत्रानर्थदायिनी गर्हा कदाचिदपि न विधेया, यतः–शीलगुणः सर्वोत्तमोनिर्दिष्टः शास्त्रेषु। तथाच—शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं, शीलं ह्यप्रतिपाति वित्तमनघं शीलं सुगत्यावहम्। शीलं दुर्गतिनाशनं सुविपुलं शीलं यशः पावनं, शीलं निर्वृतिहेतुरेव परमः शीलं तु कल्पद्रुमः ॥ १ ॥

शीलवतीनांसाध्वीनांनिन्दाविधायिनांनिजसुकृततरुर्विलीयते। एवंमन्त्रिसुतोक्तिमाकर्ण्य नृपसुता मौनमाधाय स्वस्थानंगता, द्वितीयस्मिन्दिने तथैव तिलकमञ्जरी रूपमतींमिलितुं समागता, तदानींसा मौक्तिकहारमग्रथ्नात्। उभे सख्यौ प्रमोदगोष्ठींकर्त्तुं लग्ने, तावन्मध्याह्नसमयोजातः, भिक्षार्थिन्येका साध्वी मन्त्रिगृहमभियाता, तांविलोक्य परिहृतवार्त्तालापा रूपमती प्रमोदमावहन्ती ससंभ्रमं मोदकादिकेन तामलाभयत, पुनः साऽपवरके गत्वा घृतमानीय सविनयंमहताग्रहेण तांग्रायच्छत्। साध्व्याऽपि तस्यै प्रतिलाभोदत्तः, रूपमती विहिताञ्जलिर्भावनांभावयति—सम्पत्तौ नियमः शक्तौ, सहनं यौवने व्रतम्। दारिद्र्ये दानमत्यल्प–मतिलाभा[illegible] जायते ॥ १ ॥ निर्भोग्यो विभवान् वप्तुं, सप्तक्षेत्र्यां न युज्यते। यत्र पत्रादयोऽप्युप्ताः, फलं यच्छ-

न्ति वाञ्छितम् ॥ २ ॥ सारं तदेव सारं, नियोज्यते यज्जिनेन्द्रभवनादौ । अपरं पुनरपरधनं, पृथ्वीमलखण्डपिण्डं वा ॥ ३ ॥ किञ्च—अतिथिर्यस्य भग्नाशो–गृहात्प्रतिनिवर्त्तते । स तस्मै दुष्कृतं दत्त्वा, पुण्यमादाय गच्छति ॥ ४ ॥ जीवति स जीवलोके, यस्य गृहाद्यान्ति नार्थिनो विमुखाः । मृतकवदन्यजनोऽसौ, दिनानि पूरयति कालस्य ॥ ५ ॥ तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना । अतिथिं तं विजानीया–च्छेषमभ्यागतं विदुः ॥ ६ ॥ किंच—यद्वस्तु तथाविधे सत्पात्रे वितीर्यते तदेव सफलम् । यतः—चारित्रं चिनुते धिनोति विनयं ज्ञानं नयत्युन्नतिं, पुष्णाति प्रशमं तपः प्रबलयत्युल्लासयत्यागमम् । पुण्यं कन्दलयत्यघं विदलति स्वर्गं ददाति क्रमा–न्निर्वाणश्रियमातनोति निहितं पात्रे पवित्रं धनम् ॥ १ ॥ इत्यज्ञातस्वरूपोयोमूढ ईदृक्साधुसाध्वीनांगुणानुपेक्षते तज्जन्म वृथैवेति स्वयं सा मन्यते । तदानींश्रमणायामसूयांवहमाना सा नृपकुमारी तदीयस्थालस्थितंताटङ्केनाऽप्यलक्षिता साध्व्या उत्तरीयेऽबध्नात् । भक्तिवासितमना रूपमती तु द्वारंयावत् साध्वीमनुव्रज्य विहितनतिः पश्चात्समागता । ततः सा ताटङ्कशून्यंमौक्तिकस्थालंपश्यन्ती जगाद–राजसुते! भवत्या मम कर्णभूषणंगृहीतमतस्तच्छीघ्रंमेसमर्पय, किमेवंमामुपहससि? तेनैव तवार्थश्चेदिदंद्वितीयमपि सुखेन गृहाण, यतः—न मे त्वत्तोऽधिकं किञ्चित्, सत्यं पार्थिवनन्दने! । कायेन मनसा वाचा, वाञ्छन्त्यास्तव सङ्गतिम् ॥ १ ॥ नृपनन्दिनी प्राह—उपहासरता नाहं, विषादोत्पादकं हि तत् । त्वद्भूषणं मया नैव, गृहीतं विद्ध्यसंशयम् ॥ १ ॥ परन्तु घृतमानेतुं, प्रविष्टा त्वं गृहान्तरे । त्वदार्यया तदैवैतत्, गृहीतं गुप्तचेष्टया ॥ २ ॥ कार्यव्यग्रतया चैत–दकृत्यं नेक्षितं त्वया । तद्धर्ममनुपश्यन्त्या, मया साक्षाद्विलोकितम् ॥ ३ ॥ सत्यप्येवंतवदुःखजनकत्वात्सा वार्त्ता मया त्वदग्रे न प्रकाशिता, यतः—मर्मप्रकाशने येषां, मानसं दुःखितं भवेत् ।

तदनुच्चारणं शास्त्रे, संमतं सुखदायकम् ॥ १ ॥ धर्मान्धधिया मयि चौर्यकलङ्कं मुञ्चन्त्या त्वया किमपि न विचारितम्? आमोपकोऽन्योऽपरश्च निबध्यते, उदरार्त्तिना महिषः पीड्यते तदधिपतिस्तप्तमुद्रयाऽङ्क्यते, तद्वदिदंजातम् । शपथपूर्वकंनिवेदयामि, त्वदवतंसो मया नैव गृहीतः, किमन्यत्कथयामि सर्वथा मयि निःशङ्कभावेन वर्त्तस्व, श्रवणाऽनर्हांतद्गिरंनिशम्याकुलितमानसा रूपमती जगौ—सखि ? मद्भूषणं त्वश्वे—न्नागृहीस्तद्वरं शुभे ? । मदार्यिकां मुधा कस्मा—त्कलङ्कयसि शोभनाम् ॥ १ ॥ ईदृक्कूटं प्रजल्पन्त्याः, कस्तवार्थोऽस्ति साम्प्रतम् । अधर्म्यवचनारम्भा—त्तुष्णींभावो मतो वरम् ॥ २ ॥ अहेतुकः समारब्धो—विद्वेषो विघ्नवाञ्छया । मदार्यिका सदा शुद्धा, धर्मवर्त्मनि संस्थिता ॥ ३ ॥ अपवादरतायास्ते, जिह्वा किं न स्खलत्यहो ? । नृपान्वये प्रसूताऽसि, किमवद्यं प्रजल्पसि ? ॥ ४ ॥ तृणमात्रमपि क्षित्या—मदत्तं नैव काङ्क्षति । साऽवतंसं कथं लाति, गृहीत्वा तेन किं फलम् ॥ ५ ॥ मणिरत्नानि सन्त्यज्य, सा तु दीक्षाव्रतं ललौ । शुभचारित्रसंपन्ना धर्म्यकर्मरताऽनिशम् ॥ ६ ॥ किञ्च—निःशङ्कभावां विदितप्रभावां, विश्वासपात्रीं जनसंस्तुतां ताम् । नार्हन्ति विप्रप्रमुखास्त्वदीयाः, पूज्यप्रभावा भुवि वम्भ्रमन्तः ॥ ७ ॥ तदीयव्रतभूषाग्रे, ताटङ्कं कियदस्ति तत् । तासां शीलवतीनां तु, शीलमेव विभूषणम् ॥ ८ ॥ नेक्षन्ते धनसम्पत्तिं, त्रिधा चित्तनिरोधिकाः । दृष्टिपूतं पदं भूमौ, क्षिपन्ति ता महत्तराः ॥ ९ ॥ वस्त्रग्रन्थिं न बध्नन्ति, धृतधर्मक्रियाः सदा । भिक्षान्नं केवलं शुद्धं, गृह्णन्ति, जीवनप्रदम् ॥ १० ॥ अदत्तं नैव गृह्णन्ति, वस्तुमात्रं सुमेधसः । उदारचरितानां हि, क्षुद्रबुद्धिर्न विद्यते ॥ ११ ॥ यतः—सच्चारित्रवतां लोके, प्राप्तव्यं नावशिष्यते । चिन्तामणिः स्वयं पूर्णो—ऽपरं नापेक्षते क्वचित् ॥१२॥ अतोमदीयविभूषणंसा कथमपहरति ? त्वमसत्यवादिनी प्रतिभाससे, राजसुता भणति—धर्माभासमानिनि ? आधिकाऽ-

धिकंमा वद, मद्वचने सन्देहश्चेत्तदुपाश्रयंव्रजावः, तद्वसनग्रन्थिनिर्भिद्य त्वदवतंसंदर्शयामि चेदहंसत्यवादिनी त्वया मन्तव्या, स्वीकृततद्वचना रूपमती तया सार्द्धमुपाश्रयमगमत्, तदानींसच्चरिता साऽऽर्या विहितेर्यापथिकी गोचरीमालुलोच। तदन्तिकप्रदेशमासाद्य भक्तिभरभुग्नशिरा मंत्रिसुता कृतवन्दनका तुष्णींतस्थौ, साध्वी जगाद-क्षणमेकंवहिस्तिष्ठ, अद्यास्माकंगोचर्याविलम्बोजातोऽस्ति, गाथा शिक्षितव्या चेत्पश्चात्ते दास्यामि, इतिसाध्वीवचनंनिशम्य रूपमतींविनीतामुपाश्रयाद्बहिर्यान्तींराजपुत्री साक्षेपंवदति, धूर्त्ते ? बहिःकुतोव्रजसि ? कार्यन्त्वत्रैव वर्त्तते, एवंब्रुवाणा सा तत्रैवतांरुरोध, विवदमानयोस्तयोःकलकलध्वनिंश्रुत्वा साध्वी शङ्कितमानसा व्यचिन्तयत्, अद्यकिमेवमियंविवदति, नवीनंकिमपि विद्यते ? तावन्नृपाङ्गजाऽवदत्—आर्ये ? भिक्षाटनं कस्मा-च्छिक्षितं तव को गुरुः। नवीनमीदृशं येन, चौर्यकर्म सह स्थितम् ॥ १ ॥ धर्मचारिणि ? महाव्रतधारिण्यपि त्वमदत्तादानातिचारंकिंन जानासि ? यतश्चोक्तम्—यन्निर्वर्त्तितकीर्त्तिधर्मनिधनं सर्वागसां साधनं, प्रोन्मीलद्वधबन्धनं विरचितक्लिष्टाशयोद्बोधनम्। दौर्गत्यैकनिबन्धनं कृतसुगत्याश्लेषसंरोधनं, प्रोत्सर्पत्प्रधनं जिघृक्षति न तद्धीमानदत्तं धनम् ॥ १ ॥ तथाच—वरं वह्निशिखाः पीताः, सर्पास्यं चुम्बितं वरम्। वरं हालाहलं लीढं, परस्वहरणं न तु ॥ २ ॥ किञ्च—चौरश्चौरापको मन्त्री, भेदज्ञः काणकक्रयी। अन्नदः स्थानदश्चेति, चौरः सप्तविधः स्मृतः ॥ ३ ॥ अतःसुमेधसोऽदत्तंधनंये वर्जयन्ति ते सर्वत्र सुखंलभन्ते यतः—अदत्तं नादत्ते, कृतसुकृतकामः किमपि यः, शुभश्रेणिस्तस्मिन्, वसति कलहंसीव कमले। विपत्तस्माद्दूरं, व्रजति रजनीवाम्बरमणेर्विनीतं विद्येव, त्रिदिवशिवलक्ष्मीर्भजति तम् ॥१॥ अतस्त्वंप्रत्यर्पय मे ग्रहणकं वितथवादिनींमां माजानीहि, प्रथमतस्त्वामहं जानामि,

त्वत्कृते घृतमानेतुं, गृहान्तः प्रविवेश मे । सखीयं गृहीतं तावत्, प्रच्छन्नं भूषणं त्वया ॥ १ ॥ मया प्रत्यक्षतो दृष्टं, त्वत्कर्म निन्दितं जनैः । नाऽऽविष्कृतं तदानीं त-न्मत्सखीस्नेहरोधतः ॥ २ ॥ त्वच्छिष्यया मुधा चौर्यं, मयि क्षिप्तं महत्तरे ? । तस्मादिदानीं सद्बुद्ध्या, प्रदेहि तद्विभूषणम् ॥ ३ ॥ नो चेत्सर्वत्र तेऽकीर्त्तिं, घोषयिष्यामि साम्प्रतम् । निजाक्षेपं विमूढोऽपि, सहते न किमु प्रधीः ॥ ४ ॥ अविदितजैनसमया विमाया साध्वी तदीयकूटगिरंनिशम्य व्याकुलिता व्याजहार—राजपुत्रि ! नरेन्द्रस्य, कुले जातासि किं मुधा । वदन्ती लज्जसे नैव, साध्व्याचारविमूढधीः ॥ १ ॥ मया किमपि नानीतं, संशयस्तव चेन्मम । पात्रादिकं विलोक्यैत-न्निर्णयं कुरु सत्वरम् ॥ २ ॥ कीदृग्विधोऽवतंसस्ते, नाहं जानामि तत्कथाम् । अनगारत्वभाजां हि, कियत्कार्यं तथाविधैः ॥३॥ सरोषा राजसुता पुनर्बभाषे—प्रपञ्चबहुला वह्वच-स्तादृश्यो लोकिता मया। तदेतद्दीयतां शीघ्रं, स्वहितं यदि वाञ्छसि ॥ १ ॥ इति तद्वचनप्रहारजर्जरिताऽपि तद्वार्त्तामजानन्ती साध्वी दीनवदना तुष्णींतस्थौ, ततोराजपुत्री प्रकुपिता स्वयमेव तदन्तिकंगत्वा तदुत्तरीयनिबद्धंविभूषणंछोटयित्वा रूपमत्यै प्रददौ । अथसाध्वीमवहेलयन्ती भूपात्मजा सत्यवादरतेव मंत्रिसुतामुपादिदेश—सखि ! मुग्धाऽसि नूनं त्वं, धर्माऽधर्मं न बोधसे। इतः प्रारभ्य साध्वीनां, न कार्या संगति-स्त्वया ॥ १ ॥ विज्ञाततत्प्रपञ्चा रूपमती जगौ—नृपात्मजे ! तवैवैषा, विद्यते कूटकल्पना । साध्वीयं सर्वथाऽकार्यं, नाचरद्धर्म-चारिणी ॥ १ ॥ इयं शीलवती साध्वी, विद्यते सरलाशया । कदाचिदपि नो चौर्यं, त्रिधा काऽपि समाचरेत् ॥ २ ॥ ततःसा साध्वींप्रार्थयन्ती प्राह—पूज्ये ! त्वं शुद्धभावाऽसि, धूर्त्तेयं राजकन्यका । मिथ्यात्ववासिता धर्म-द्वेषिणी त्वां मुधाऽऽक्षिपत् ॥ १ ॥ अतस्त्वया सुखेनैव, स्थातव्यमत्र निर्भयम् । धर्मैकचेतसां चिन्ता, लौकिका नैव बाधते ॥ २ ॥ एवं निजार्यिकामुक्त्वा,

सा जगाम निजालयम् । स्वस्थानं राजकन्याऽपि, विलक्षवदना ययौ ॥ २ ॥ स्वनैपुण्यं ख्यापयितुकामाया राजसुतायाःसकलमनोरथःसफलोनाऽभवत्, यतः—दुर्जनानां च सर्पाणां, चौराणां प्राणघातिनाम् । अभिप्राया न सिद्ध्यन्ति, तेनेदं वर्त्तते जगद् ॥ १ ॥ अथ धर्मधना विशुद्धचरिता सा साध्वी निर्हेतुकंकलङ्कितंनिजात्मानमनुसरन्ती दुरन्तदुःखार्णवे निपतिता पुनश्चिन्तयति—वृत्तान्तमेतद्वितथं मदीयं, सर्वत्र विस्तारमहो ! गमिष्यति । मृषा वदन्त्या हि नरेन्द्रपुत्र्या—न मंस्यते कोऽपि विरुद्धवादम् ॥ १ ॥ किं तेन जीवितेनाऽपि, येन निन्दा भवेज्जने । अपवादजुषां लोके, जीवनान्मरणं वरम् ॥ २ ॥ इति सकलङ्कंजीवितमनिच्छन्ती सा स्वस्थानस्थिता भारपट्टे रज्जुना निजात्मानमुद्बध्य निरालम्बंमुमोच, अहो ! चारित्रवन्तोऽपि, रोपपङ्कपराजिताः । अकृत्यमपि कुर्वन्ति, दुर्गतिक्षोभसाधनम् ॥ १ ॥ ततस्तदुपाश्रयनिकटस्थायिनी सुरसुन्दरीनामा काचिद्वनिता विज्ञाततद्वृत्तान्ता सत्वरंतत्र समागत्य साध्व्याः कण्ठपाशंछित्वा भूतले तां स्थापयामास । ततःशीतोपचारैस्तांसावधानांविधाय सामवचनैःसान्त्वयन्ती सा भोजनमकारयत् । अथ साध्व्यपि शान्तरोषा विज्ञातनिजाचारा समतागृहे निवसन्ती निरतिचारचारित्रमपालयत् । नृपसुता तिलकमञ्जरी तु तथाविधावर्णवादजन्यदुष्कर्मणा निबिडंकर्म बबन्ध, ततस्तयोस्तिलकमञ्जरीरूपमत्योर्निरन्तरंजैनशैवतत्त्वेषु विवादोजायते. उभेऽपि स्वस्वमताग्रहं न मुञ्चतः । यथावसरमुभेऽपि स्वस्वधर्मानुष्ठानंकुरुतः, यतः—धर्मादेव मनःशान्ति—र्धर्म एव गतिप्रदः । तस्मादात्मार्थिना सम्यग्, धर्मः सेव्यः परीक्ष्य वै ॥ १ ॥ अथैकदा वैराटाधिपतिर्जितशत्रुनामनृपतिर्निजाङ्गजशूरसेनकृते रूपगुणैस्तदनुरूपांतिलकमञ्जरींमार्गयितुंतिलकापुरींप्रति निजमन्त्रिणंप्रैषीत् । सोऽपि निरन्तरप्रयाणेन तत्र गत्वा मदनभ्रमभूपंप्रणम्य विनीतोनिजवृत्तान्तंज्ञापयामास, नृपतिस्तद्गिरं समाकर्ण्य

निजाङ्गजांरहसि नीत्वा तदपृच्छत् । साऽपि व्रीडांतनूकृत्य निजगाद, तात ! मे सखी रूपमती तं वरंवाञ्छति चेदावामुभे युगपत्तंवृणीवः । यतोबाल्यावस्थायामेवावाभ्यामुभाभ्यामेकोवरोवरणीय इतिसङ्केतोविहितोऽस्ति, येनावयोर्वियोगो न भवेत् । मदनभ्रमस्तत्कालमेव निजमन्त्रिणंसमाहूय तद्वृत्तान्तंव्यजिज्ञपत्. मन्त्रिणा भणितं–राजन्नास्मिन्विषये मे कश्चिद्विरोधः, मत्पुत्र्या अपि योग्यसम्बन्धःसर्वथाऽभिमतः, उचितयोगःकेषां न श्लाघ्यः ? ततोऽञ्जसा वैराटमन्त्रिणंनिजान्तिके समाहूय मदनभ्रमः स्वाऽभिमतंनिवेदयामास—मत्पुत्र्या मन्त्रिपुत्र्याश्च, विवाहः सह निश्चितः । शूरसेनकुमारेण, तर्जितानङ्गमूर्त्तिना ॥ १ ॥ ततो वैराटमन्त्रीशो–मोदमानो भृशं हृदि । दैवज्ञश्च समाहूय, पप्रच्छ लग्नवासरम् ॥ २ ॥ सोऽपि शुद्धमहायोगं, निश्चित्य लग्नमुत्तमम् । न्यवेदयत्सभामध्ये, स्वीचक्रुस्तन्नरोत्तमाः ॥ ३ ॥ अथ वैराटमन्त्रीशः, प्रणतो विहिताञ्जलिः । धराधिपमनुज्ञाप्य विराटनगरं ययौ ॥ ४ ॥ स्वस्वामिनं प्रणम्याथ, तद्वृत्तान्तमुवाच सः । तन्निशम्याऽभवत्सोऽपि, भृशं रोमाञ्चितो नृपः ॥ ५ ॥ लग्नाहे सन्निधौ याते, विवाहोत्सवमातनोत् । सज्जयामास हस्त्यादि–वाहनानि नरोत्तमः ॥ ६ ॥ महताऽऽडम्बरेणैव,–शूरसेनकुमारकः । जन्ययात्रावृतश्चक्रे, प्रयाणं पितृसंगतः ॥ ७ ॥ वैराटाधिपतिर्हृष्टः, संगतस्तिलकापुरीम् । आतोद्यध्वनिभिः सर्वं, दिक्चक्रं गर्जयन्शुभैः ॥ ८ ॥ मदनभ्रमभूपालः, समहोत्सवमुत्सुकः । प्रवेशं कारयामास, नगरे मण्डिते निजे ॥ ९ ॥ ततो लग्नक्षणं प्राप्य, पुरोधा विधिनोभयोः । पाणिग्रहं जनानन्दं, वरवध्वोरकारयत् ॥ १० ॥ करमोचनवेलायां, भूपेन मन्त्रिणा तथा । गजाश्वरथरत्नादि, वराय बहुधाऽर्पितम् ॥ ११ ॥ शूरसेनो धृतोत्साहो–भार्याद्वयसमन्वितः । जगाम स्वपुरं लोका–न्मोदयन्परिवारयुक् ॥ १२ ॥ उभेऽपि वध्वौ श्वश्रूश्वशुरयोर्मर्यादांपालयन्त्यौ गृहकार्याणि कुर्वन्त्यौ निजस्वामिनंभोगविलासेन

प्रीणयतः । श्वश्रूश्वगृहभारक्षमं वधूद्वयंविज्ञाय तयोर्निहितगृहकर्मा स्वयंनिश्चिन्ता वभूव.

इतिश्री चन्द्रराजचरित्रे चतुर्थोल्लासेऽष्टमः सर्गः ॥ ८ ॥

ततस्तेऽपि यथाऽवसरंगृहकृत्यंनिष्पादयन्त्यौ स्वस्वधर्मसाधयतः । कुलवधूनामयमेव सदाचारः । एवमुभे सख्यौ परस्परमानन्दमनुभवन्त्यावपि सततंविवादव्यसनं न मुञ्चतः । धर्मवार्त्ताविनोदे च विभिन्नमानसे विशेषतस्ते तिष्ठतः, यतःसञ्जातसपत्नीत्वेन तयोः कारणान्तरंसमायातम् । सपत्नीशूलयोर्मध्ये, वरं शूला न चेतरा । शूलया पीड्यते काले, दहत्याद्या पदे पदे ॥ १ ॥ सुन्दराङ्ग्यावुभे भगिन्यावपि समानपतिके मिथोभूयांसंविद्वेषमावहतस्तर्हि अनयोःकिमुवक्तव्यम्–कस्मिँश्चिदपि वस्तुनि युगपदभिलाषवतोर्वैरबुद्धिर्जायते, यदेकश्च वस्त्वेकस्मिन्समये द्वयोरुपभोगसाधनंकथंभवेत् ? उत्पद्यमानः स क्लेशस्तयोःप्रतिवासरंवर्द्धत एव, यतः––सपत्नीत्वसमं दुःखं, जगत्यन्यन्न विद्यते । भगिनीति जनास्तस्मिन्–व्यवहारपरा मुधा । १॥ किञ्च–द्वे भार्ये यस्य वर्त्तेते, तस्य जन्मैव निष्फलम् । वैषम्यभावनां दृष्ट्वा, कस्य द्वेषो न जायते ? ॥ २ ॥ स्वप्नेऽपि सुखलेशोऽपि, द्विभार्यस्य भवेन्न हि । दुःखान्तो हि सुखाभासो–वेद्यते दीनताजुषा ॥ ३ ॥ तथाहि––अर्द्धाङ्गे पार्वतीं बिभ्र–द्गङ्गाञ्च शिरसा दधत् । लोकेशोऽपि भवानीशः, परिभ्रमणमासदत् ॥ ४ ॥ शूरसेनकुमारस्तु, स्वकर्मकुशलः स्त्रियौ । ताम्बूलानीव ताम्बूली, समदृष्ट्या निरीक्षते ॥५॥ तथाऽपि वाताहततूलायुगलमिव सम्यगवेक्षमाणस्याऽपि तस्य न्यूनाऽधिकतांनिरीक्षमाणेऽप्युभेभार्येनिजचित्ते समादधाते । इतोऽन्यदा द्वीपान्तरात्केनचिद्व्याधेन नीलाश्मद्युतिशिखांशिरसि च्छत्रमिव धारयन्ती, रक्तोत्पलनयना, तप्ततपनीयसमचञ्चूपुटा, अन्तरान्तरेश्यामतरपक्षपर्वा मञ्जुलवाङ्माधुर्येण सुधामवधीरयन्ती मञ्जुलैका समासादिता।

विचिन्तितंतेन—दीव्यरूपधरा चारु-भाषिणी मोहकारिणी । पक्षिणी शोभते राज-द्वारे किं मे प्रयोजनम् ॥ १ ॥ इति-विज्ञाय तेनैव, मदनभ्रमभूपतेः । मञ्जुवाक् मञ्जुला सा हि, विनम्रेणोपदीकृता ॥२॥ काव्यकथाद्यालापेषु लब्धनैपुण्याजन-मनांसि रञ्जयन्ती सा राजसद्मनि व्यलसत्, पीयूषसोदरांतद्गिरंश्रोत्राञ्जलिना पिबन्नृपतिर्भृशंतुष्टस्ततःस निजसुतायाःक्रीडनार्थं वैराटनगरे तांसुवर्णपञ्जरस्थांप्रेषितवान्, तिलकमञ्जर्यपि तामपूर्वरूपांमधुरगिरंनिरीक्ष्यामितप्रमोदमाबभार । अथ निजंकृतकृत्यं-मन्यमाना सा नृपात्मजा प्रत्यहं तामेव रमयन्तीसुखेन वासरानत्यवाहयत् । अभिनवखादिमादिस्वादिमपदार्थैस्तांपोषयन्त्यै काकि-न्येवानन्दमनुभवतिसा । निजसपत्न्यै रूपमत्यै विनोदितुं क्षणमपि तां न ददाति, विनयशालिनी रूपमती तांमार्गयति तदा तिलक-मञ्जरी सगर्वं कथयति, निजपितुर्गृहात्त्वमपि स्वोचितंगरुन्मन्तं कथंनानयसि? मयि प्रेमवता मज्जनकेनेयंमञ्जुला प्रेषिता, स्व-पितुःसन्निधौ तन्मार्गणे का लज्जा? तथाविधंतद्वचनंनिशम्य विपण्णमानसा रूपमती सौम्यस्वभावत्वाद्रोषपोषंन चकार । यतः—

रोषो हि दोषस्य निदानमाहु-स्त्यजन्ति रुष्टं शुभकारणानि । अमङ्गलो दुःस्थितिभाजनं स्या-द्दारिद्र्यमूलाश्च विपद्गणाः स्युः ॥ १ ॥ अथान्यदा रूपमती तथाविधांमञ्जुलामभीप्सन्ती निजजनकोपरि पत्रंप्रैषीत् । मन्त्र्यपि तल्लेखंवाचयित्वा सप-त्नीदुःखेनेदंपत्रंलिखितमिति निश्चिकाय, ततस्तेन वनगिरिपत्तनाद्यनेकप्रदेशा विलोकिताः, परंतादृग्रूपशालिनी मञ्जुला क्वा-ऽपि न प्राप्ता, ततोनिर्विषेन मन्त्रिणा चिन्तितं यदीदानींमञ्जुलांन प्रेषयिष्यामि तर्हि मदात्मजा भृशं दुःखमवाप्स्यति । अतो-यत्नशतैरपि तन्मनोरथं पूरयामीति विचिन्तयता तेन नीलवर्णा सारिकाकृतिर्मनोहारिणी कोशीजातीया काचित्पक्षिणी कुतो-ऽपि समासादिता, ताञ्च सुवर्णपञ्जरस्थांविधाय रूपमत्यै स प्राहिणोत् । साऽपि स्वतातप्रेषितांसुन्दराकृतिंतांविलोक्य प्रचुरप्र-

मोदमियाय, यथाकालंपञ्जरात्तांनिष्कास्य स्वयंरमयामास, ताञ्चपालयितुमेकंपुरुषं सा न्ययुङ्क्त, स्वयमपि तद्रक्षणंसम्यक्तया विदधाति, यतः—यस्याऽस्ति योऽभीष्टकरोऽपरोऽपि, विभिन्नरूपोऽपि गुणेन हीनः । स एव तत्तोषविधानदक्षो–न तंविना तिष्ठति स क्षणं वै ॥ १ ॥ कदाचिद्दासिका काचित्–तत्स्वरूपं व्यजिज्ञपत् । अविदन्ती सपत्नीनां, द्वेषं तिलकमञ्जरीम् ॥ २ ॥ वज्रप्रहारमिव विषमंतद्वचनमाकलय्य सा भृशंव्याकुलिता जज्ञे, चिन्तितञ्च तया कूटकारिण्या—मय्यसूयां दधानैषा, निजताततगृहादिमाम् । पक्षिणीमानयद्दुष्टा–ऽधमाः किं कुर्वते न हि ॥ १ ॥ अहो ! सपत्नीप्रवृत्ति-र्विलक्षणा विद्यते, यदिमे सुखाभिलाषिण्यावेकैकस्याःप्रमोदलेशमपि सोढुंन शक्नुतः । अथैकदा द्वे सपत्न्यौ स्वस्वपक्षिणीं-गृहीत्वा विवादंकुरुतः, तिलकमञ्जरी प्राह—मामिकी मञ्जुला सुभ्रु !, रूपसौन्दर्यशालिनी । चेतोहराऽस्ति सर्वेषां, जगदेक-विमोहिनी ॥ १ ॥ तदसहमाना रूपमती प्राह—असंभाव्यमिमं गर्वं, कुर्वाणा किं न लज्जसे ? । एकैकस्मात्क्षितौ वस्तु, ह्यधि-कं विद्यते सखि ! ॥२॥ प्रियभगिनि ! किं त्वदीयैव मञ्जुला रम्या नापरा तत्रकिंप्रमाणं ? नानुचितंवाक्यंजनाः प्रमाणयन्ति—वचस्तदेव वक्तव्यं, यत्प्रामाण्यमवाप्नुयात् । मृषावादरतो लोकः, परत्रेह च दुःखभाक् ॥ १ ॥

कोशीमनुपालयन्त्या रूपमत्या छगणके वृश्चिकःसमारोपितः । अथैकदा स्वस्वपक्षंप्रतिपादन्त्यावुभे प्रतिज्ञामकार्ष्टाम्, रूपाकृतित्त्वेनोभे समाने दृश्येते,—किन्तु—यस्याः संभाषणेनैष,–लोको रज्यति सात्त्विकः । तत्स्वामिनी भवेत्पूज्या, तद्दा-स्यमपरा व्रजेत् ॥ १ ॥ ततोमहोत्सवमयीमिमांप्रतिज्ञांसत्यापयितुकामा तिलकमञ्जरी प्रागेव स्वमञ्जुलां वक्तुमादिशत् । साऽ-पि प्राप्तनिदेशा सकलगीतकलाकोविदा सर्वानरञ्जयत् । ततस्तिलकमञ्जरी भूरिमोदमावभार । अथरूपमतीनिजकोशींवक्तुं-

समादिशत्, तावत्सा मानुषींभाषामेव न जानाति, पुनर्मधुरवाग्विलासैः परकीयमनःकुतोरञ्जयेत् । मौनमुखींतांविलोक्य विषादमापन्ना रूपमती व्यचिन्तयत्---पालितेयं मुधा कोशी, विषादाय ममाऽभवत् । बाह्यतः सुन्दराकारा, गुणाभासोऽपि दुर्लभः ॥ १ ॥ अथ जितकाशिस्तिलकमञ्जरी रूपमतीं वचनप्रहारैरुपद्रोतुंलग्ना, वितथवादरते ? कथमसत्प्रलापैःप्रातिवेश्मिकानपि खेदयसि ? किञ्च---विदग्धवचनालापा, सुन्दराङ्गी क ?: मञ्जुला । क ? ते कोशी कटुध्वाना, जनसन्तापकारिणी ॥ १ ॥ न क्काऽपि मञ्जुलाकारा, पक्षिणी मञ्जुलासमा । मुधैव खेदमाधत्से, दैवाधीनमिदं जगत् ॥ २ ॥ इत्थंतिलकमञ्जरीगदितानिवचनानि सोढुमक्षमा रूपमती दक्षाऽपि निजपक्षिण्यै भृशंचुकोप, तद्रक्षकस्तदा रूपमतींप्रार्थयमानोवदत् —स्वामिनि ! दीनपक्षिण्या–मस्यां रोषं विधेहि मा । मानवोऽपि स्खलेत्क्काऽपि, पक्षिणां सौष्ठवं कियत् ॥ १ ॥ एवमनेकोक्तिभिर्वारिताऽपि सा तमनादृत्य सहसा तत्पक्षाणि मूलतश्चकर्ष, यद्व्यथया निश्चेतना साकोशीषोडशप्रहरान् दुःखसंभारमनुभूयार्त्तध्यानेन मृत्वा मानवत्वंलब्ध्वा वैताढ्यगिरौ गगनवल्लभनगाधीशपवनवेगनरेशस्य वेगवतीभार्यायाःकुक्षौ पुत्रीत्वेन समुत्पन्ना, पूर्णे गर्भसमये वेगवती तामजीजनत्, द्वादशेऽन्हि नरेन्द्रेण वीरमतीत्यभिधानंतस्या विनिर्ममे । ततःप्राप्तयौवनांतांपवनवेगोवीरसेनाय प्रायच्छत् । अप्सरोभ्यः समासादितविविधविद्या सा निजभर्त्तरि दिवंयाते स्वयमेव राज्यासनमारूढाऽस्ति । रूपमत्याः दास्या प्रान्तसमये कोशींनमस्कारमन्त्रःश्रावितस्तत्प्रभावेणानया मानवत्वादिसंपदासादिता । अथविहिततत्संस्कारा विदिततत्त्वा रूपमती पश्चात्तापमकरोत् । धिगस्तु मां साहसकार्यकारिणीं, लब्ध्वाऽपि जैनं मतमद्वितीयकम् । वधेन चास्याः कतमा गतिर्मम, निरागसो निर्दयताजुषः प्रभो ! ॥ १ ॥ अथ मिथ्यात्वोपहतमानसा मानशालिनी दुराशया

तिलकमञ्जरी कोश्या व्रधस्वरूपंनिशम्य जैनमतंनिन्दयन्ती रूपमतींप्रत्यवदत्—दृष्टस्तवाद्यैव जिनोक्तधर्मो–रे निर्दये ! नाऽत्र कृपालवोऽपि । दयेति जैनाः प्रभणन्ति लोके, मुहुर्मुहुर्वाहृत एव धूर्त्ताः ॥ १ ॥ किं तेन धर्मेण जनप्रतारिणा, विधायिनाऽनर्थपरम्परायाः । इहाऽपि दुःखोदधिरेष केवलं, परत्र लोके पदमापदां च ॥ २ ॥ अन्यत्राऽप्युक्तम्—न सा सभा यत्र न सन्ति वृद्धा–वृद्धा न ते ये न वदन्ति धर्मम् । धर्मः स नो यत्र न सत्यमस्ति, सत्यं न तद्यच्छलमभ्युपैति ॥ ३ ॥ रे दुराचारे ! जैनधर्मरक्तायास्तव निरागसःपक्षिण्या विहंसने दयालुता क्व गता ? तांविहन्तुं तव हस्तौ किंन स्खलितौ ? प्राणात्ययेऽपि नैतादृशमकार्यंविदधामि, इत्थंसपत्नीवचनेन भृशंदूयमाना रूपमती दिनान्यत्यवाहयत् । प्रत्यहंविवदमानयोस्त-योर्धर्मक्लेशोन विरराम, स्वभर्त्तुर्हितशिक्षामवगणयन्त्यावुभे सर्पिषाऽभिषिक्तवन्हिशिखानुकारिण्यौ परोपतर्पिजनयतः। कोशीं-निहत्य रूपमती मुहुःस्वंनिन्दन्ती पश्चात्तापेन परं कार्श्यमवाप, अतोमेधाविनोविमृश्यैव कार्यंविदधाति-साहसिकंकर्म महतेऽनर्थाय जायते, रे जीव ? बुद्ध्यस्व, यत्किमपिकर्त्तुंवाञ्छसि तत्पर्यालोच्यैव त्वया विधातव्यम् । अन्यथा जानताऽजानताऽपि विहितं-कर्म शुभाऽशुभंनाभुक्तंक्षीयते, कृतेन कर्मणा नवीनवन्धोभविष्यति । सैव वन्धोऽशुभस्तीव्रः, काशीस्थकरपत्रवत् । द्विधा विड-म्बयञ्जन्तू–नक्षीणो नैव शाम्यति ॥१॥ अकृत्यकारिण्यपि रूपमती प्रविदिताऽऽर्हततत्त्वा पर्यालोचिताशुभकर्मा पुरुषवेदंसवन्ध । क्रमेण पूर्णायुष्का सा मृत्वा वीरसेनभूपस्य चन्द्रावतीपत्न्याःकुक्षौ पुत्रत्वेन समवतीर्णा, गर्भदिनेपुपूर्णेषुकुमारं सा प्रासूत, यन्नाम-चन्द्रराजेति राज्ञा विनिर्मितम्, सैव त्वमधुना विराजसे–अहो धर्ममाहात्म्यम् ! अज्ञानतोऽपि समाचरितोधर्मोनिष्फलोनैव

जायते—यतः-धर्मो महामङ्गलमङ्गभाजां, धर्मो जनन्युदलिताखिलार्त्तिः । धर्मः पिता चिन्तितपूरितार्थो,-धर्मः सुहृद्वर्द्धितनित्य-हर्षः ॥ १ ॥ अन्यच्च-धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं, धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसंपत्तयः । कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्मः सम्यगुपासितो भवति हि स्वर्गोऽपवर्गप्रदः ॥२॥ धर्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः, सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः । राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां, तत्किंयन्न करोति किं च कुरुते स्वर्गापवर्गावपि ॥ ३ ॥ तथाच-रम्यंरूपं करणपटुताऽऽरोग्यमायुर्विशालं, कान्ता रूपा-विजितरतयः सूनवो भक्तिमन्तः । षट्खण्डोर्वीतलपरिवृढत्त्वं यशः चीरशुभ्रं, सौभाग्यश्रीरिति फलमहो धर्मवृत्तस्य सर्वम् ॥ ४ ॥ नरेन्द्र ! अन्यदपि शृणु, कोशीरत्नकोयःपुमान्सोऽपि मृत्युमापन्नस्तव सुमतिनामा प्रधानोजातः, तत्र हेतुरयमेव-अपमृत्युदशां कोश्या-विलोक्य विस्मिताशयः । दयार्द्रमानसो ह्यासीद् , भृत्यभावगतोऽपि सः ॥ १ ॥ तथैव साध्व्याः कण्ठपाशविभेदिका तत्प्रातिवेशिमकी सुरसुन्दरी कालधर्ममुपगम्य त्वद्भार्या गुणावली जाता, राजसुता तिलकमञ्जरी मिथ्या-दृष्टिरपि प्रेमलालक्ष्मीर्जाताऽस्ति, साध्वीजीवश्च कालधर्ममासाद्यकुष्ठीकनकध्वजोऽजनिष्ट, अज्ञानोपहतात्मानोजीवाःकर्मणां-गहनांगतिंन विदन्ति, परिणामे दुरन्तदुःखजनकानि तानि जायन्ते, तथैव मञ्जुलाजीवोमृत्वा कपिला धात्री समभूत् । पूर्वभववैरिणी याऽस्मिन्भवेऽपि वैरभावंनाऽत्यजत् । यतः-यो मूढभावः प्रविधाय वैरं, न प्राप तोषं भुजगानुकारी । स लब्ध-जन्माऽधममार्गगामी, पुरातनं तन्न जहाति वैरम् ॥ १ ॥ परिणीतराजमन्त्रिसुतःशूरसेनकुमारःपूर्णायुष्कोमृत्वा शिवकुमारः-सञ्जातः । रूपमत्या दासी विपद्य शिवमाला समुत्पन्ना, मञ्जुलायाःपालक आयुषान्ते कालंकृत्वा हिंसकनामा मन्त्री जातः ।

बलीयांसंकर्मप्रवाहंनिरोद्धुंन कोऽपि शक्नोति-यतः-आरोहतु गिरिशिखरं, समुद्रमुल्लङ्घ्य यातु पातालम् । विधिलिखिताक्षरमालं, फलति कपालं न भूपालः ॥ १ ॥ विधत्तां वाणिज्यं, श्रयतु नरनाथं प्रविशतु, द्युलोकं पातालं, व्रजतु भजतां वा धनपतिम् । अधीतां शास्त्रौघं, द्रढयतु तपोऽभ्यस्यतु कलाः, पुरोपात्तं कर्म, स्फुरति न तथाऽपि ह्यपरथा ॥ २ ॥ तथाच-प्रचलति यदि मेरुः शीततां याति वह्नि-रुदयति यदि भानुः पश्चिमायां दिशायाम् । विकसति यदि पद्मं पर्वताग्रे शिलायां, तदपि न चलतीयं भाविनी कर्मरेखा ॥३॥ किञ्च हे चन्द्रराज ! किमधिकंकथयामि ! निजपूर्वभवचरित्रात्कर्मणोवैचित्र्यमवेहि-पक्षच्छिन्ना पक्षिणी कोशिका सा, लब्ध्वा क्रूरं वीरमत्याः स्वरूपम् । निर्माय त्वां कुक्कुटं स्वेच्छयाऽरं, प्राच्यं वैरं संस्मरन्ती तुतोद ॥ १ ॥ कृतानि कर्माणि जगत्त्रयेऽस्मिन्, व्रजन्ति कर्त्तारमखण्डितानि । भव्यास्ततः शुद्धधियः प्रमादं, स्वीकुर्वते नैव मनस्विगर्हितम् ॥ २ ॥ तथैव पूर्वस्मिन्भवे साध्व्या मृषाचौर्यकलङ्कदानेन भवान्तरगता प्रेमलालक्ष्मीःकनकध्वजभूतया तया कुष्ठकारिणीति सकलङ्कीकृताऽतोविषकन्येति ख्यातिमापन्ना, प्राग्जन्मनि रूपमतीसविधे कोशीरत्नकोयथा दीनतामन्वभवत्तथा वीरमत्याःसन्निधौ तद्वचनंप्रमाणयन्ती गुणावली नयनयोर्वारिपूरमावहन्ती वासरान् व्यत्यगात् । कुक्कुटीभूतंभवन्तंविलोकयन्ती सा भृशंदुःखार्त्ताऽभवत् । रूपमत्याश्चेटिकया कोशिकाया निर्यापनादानंविहितं तत्प्रेम्णाऽस्मिन्भवे शिवमाला चरणायुधंसमानीय प्रेमलालक्ष्म्यै समर्पयत्, तयाऽपि निजात्मवत् स समारक्षितः । पूर्वाचीर्णं स्नेहजालं द्रढीयः, प्रायः सर्वान् देहिनः संरुणद्धि । संप्राप्यैतं वल्लभं कामिनां हि, चेतः शान्तिं याति जन्मान्तरेऽपि ॥१॥ एवंसुरासुरनिषेवितचरणसरोजेनजगत्पूज्येन-प्ररूपितंस्वस्वपूर्वभवस्वरूपंविदित्वा चन्द्रराजप्रभृतयःसर्वे प्रतिबोधमवापुः । अथनिर्मूलितकर्मततेःपरमोपकारिणःपरमात्मनश्चर-

णान्तिकमासाद्य भक्तिभरानतकन्धरश्चन्द्रराजोविहितप्रणामाञ्जलिर्व्यजिज्ञपत्–नाथ? त्वादृशि तारकेऽपि मिलिते मत्तो भवोदन्वति, मग्नोऽहं यदि क्लेशकारिणि तदा त्वद्दर्शनं निष्फलम् । किंवाऽन्यच्छरणं व्रजामि भवतो भूत्वा न मे सांप्रतं, यस्मादेव विबोधनं स सततं सद्भिः समाश्रीयते ॥ १ ॥ हेत्रैलोक्यविभो ! भवादृशमिहक्षेमङ्करं तारक–मन्यं नैव विलोकयामि भविनां संसारवारांनिधेः । त्वत्पादाम्बुजमस्तु मे सुखकरं मत्त्वा स्वकीयं त्वया, नो त्याज्योऽस्मि मुनीन्द्र ? मामनुदिनं त्वद्भक्तिहेवाकिनम् ॥२॥ यतः–पयःपूरं दृष्ट्वा, मदमलिनगण्डाः करटिनः, निवर्त्तन्ते पश्चा–ज्जलतरणशक्त्या विरहिताः । तदौद्धत्यं जानन्, गतबलसमृद्धिर्झपगणः, सदातिष्ठन्स्वस्मि–न्निज इति पयः किं न मनुते ॥३॥ तस्माज्जगत्प्रभो ? कृपांविधाय भूरिदुःखैकहेतोर्भवार्णवान्मांसमुद्धर, प्रभुःप्राह–यदीच्छा भवेचेन्महाभाग ! सद्यः, शुभे कर्मणीष्टे विधेयः प्रयत्नः । सदानैकरूपा मनोभावनाऽतः, सुखं वाञ्छता साधनीयः स्वधर्मः ॥ १ ॥

इतिश्री चन्द्रराजचरित्रे चतुर्थोल्लासे नवमः सर्गः ॥ ९ ॥

चन्द्रराजस्तथेत्युदीर्य सपरिवारोविहितप्रणतिर्निजनगरमियाय, अथमुनिदेशनामृतपानतोनिजपूर्वभववृत्तान्तश्रवणाच्च भवोद्विग्नःस इन्द्रियार्थान्विषोपमान्मन्यमानोगुणावलीं प्रेमलाञ्च रहसि नीत्वा निजाऽभिप्रायंन्यवेदयत् । प्रिये !–संसारविषवृक्षस्य, द्वे फले ह्यमृतोपमे । तत्त्वामृतरसास्वाद–आलापः सज्जनैः सह ॥ १ ॥ दुःखाङ्गारकतीव्रः, संसारोऽयं महानसो गहनः । इह विषयामृतलालस,–मानसमार्जार ! मा निपत ॥ २॥ अयमविचारितचारुतया, संसारो भाति रमणीयः । अत्र पुनः परमार्थदृशा, न किमपि सारमणीयः ॥३॥ क्वचिद्विद्वद्गोष्ठी, क्वचिदपि सुरामत्तकलहः, क्वचिद्वीणावादः क्वचिदपि च हाहेतिरुदितम् ।

क्वचिद्रम्या रामा, क्वचिदपि जराजर्जरतनु–र्न जाने संसारः, किममृतमथः किं विषमयः ॥४॥ किञ्च–कृच्छ्रेणाऽमेध्यमध्ये, नियमिततनुभिः स्थीयते गर्भगर्त्ते, कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः । नारीणा मप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः, संसारे रे ! मनुष्या वदत ? यदि सुखं स्तोकमप्यस्ति किञ्चित् ॥५॥ अतो हेरमे ? संसारावासंकारावासंमन्ये, संसृतिपङ्कनिमग्नानांकियत्सुखम् ?–पुत्रमित्रकलत्रेषु, सक्ताः सीदन्ति जन्तवः । सरःपङ्कार्णवे मग्ना–जीर्णा वनगजा इव ॥१॥ अहो ? मोहलीलामाहात्म्यम्–पाषाणखण्डेष्वपि रत्नबुद्धिः, कान्तेतिधीः शोणितमांसपिण्डे । पञ्चात्मके वर्ष्माणि चात्मभावो–जयत्यसौ काचन मोहलीला ॥ २ ॥ निखिलं जगदेव नश्वरं, पुनरस्मिन्नितरां कलेवरम् । अथ तस्य कृते कियादयं, क्रियते हन्त जनैः परिश्रमः ॥ ३ ॥ हे मृगाक्ष्यौ ?–भेदाऽभेदौ सपदि गलितौ पुण्यपापे विशीर्णे, मायामोहौ क्षयमुपगतौ नष्टसन्देहवृत्तेः । शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं, निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥४॥ तथा च–आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥५॥ सुतनु ? असारे खलु संसारे रम्यतरान्त्विदमेवपरमतत्त्वंजानीहि–नित्याऽनित्य विचारणा प्रणयिनी वैराग्यमेकं सुहृत्, मित्राण्येव यमादयः शमदमप्रायाः सखायो मताः । मैत्र्याद्याः परिचारिकाः सहचरी नित्यं मुमुक्षा बलादुच्छेद्या रिपवश्च मोहममतासंकल्पवैरादयः ॥ १ ॥ अतोऽहं श्रीमुनिसुव्रतस्वामिनःपादान्ते भवौषधीभूतंचारित्रव्रतंग्रहीष्ये, यतस्तद्वचनसुधासिक्तं मे मानसंसर्वथा राज्यभोगान्नेच्छति, भोगिभोगानिव तान्विलोकयामि, किंबहुना सर्वथैते मे न रोचन्ते, अधुना ध्याननिमग्ना मे वृत्तिरौदासीन्यंभजते, प्राणिनामायुरञ्जलिगतजलमिव प्रतिक्षणंक्षीयते, परिणामे च पयोबुद्बु-

दवह्निशीर्यते, किञ्च—संरक्ष्यमाणमपि नित्यमिदंशरीरं, वाराङ्गनेव समयोचितभक्तिरीतिम्। जानाति नेति सुविचार्य तदीय-सेवा, हेया मनस्विभिरखण्डपदाभिलाषैः ॥ १ ॥ चन्द्रवदने ! मांसशोणितकर्दमेन विरचितकरङ्कभित्तिकं शिराकाष्ठैर्मण्डित-शिरोभागं केशतृणैराच्छादितं श्वासोच्छ्वासस्तम्भाग्रनिवेशितं स्नानविलेपनादिसत्क्रियाभिः संस्कृतमपीदंदेहोटजं सततंभोज्या-दिभिः पूर्यमाणमपूर्णमिव रिक्तंजायते, पूर्णेऽवधौ क्षणमात्रमपि तन्नतिष्ठति, तादृगस्थिरभूरुहपत्रोपमया शरीरनौकया निरवधि-रयंभवोदधिःकथंतीर्यते ? शरीरात्मसंयोगोऽनन्तशोजातस्तथाऽपि तत्त्वाविमुखा देहिनस्तत्साफल्यं न तन्वते, अस्मिन्भवसागरे ग्रथिलवनिताशिरोधृतघटयुगलमिव सर्वमस्थिरंभासते, पुनरस्मिञ्जगति प्राणिनोभूयसाश्रमेण मणिमौक्तिकराज्यविभवकलत्र पुत्रादिसमृद्धिंलभन्ते, तथाऽपि तत्सर्वमत्रैव तिष्ठति, किमपि सार्द्धं न व्रजति, जीवोऽयमेकाकी रिक्तहस्तोभवान्तरंप्रयाति—उक्तञ्च—धनानि भूमौ पशवश्च गोष्ठे, भार्या गृहद्वारि जनाः स्मशाने। देहश्चितायां परलोकमार्गे, धर्मानुगो गच्छति जीव एकः ॥ १ ॥ एवंक्षणविनाशस्थितिकंसंसारस्वरूपंविज्ञाय मे मानसमतीव विरक्तीभूतमितोमे संसारवासो न रोचते, तस्मादधुना मामनुमन्येथे तदाऽहंभवरोगमहौषधंचारित्रंस्वीकरोमि, यतःकर्मवैरिविजेतरि परमोपकारकारिणि भगवति तीर्थनायके मे भूया-न्स्नेहःप्रादुर्भूतः। इदानींयावद्वृथैव मया जन्म व्ययितम्। किंबहुना ? युष्माकंसंमतौ सत्यामसत्यामपि चारित्रंगृहीष्यामि—यतः—

बुभुक्षितः स्वात्मसुखानुरक्तः, सुधामुधाकारिरसानुविद्धम्। सुभोजनं स्वाननसन्निधिस्थं, कः स्वादितुं वाञ्छति नैव सुज्ञः ॥ १ ॥ इति निजभर्त्तुरभिप्रायंविदित्वा गुणावलीप्रेमलालक्ष्म्यौ भवाब्धौ तंस्थिरीकर्त्तुमनेकानुपायानकुर्वाताम्। तथाऽपि सकल-स्तद्युक्तिप्रयोगोवैराग्यवासितमानसंतंनरपतिंनाऽस्पृशत्। ततोविज्ञाततद्भावाभ्यांताभ्यामपि पथ्यस्तत्संकल्पोऽनुमेने। ततःपुल-

किताङ्कश्चन्द्रराजोगुणावलीनन्दनंगुणशेखरंराज्येऽतिष्ठिपत् , मणिशेखराद्यन्यकुमारेभ्यश्च सम्यग्विभज्य नानादेशानदात् । सर्वेऽपि राजकुमारास्तृप्तिमापन्ना गुणशेखराधिपशासनंमेनिरे । ततःसंसारमसारंमन्यमानास्तस्य सप्तशतमहिष्योगुणावलीप्रमुखाः सुमतिमन्त्री शिवकुमारश्च योजिताञ्जलयःसविनयं तं प्रोचुः । स्वामिन् ! संसारवासोऽय,-मस्मभ्यं नैव रोचते । अतः सार्द्धं त्वया दीक्षां, गृहीष्यामो वयं किल ॥ १ ॥ निशम्यैतद्वचस्तेषां, प्रमोदपूरितो भृशम् । प्रशशंस गुणान्वेषी, सोऽपि सर्वान् शुभार्थिनः ॥ २ ॥ अथपितृभक्त्या गुणशेखरमणिशेखरौनिजविभवाऽनुसारेण जिनशासनोन्नतिहेतुकंप्रचुरधनसाध्यंदीक्षामहोत्सवंव्यधत्ताम् । चन्द्रराजोमहता महेन सपरिवारःसुव्रतस्वामिनःपादान्तिकेऽनिवारितदानेन दीनादीन्समुद्धरन्नगमत्-जगत्प्रभुं-वन्दित्वा यथास्थानंसर्वे समुपविष्टाः । प्रभुणा भवोदधितारिणी तत्त्वदेशना प्रारभ्यत-तद्यथा-अवश्यं यातार-श्चिरतरमुषित्वाऽपि विषयाः, वियोगे को भेद-स्त्यजति न जनोयत्स्वयममून् । व्रजन्तः स्वातंत्र्या-दतुलपरितापाय मनसः, स्वयं त्यक्ताऽस्त्वेते, शमसुखमनन्तं विदधते ॥ १ ॥ न संसारोत्पन्नं, चरितमनुपश्यामि कुशलं, विपाकः पुण्यानां, जनयति भयं मे विमृशतः । महद्भिः पुण्यौघै-श्चिरपरिगृहीताश्च विषयाः, महान्तो जायन्ते, व्यसनमिव दातुं विषयिणाम् ॥ २ ॥ श्रियो दोलालोला-विषयजरसाः प्रान्तविरसाः, विपद्गेहं देहं, महदपि धनं भूरिनिधनम् । वृहच्छोको लोकः, सततमबला दुःखबहुलास्तथाऽप्यस्मिन्घोरे, पथि बत रता हन्त कुधियः ॥ ३ ॥ एता याः प्रेक्षसे लक्ष्मी-श्छत्रचामरचञ्चलाः । स्वप्न एष महाबुद्धे ! दिनानि त्रीणि पञ्च वा ॥ ४ ॥ नन्दन्ति मन्दाः श्रियमाप्य नित्यं, परं विषीदन्ति विपद्गृहीताः । विवेकदृष्ट्या चरतां नराणां, श्रियो न किञ्चिद्विपदो न किञ्चित् ॥ ५ ॥ मरणं प्रकृतिः शरीरिणां, विकृतिर्जीवनमुच्यते बुधैः । क्षणमप्यवतिष्ठते विद-न्यदि

जन्तुर्ननु लाभवानसौ ॥ ६ ॥ नलिनीदलगतजलमतितरलं, तद्वज्जीवितमतिशयचपलम् । विद्धि व्याध्यभिमानग्रस्तं, लोकं शोकहतञ्च समस्तम् ॥ ७ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं, तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते, जीवे वारितरङ्गबुद्बुदसमे सौख्यं कुतः प्राणिनाम् ॥ ८ ॥ आक्रान्तं मरणेन जन्म जरया यात्युल्बणं यौवनं, सन्तोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः । लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-रस्थैर्येण विपत्तयोऽप्युपहता ग्रस्तं न किं केन वा ॥ ९ ॥ भोगास्तुङ्गतरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः, स्तोकान्येव दिनानि यौवनसुखं स्फूर्त्तिः क्रियास्वस्थिरा । तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका-लोकाऽनुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ १० ॥ भोगा मेघवितानमध्यविलसत्सौदामनीचञ्चला-आयुर्वायुविघट्टिताऽभ्रपटलीलीनाम्बुवद्भङ्गुरम् । लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं, योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ! ॥ ११ ॥ आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-रर्थाः सङ्कल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः । कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं, ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥ १२ ॥ तथा च—क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः, सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः । ध्यातं वित्तमहर्निशं नियमितप्राणैर्न जैनं पदं, तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥ १३ ॥ किञ्च—आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः । जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्, तत्किं तेन निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम् ॥ १४ ॥ जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं, पुत्रा मित्रमरातयो वसु बलं विद्या सुहृ-

द्रान्धवाः। चित्तस्पन्दितकल्पनामनुभवन्विद्वानविद्यामयीं, निद्रामेत्य विघूर्णितो बहुविधान्स्वप्ननिमान्पश्यति ॥ १५ ॥ भव्या-स्ततो बाह्यसुखाऽभिपङ्कं, हित्वाऽञ्जसा नित्यसुखं श्रयद्धम् । निराश्रयं निर्मलमात्मनीनं, येनाऽपुनर्जन्म जना लभन्ते ॥ १६ ॥

इतिप्रभुदेशनाऽमृतपानेन सविशेषमुल्लसन्मनःचेत्रश्चन्द्रराजःसुदिनंमन्यमानोऽधिकाऽधिकांभावनांभावयामास—धन्योऽस्मि लोकेषु महामहिम्न—स्त्रिलोकनाथस्य पदं प्रपन्नः । क्वाऽहं विमूढः क्षितिभारधारी, क्वेदञ्च वृत्तं मुनिपालनीयम् ॥ १ ॥ प्रा-चीनपुण्योपचयः प्रकामं, शुभार्थिनो मे फलितोऽद्य हृद्यः । कुतोऽन्यथा स्थावरजङ्गमाना—मीशं जिनं द्रष्टुमहं समर्थः ॥ २ ॥ शक्रादयोदेवास्तत्रागतास्तस्मै नरेन्द्राय धन्यवादमवीवदन् । ततोगुणशेखरप्रमुखा राजसुता विहिताञ्जलिपुटाःप्रभुंप्रार्थयामासुः। भगवन् ! जगदाधार !, शिवशर्माभिलाषिणः। व्रतशिक्षाप्रदानेना—ऽनुगृहाण नृपादिकान् ॥ १ ॥ प्रभो ! त्वत्कृपया नावा, दुस्तरोऽपि भवार्णवः । सुतरो जायते सद्य—स्त्वद्भक्तिभरितात्मनाम् ॥ २ ॥ ततोविज्ञाततद्भावोभगवान् कांस्यभाजनस्थपयो-बिन्दुवन्निर्लेपंचन्द्रचित्तंजानन्नपि तं धर्मे दृढीकर्तुंस्वान्तिके समाहूय निजगाद—

हेचन्द्र ? चन्द्रनिभशैत्यगुणाकरोऽसि, चारित्ररत्नमनघं यदवाप्तुमद्य । उद्युक्तवानचलबुद्धिरसि क्षितीश !, योग्यं तदस्ति भवतः सुकुलप्रसूतेः ॥ १ ॥ केचित्सुकृतिनोऽचिरेण गृहीतचारित्राः सिंहवदन्यांस्तारयन्तःस्वयंभवोदधिसमुत्तरन्ति । किन्तु चारित्रपालनमतिदुष्करम्—निशातखड्गाग्रगतिर्विधेया, पिण्डा हिभक्ष्या नृप? वालुकानाम् । सह्याश्च कृच्छ्रेण महोपसर्गा—श्चारि-त्रसंराधनमेव दुष्करम् ॥ १ ॥ मदनदशनवृन्दैश्चर्वयन्ति क्षुधार्त्ताः, क्वचिदिह चणकान्द्रागायसान्पर्वताग्रात् । पतनमपि विकाले कुर्वते क्षारसिन्धो—स्तरणमपि सुसाध्यंपाल्यते दुखतस्तत् ॥ २ ॥ व्रतपालनमेव दुष्करं, भवदावानलतप्तदेहिनाम् । इतरत्सुकरं

प्रकीर्त्तितं, विविधासक्तिविवर्द्धनक्षमम् ॥ ३ ॥ निखिलं प्रविहाय साधनं, जिनदीक्षां बहवो भजन्तिवै । गुणिनस्तु तरन्ति केवलं, न हि सुलभं प्रभुतास्पदं नृणाम् ॥ ४ ॥ त्यजन्ति ये नराः क्षुद्रा—गृहीत्वा व्रतमुत्तमम् । महाऽनर्थपराभूता—भ्रमन्ति भववारिधौ ॥ ५ ॥ चारित्रारित्रसाहाय्या—ल्लब्धसद्गुणपोतकाः । घोरं संसृतिपाथोधिं, तरन्ति तरसा नराः ॥ ६ ॥ भीरवो व्रतिनो भ्रष्टा—दुरन्तां दुर्गतिं गताः । पापच्यन्ते बलक्षीणाः, प्रमादो हि विघातकृत् ॥ ७ ॥ अतोमनीषिभिर्यद्विधेयंतत्सम्यग्विचार्यैव विधातव्यं येन पश्चात्तापो न जायते । चन्द्रराजःप्रोवाच—स्वामिंस्त्वदीयवचनामृतमद्य पीत्वा, हृद्यं विशुद्धिजनकं प्रगतोऽस्मि तृप्तिम् । चारित्रपालनमिहास्त्यतिदुष्करं त—द्वीरोर्जनस्य सुतरां न तु मादृशानाम् ॥ १ ॥ जगत्प्रभुस्तथाविधांतस्य-बलीयसींभावनामाकलय्यचारित्रदाने निजाऽभिप्रायंदर्शितवान् । ततश्चन्द्रनृपो हृष्टो—यथाऽहिःकञ्चुकीं स्वयम् । सर्वानुत्तारयामास स्वलङ्कारान्विरक्तधीः ॥ १ ॥ दुष्कर्मभूरुहाणां, मूलानीवोद्धरन् शिरःकेशान् । विरराज चन्द्रराजः, प्रारब्धाचारसत्क्रिया-काण्डः ॥ २ ॥ अथ कल्पविदात्मज्ञो—भगवाँल्लोकपावनः । मुनिवेषं ददौ तस्मै, भववार्धिमहातरीम् ॥ ३ ॥ शिवभार्यां वशीकर्तु-मिव चूर्णं ततोऽक्षिपत् । प्रभुस्तच्छिरसि प्रेम्णा, नम्रे सुरभयन्दिशः ॥ ४ ॥ अथैतस्मिन्क्षणे देवाः, शक्रमुख्याः प्रचिक्षिपुः । वासचूर्णं नभोमार्गं, पूरयन्तो नृपोपरि ॥ ५ ॥

ततः समयविज्जगत्स्वामी महाव्रतान्युच्चारयामास, ततश्चन्द्रराजर्षिंसुराऽसुरनरेन्द्रा ववन्दिरे, सुमतिमन्त्रीश्वरोऽपि हितोद्यतस्तस्मिन्समये भवार्णवतारिणींदीक्षामग्रहीत्—गृहावासस्थोऽयं, व्यधित सचिवत्त्वं नरपतेः, कृतश्च क्षेमत्वं, नरपतिजनानां बहुतरम् । इदानींनिर्वृत्तो—ऽक्षयसुखसमीक्षादृढमतिः,मुनिर्भूत्वा जज्ञे,निजपतिनिदेशैकवशगः ॥ १ ॥ अथविदितभवस्वरूपः

शिवकुमारःसंसृतिदायिनींपैतृकींनटक्रियांदूरतस्त्यक्त्वालोकवंशाग्रेदुरारोहांक्रियांदिदर्शयिषुरपूर्वनटत्वमङ्गीचक्रे-चारित्रचित्रक्रियया स्वकीय-मात्मानमुद्धर्त्तुमनाः स भव्यः । लोकोत्तरं वर्त्म यथाविधिज्ञः, समाससादोज्झितबाह्यभावः ॥ १ ॥ गुणावलीप्रेमलालक्ष्मीशिवमालाप्रमुखा अन्या नृपाङ्गना भवाटवींभुजङ्गीमिव मन्यमानाःस्वपतिमार्गानुसारिण्यश्चारित्ररत्नं स्वीचक्रुः । भव्याः सर्पमिव त्यजन्ति विभवं राज्यादिकं नश्वरं, भोगान्रोगहतान्भवार्त्तिजनकाँच्छत्रूनिवामन्वते । सौहार्दग्रथितं निजं परिजनं जानन्ति विघ्नप्रदं, सद्विज्ञानरसप्रियाः प्रियतरं काङ्क्षन्ति निःश्रेयसम् ॥ १ ॥ ततश्चापरे सर्वविरतिंपालयितुमक्षमाः प्रभुपादान्ते विविधान्व्रतनियमान् जगृहिरे । सम्यक्समाराधित एष धर्मः, सम्यक्त्वमूलो हतकर्मशूलः । येनेह जन्मान्तरितस्य तस्य, स्वर्गापवर्गस्य सुखं न दूरम् ॥ १ ॥ ततोऽन्यत्र विहर्त्तुमिन्द्राद्यष्टादशभिर्गणभृद्भिश्चन्द्रादिमहर्षिभिश्चपरिवृतोभगवान्नक्षत्रगणैर्विराजितश्चन्द्र इव जगाम, निजपादपद्मेनभूतलंपवित्रयतःस्वामिनोभक्त्येवपादपाःप्रणताअभूवन्, कण्टकगणाश्चाधोमुखाः शकुनाश्च प्रदक्षिणा जज्ञिरे, ऋतुगणोऽपीन्द्रियार्थानुकूल्यंभजतेस्म, वायुरप्यनुकूलो ववौ, त्रिजगद्भर्त्तुःपार्श्वे जघन्यतोदिवौकसामेकाकोटिरभवत् । त्रिभुवनपतेः केशाः श्मश्रुनखाश्चभवान्तरोद्भूतकर्मच्छेदालोकभयादिव नावर्द्धन्त, यत्रयत्रस्वामिनोगमनंतत्रवैरमारीतिवृष्टिदुर्भिक्षस्वचक्रपरचक्रभयानावृष्टिप्रमुखाउपद्रवा न भवन्ति । यतः—निखिलजनमनःसुखंपादयद्भिर्नितान्तं, स सुखमतिशयैर्यो-भूप्रदेशं मरुद्वत् । विहरति सह चित्रं,क्षोभयन्दुर्विपाकान्,सुरनरगणसेव्यस्तीर्थनाथोविनाथः ॥ १ ॥ यतोमुनीन्द्रा नैकत्र तिष्ठन्ति—चिरमेकत्रवासेन,वर्द्धते रागभावना । विरागमूला यतयो-योग्याहारविहारिणः ॥ १ ॥ आपगानामिवाम्बून्य-प्रतिबद्धानि नित्यशः । मुनीनांनिर्मलान्येषां,भवन्ति हृदयानि वै ॥ २ ॥ अथ विहितपञ्चाङ्गप्रण-

तयोधर्मलाभाशिषोवहमाना गुणशेखरादयस्तमनुजग्मुः, ततो निवर्त्तमानाःसर्वे सपरिवारंप्रभुंवन्दित्वा स्वस्वाभिधेयग्रहणपूर्वकं-प्रोचुः। भगवन्तः! इतोनिर्गता यूयमस्मासुसर्वथानिःस्नेहाभविष्यथ, यतः—मथितहृदयशान्ति दुष्टभावाङ्कुराणां, सजलजलधरं द्राक् हृद्यसन्तोषशोषम्। प्रथितविपुलकीर्त्तिद्योभकं लोकरागं, शमितविकृतिवर्गा वर्जयन्ते मुनीन्द्राः ॥ १ ॥ वयन्तु संसार-वासिनोयुष्मद्विषये निःस्नेहतांकथंगमिष्यामः,भवद्भिर्विस्मरिष्यमाणाअपिवयंभवद्विस्मरणे नप्रभवः,—तात! ताततेति जल्पन्तः, सुतास्तृप्तिं प्रयान्ति नो। चिरन्तनो हि सम्बन्धो-दुस्त्यजो भववासिनाम् ॥ १ ॥ तथा च—छद्मस्था नविजानतेधृतिमतां धैर्यप्रभावं परं, मौनं मौनवतां सदैव सुखदं शंसन्ति नो वाग्मिनः। नाचारं प्रविदन्ति वारवनिता धर्मार्थिनीनां शुभं, सन्तः सद्गुणसेविनो हि नितरां सद्भावनां जानते ॥ २ ॥

इतिश्री चन्द्रराजचरित्रे चतुर्थोल्लासे दशमः सर्गः ॥ १० ॥

भगवन्! त्वया ज्ञातसारेणेयंराज्यसम्पत्तिः परिहृता, मुग्धमतिभिरस्मादृशैः कथं सा त्यज्यते? मुनिपुङ्गव? चिरकालीन मस्माकंस्नेहंदैहिकंमलमिवविनिर्भिद्य शाश्वतसुखनिदानमद्वितीयपथमापन्नोऽसि। भव्या दिनानिगमयन्ति मुधा न विज्ञा-ज्ञाते हि तत्त्वनिचये किमु मूढभावः। नेत्रप्रदीपमनवाप्य जनोऽन्धकारे, दक्षोऽपि वस्त्वनुभवं कुत एव कुर्यात् ॥१॥ भगवन्! तपश्चारिणांभवद्विधानांनिःस्पृहाणामस्मास्वधीनंकार्यं कुतःकल्पते? यतः—यस्माद्विघ्नपरम्पराविघटते दास्यं सुराःकुर्वते, कामः शाम्यतिदाम्यतीन्द्रियगणःकल्याणमुत्सर्पति। उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यत्कर्मणां, स्वाधीनं त्रिदिवं करोति च शिवं श्लाघ्यं तपस्तन्न किम्? ॥१॥ परन्त्वस्माकमेषा सविनयाऽभ्यर्थना भवताऽर्थवती विधातव्या-प्रभो? नैवोपेक्ष्यास्तव पद-

कजध्याननिरताः, भवाटव्यां व्यग्रा-वयमनघ! तापत्रयहर?। विबोद्धव्या भूयः, प्रवचनवचोभिर्निजजनाः, न विस्मर्त्तुंशक्ता-विभुगुणयुजो हि श्रितघताम् ॥ १॥ वितीर्णधर्मलाभाशीश्चन्द्रराजर्षिस्तानवादीत्—भवकोटीदुष्प्रापा-मवाप्य नृभवादिसकलसामग्रीम्। भवजलधियानपात्रे, धर्मे यत्नः सदा कार्यः ॥ १॥ व्याकुलेनाऽपि मनसा, धर्मः कार्यो निरन्तरम् । मेढीबद्धोऽपि हि भ्राम्यन्, घासग्रासं करोति गौः ॥ २॥ भवन्ति भूरिभिर्भाग्यै-र्धर्मकर्ममनोरथाः। फलन्ति यत्पुनस्ते तु, तत्सुवर्णस्य सौरभम् ॥३॥ चत्वारः प्रहरा यान्ति, देहिनां गृहचेष्टितैः। तेषां पादे तदर्द्धे वा, कर्त्तव्यो धर्मसंग्रहः ॥४॥ अनित्यानि शरीराणि, विभवो नैवशाश्वतः । नित्यं संनिहितो मृत्युः, कर्तव्यो धर्मसंग्रहः ॥५॥ उत्थायोत्थाय बोद्धव्यं, किमद्य सुकृतं कृतम्। आयुषःखण्डमादाय, रविरस्तमयं गतः ॥ ६ ॥ जानाति यज्जीवति नैव देही, सम्बन्धिनोऽवैति च मृत्युमाप्तान् । स्वं ग्रस्यमानंजरसाऽवगच्छ-न्नदुर्मतिर्धर्ममतिस्तथाऽपि ॥७॥ यस्य त्रिवर्गशून्यानि, दिनान्यायान्ति यान्ति च । स लोहकारभस्त्रेव, श्वसन्नपि न जीवति ॥ ८॥ धर्मो जगतः सारः, सर्वसुखानां प्रधानहेतुत्वात् । तस्योत्पत्तिर्मनुजात्, सारं तेनैव मानुष्यम् ॥ ९॥ विलम्बो नैव कर्त्तव्य-आयुर्याति दिने दिने । न करोति यमः क्षान्ति, धर्मस्य त्वरिता गतिः ॥ १० ॥ यावच्चित्तं च वित्तं च, यावदुत्सहते मनः । तावदात्महितं कुर्या-द्धर्मस्य त्वरिता गतिः ॥ ११ ॥ स्थैर्यं सर्वेषु कार्येषु, शंसन्ति नयपण्डिताः । बह्वन्तरायविघ्नस्य, धर्मस्य त्वरिता गतिः ॥ १२ ॥ प्रहरद्वयमार्गेऽपि, नराः कुर्वन्ति शम्बलम् । न कुर्वन्ति परत्रार्थे, वर्षकोटीप्रयाणके ॥ १३ ॥ तथाच—ग्रामान्तरे विहितशम्बलकः प्रयाति, सर्वोऽपि लोक इह रूढिरिति प्रसिद्धा । मूढस्तु दीर्घपरलोकपथप्रयाणे, पाथेयमात्रमपि नो विदधात्यधन्यः ॥ १४॥ जागर्त्ति यावदिह कालभुजङ्गमो न, पञ्चाननः स्वपिति यावदयं च कामः । यावद्विवे-

कनिहिताऽस्ति च कालरात्रि-र्निर्गच्छ संसृतिवनाभ्भृतोऽङ्ग ? तावत् ॥ १५ ॥ यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा, यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्, संदीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ॥ १६ ॥ आयुर्वर्षशतं नृणां परिमितं रात्र्या तदर्द्धीकृतं, तस्यार्द्धस्य कदाचिदर्द्धमधिकं वार्द्धक्यबाल्ये गतम् । शेषं रोगवियोगशोकमदनक्रोधादिभिर्व्याकुल-स्यायुर्याति नरस्य तत्र कतमो यो धर्मकर्मक्षणः ॥ १७ ॥ बालः प्रायो रमणासक्त-स्तरुणः प्रायो रमणीरक्तः । वृद्धः प्रायश्चिन्तामग्न-स्तदहो धर्मे कोऽपि न लग्नः ॥ १८ ॥ किञ्च—निर्दन्तः करटी हयो गतजयश्चन्द्रं विना शर्वरी, निर्गन्धं कुसुमं सरोगतजलं छायाविहीनस्तरुः । रूपं निर्लवणं सुतो गतगुणश्चारित्रहीनो यति-र्निर्देवं भवनं न राजति तथा धर्मं विना मानवः ॥ १९ ॥ राज्यं निःसचिवं गतप्रहरणं सैन्यं विनेत्रं मुखं, वर्षा निर्जलदा धनी च कृपणो भोज्यं तथाऽऽज्यं विना । दुःशीला दयिता सुहृन्निकृतिमान् राजा प्रतापोज्झितः, शिष्यो भक्तिविवर्जितो न हि विना धर्मं नरः शस्यते ॥ २० ॥ तोयेनेव सरः श्रियेव विभुता सेनेव सुस्वामिना, जीवेनेव कलेवरं जलधरश्रेणीव वृष्टिश्रिया । प्रासादस्त्रिदशार्चयेव सरसत्त्वेनेव काव्यं प्रिया, प्रेम्णेव प्रतिभासते न रहितो धर्मेण जन्तुः क्वचित् ॥२१॥ भो भो भवभीरवः !—न्यग्रोधे दुर्लभं पुष्पं, दुर्लभं स्वातिजं पयः । दुर्लभं मानुषं जन्म, दुर्लभं देवदर्शनम् ॥ २२ ॥ अनर्घ्याण्यपि रत्नानि, लभ्यन्ते विभवैः सुखम् । दुर्लभो रत्नकोट्यापि, क्षणोऽपि मनुजायुषः ॥ २३ ॥ केऽप्याप्तमपि पुण्येन, तत्प्रमादपरायणाः । हारयन्ति नराः सुप्ता-इव चिन्तामणिं करात् ॥ २४ ॥ मानुष्यमार्यविषयः सुकुलप्रसूतिः, श्रद्धालुता गुरुवचःश्रवणं विवेकः । मोहान्धिते जगति संप्रति सिद्धिसौध-सोपानपद्धतिरियं सुकृतैकलभ्या ॥ २५ ॥ यतः—देवा

विषयप्रसक्ता—नैरयिका विविधदुःखसंतप्ताः । तिर्यञ्चो विधिविकला—मानुष्याणां हि धर्मसामग्री ॥ २६ ॥ मानुषं भवमवाप्य दक्षिणा—वर्त्तशङ्खवदमुं भवाम्बुधौ । पूरयेत्सुकृतगाङ्गवारिणा, प्राप्तवृत्तिसुरया न चोत्तमः ॥ २७ ॥ आर्यदेशकुलरूपबलायु—र्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्मकर्म न करोति जडो यः, पोतमुज्झति पयोधिगतः सः ॥ २८ ॥ यः प्राप्य दुष्प्रापमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः । क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिं पातयति प्रमादात् ॥ २९ ॥

अतोमर्त्यजन्म मुधा न हातव्यंविवेकिभिः । यतः—स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते, पीयूषेण प्रवरकरिणं वा-हयत्येधभारम् । चिन्तारत्नं विकिरति कराद्वायसोड्डायनार्थं, यो दुष्प्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः ॥ १ ॥ धर्माराधन-मेव शान्तिसदनं निर्मत्सराणां सतां, संपत्तिप्रकरास्पदं सुललितक्षेमर्द्धिसंपादकम् । चिन्तरत्नमहोदधिः किमपरं स्वर्गापवर्ग-प्रदं, तस्मिन्सर्वगतैरतः सुकृतिभिर्यत्नो विधेयः सदा ॥ २ ॥ रोगग्रस्तमिदं कलेवरमसौ कौटुम्बवर्गोऽस्थिरो-विद्युद्द्योत इवाऽस्ति भूरिविभवो यत्नेन संमेलितः । अक्षाणां पटुता न भाति सुचिरं मृत्युर्भटः सन्मुख-स्तस्मात्संसृतिमोचने सुविहिते धर्मे यतध्वं जनाः ? ॥ ३ ॥ संसारं वधबन्धकष्टकलितं व्यामोहसंपादकं, विज्ञायाऽस्थिरमन्वहं शिवसुखप्रत्यर्थिनं भावुकाः ! । नो कार्या मृगतृष्णिकोपमचले सांसारिके शर्मणि, सद्ध्यानैकनिमग्नपीवरसुखैर्व्यर्थाऽभिलापा क्वचित् ॥ ४ ॥ प्राज्यं राज्यमन-ल्पकल्पनिधयः सम्बन्धिनो बान्धवाः, ॥ सर्वे त्रातुमलं न कर्मकलितं जन्मान्तरे देहिनम् । तस्मान्मित्रकलत्रपुत्रविषयां निर्ब-न्धतां मा कुरु, धर्माऽधर्मविचारणां च सततं सम्यक्तया स्वीकुरु, ॥ ५ ॥ सेवस्व स्वगुरूपदिष्टवचनं सम्यक्त्वमूलं तथा, मा धेहि क्षणिकं ममत्वमखिले दृश्यात्मके वस्तुनि । तत्त्वाऽतत्त्वविवेकमुन्नतिकरं बुद्ध्यस्व शुद्धात्मना, स्वान्तभविय मोक्षमार्गमनघं

रे जीव ? सर्वत्रगः ॥ ६॥ इतिवितीर्णोपदेशश्चन्द्रराजर्षिर्भूप्रदेशंपावयन्नन्यत्र विजहार, गुणशेखरप्रमुखाःसर्वे साश्रुनयनाः पुनः पुनस्तंमुनीन्द्रंविलोकमाना दृष्टिपथंयावद्गत्वा निवृत्ताःस्वस्थानमागताः। इतोमुक्तिमार्गंसाधयँश्चन्द्रराजर्षिर्ज्ञानवयसा स्थविरंमुनिराजंनिषेवमाणस्तत्त्वबोधमाकलयामास,—दिने दिने चारुचरित्रलीलां, विस्तारयन्सोऽतिविशुद्धशीलः। सम्यक्त्वमूलं सकलं क्रियार्थं, यथाविधि स्वं विशदीचकार ॥१॥ अथसुचरितमुनिधर्मौ सुमतिशिवकुमारावपि तत्त्वाऽभ्यासंकुर्वाणौ चन्द्रमुनिंसविनयंपर्यचरताम्—विनयेन विना सर्वं, वृथैव गुरुसेवनम्। तत्त्वार्थविकलं वाक्यं, यथा कण्ठविशोपकम् ॥ १ ॥ तथाच—विद्यावन्तो विनीताः प्रसभमभिसभं वाक्प्रपञ्चेषु धीराः, के वा नैवाश्रयन्ते त्रिजगति विततां कीर्त्तिवल्लीमतल्लीम्। तेषामाधारभावं भुवनभरभृतो बिभ्रतो ये लसन्ते, ते तु त्रैलोक्यतुङ्गा विमलफलजुषः स्वःपतिं स्वल्पयन्ति ॥ २ ॥ विद्या विनयोपेता, हरति न चेतांसि कस्य मनुजस्य। काञ्चनमणिसंयोगो—नो जनयति कस्य लोचनानन्दम् ॥ ३ ॥ सत्यं तपो ज्ञानमहिंसता च, विद्वत्प्रणामश्च सुशीलता च। एतानि यो धारयते स विद्वा—न्न केवलं यःपठते स विद्वान् ॥ ४ ॥ सर्वगुणेषु विनयस्य प्राधान्यम्—विनयेन भवति गुणवान्, गुणवति लोकोऽनुरज्यते सकलः। अनुरक्तस्य सहायाः, ससहायो युज्यते लक्ष्म्या ॥ ५ ॥

तथैव गुणावलीप्रमुखाःसाध्व्यःप्रवर्त्तिनीपादपद्मंनिषेवमाणा निजाचारमशिक्षन्त,—सदाचारमयं शीलं, सदाचारयुतं व्रतम्। सदाचारप्रिया लोकाः, शस्यन्ते विबुधैरपि ॥ १ ॥ शीलं सतीनां प्रथमं निगद्यते, शीलात्परं नैव महाविभूषणम्। एतत्सदाचारनिदानमुच्यते, ततोऽतियत्नेन स साध्य एकः ॥२॥ ज्ञानाभ्यासञ्च कुर्वन्त्यस्तास्तपोजपादिसत्क्रियामपि व्यातेनुः। "यतो—ज्ञानक्रियाभ्यां मोक्षः"। ज्ञानक्रियाविहीनस्य, विद्याजालं निरर्थकम्। नैकचक्रेण संयाति, रथोदम्यनियोजितः ॥१॥

ज्ञानरत्नविहीनस्य, हस्तिस्नानमिव क्रिया । आत्मशुद्धिकरं पुंसां–ज्ञानं भारः क्रियां विना ॥२॥ सिंहवच्चारित्रं गृहीत्वा तत्त्वज्ञानरत्नविहीनस्य, हस्तिस्नानमिव क्रिया । धर्माऽधर्मविवेकिनो-मानास्तत्परिपालयन्तःसर्वेऽप्यार्हतींशिक्षामखण्डितांमेनिरे–सर्वज्ञोदितशासनैकरसिकाश्चारित्रशुद्धिप्रियाः, धर्माऽधर्मविवेकिनो-मानास्तत्परिपालयन्तः सदा, सद्ध्यानाध्वनि संगताः सुमतयो भ्राजन्ति विघटिताऽनङ्गप्रधानारयः । भव्यान् भव्यपराक्रमाः सुललितं संबोधयन्तः सदा, सद्ध्यानाध्वनि संगताः सुमतयो भ्राजन्ति ते दीक्षिताः ॥ १ ॥ तथा च––अगाधमाशु श्रुतसागरं वरं, विगाहमाना गतमानरोपणाः । सम्यक्क्रियापाटवसत्कलाघवाः, संप्रापुरध्यात्ममणिं महोज्ज्वलम् ॥२॥ ततोनिजश्लाघांपरानिन्दाश्च भुजङ्गाभोगसमांमानयन्तस्ते परिहृतप्रमादामित्रा अप्रमत्ताभि-धसप्तमगुणस्थानस्थिता विचेरुः । अथ शरच्चन्द्रविशदशीलश्चन्द्रमुनिर्निरतिचारचारित्रंसमाराधयन् शुद्धतत्त्वज्ञानमपेक्षमाणःषट्सु जीवनिकायेषु दयाधर्मंप्रवर्त्तयन् सकलसत्त्वानविशेषतया विलोकयन् पुद्गलद्रव्यासक्तंचेतनद्रव्यंमूलगुणेन समुद्धरन् भेदज्ञानेन जडचैतन्ययोर्विभेदंजानन् साम्यादिगुणानेव तत्त्वतःस्वकीयान्मन्यमानोऽष्टप्रवचनमातृणामुत्सङ्गतटेषु नित्यंक्रीडमानः क्षमासिना मोहराजंपराजयन् मनोऽद्रिमूलायांसंवेगगंगायांनित्यानन्दमयंनिजात्मानंनित्यंस्नपयन् शरीरस्यन्दनं रत्नत्रिकसुयोगसद्ध्वनि वाहयन्, जिनोपज्ञधर्मविवेकाचलात्समासादितानुभवरसकूपिकः सौभाग्यभूपितसन्तोषाश्रयस्थितक्षायिकभावं प्रसाधयन्, सुमेरुकल्पानि महाव्रतानि निजौजसा वहमानः सर्वानिन्द्रियमृगान्मृगाधिप इव संवरवाटके निरुन्धन् समभावतया सुरासुर-मानवकृतोपसर्गान्सम्यक् सहमानोनिर्वन्धंविहरति––ये चारित्रबलाः क्षमायुधकरा दूरोज्झिता दुर्मदा–भिन्नाऽनेकमहोपसर्गसुभटाः साम्यश्रिया राजिताः । स्याद्वादक्रमसेविनः सुरगणैः संसेव्यमानक्रमा–स्तेषां मोक्षपदं सुदुर्लभतरं सान्निध्यमाशु व्रजेत् ॥ १ ॥ तथा च—प्रतिलोमाऽनुलोमांश्च, सहमानः परीषहान् । गुणानात्मगतान्सर्वान्, लभते मोक्षसाधकान् ॥ २ ॥ यथाऽग्नि-

तापादिगतं सुवर्णं, शुद्धिं परामर्हति भूषणाय । तथोपसर्गादिरिपोर्विजेता, निजात्मशुद्धिं लभते प्रकामम् ॥ ३ ॥ यथा यथा शान्तरसेन सिच्यते, आत्मक्षितिः स्निग्धतरा विजायते । तथा तथा शुद्धफलार्थदायिनी, सुवर्णवद् व्यक्ततया विराजते ॥ ४ ॥ यदात्मा शुद्धिसंपन्नो—जायते निर्मलक्रियः । तदैव सुलभा मोक्ष—सम्पत्तिः सुकृतार्थिनाम् ॥ ५ ॥ ज्ञानादिगुणसद्भावे, नित्यानन्दो न दुर्लभः । अध्यात्मरसिका लोके, विमुखा लौकिकात्सुखात् ॥ ६ ॥ एवंप्रवर्त्तमानश्चन्द्रमुनिःक्रमेण क्षपकश्रेणीं समारुह्य निर्जितमोहराजप्रबलबलोनित्यंप्रमोदते, यतः—ज्ञानिनां किमगम्यं स्याद्—दुर्जयं किमु भूतले । आत्मवीर्यसमर्थानां, सामर्थ्यं नैव पार्यते ॥ १ ॥ ततोऽवशिष्टानि घनघातिकर्माणि विनाशयितुंस सज्जीबभूव, क्रमादेकादशे चिक्कणके गुणस्थाने वर्त्तमानाः केचिद्देहिनोनिपतन्ति, चन्द्रराजर्षिस्तु निजलाघवयोगेन तद्गुणस्थानमस्पृशन् द्वादशकंक्षीणमोहाभिधंगुणस्थानमेव समधिगम्य चत्वारि घातिकर्माणि सर्वथा क्षपयित्वा त्रयोदशं गुणस्थानमाश्रित्य केवलज्ञानंकेवलदर्शनञ्च लेभे, आत्मज्ञानादि-गुणावरोधकाःकार्यरूपा ये कर्मपुद्गलास्ते कारणतामवापुः । आत्मप्रदेशेभ्यःपृथग्भूत्वा कर्मपरमाणुतांप्राप्ता इतिभावः । ततः समासादितयथाख्यातचारित्रश्चन्द्रमुनिःकेवलज्ञानभास्करोदये जाते लोकाऽलोकप्रकाशकोजातः । यतः—ज्ञानाद्विदन्ति खलु कृत्यमकृत्यजातं, ज्ञानाच्चरित्रममलं च समाचरन्ति । ज्ञानाच्च भव्यभविनः शिवमाप्नुवन्ति, ज्ञानं हि मूलमतुलं सकलश्रियां तत् ॥ १ ॥ ज्ञानं स्यात्कुमतान्धकारतरणिर्ज्ञानं जगल्लोचनं, ज्ञानं नीतितरङ्गिणीकुलगिरिर्ज्ञानं कषायाऽपहम् । ज्ञानं निर्वृतिवश्य-मन्त्रममलं ज्ञानं मनःपावनं, ज्ञानं स्वर्गगतिप्रयाणपटहं ज्ञानं निदानं श्रियः ॥ २ ॥ ज्ञानं कर्ममहीध्रभेदकुलिशं शंसन्ति मोहापहं, ज्ञानं भूषणमङ्गिनां वरधनं ज्ञानं जगद्दीपनम् । एतत्तत्त्वमतत्त्वमेतदखिलं ज्ञानेन विज्ञायते, लोकाऽलोकविलोकनैकपटवः

स्युर्ज्ञानदानाज्ञनाः ॥३॥ तद् ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः। तमसः कुतोऽस्ति शक्ति-र्दिनकरकिरणाग्रतः स्थातुम् ॥ ४ ॥ ततःस सकलजीवानांगमनागमनादिकान्सर्वभावान् हस्तामलकवदद्राक्षीत् । निर्भ्रान्तमनाश्च सर्वथा जातः । तदानींनिकटस्थायिनःसम्यक्त्वधारिणोदेवाःकृतघातिकर्मक्षयंकेवलिनं तं विदित्वा निजकल्पानुसारेण प्रभोर्ज्ञानोत्सवंकर्त्तुंयोग्य-संभारान्मेलयामासुः । अपूर्वसुवर्णकमलरचना विहिता प्राप्तप्रमोदैर्निर्जरगणैः । चन्द्रकेवलिना तत्रोपविश्य मोहजालविभेदिनी धर्मदेशना प्रारेभे—यथा च—अस्थिरा विद्यते लक्ष्मीः, प्रमत्तगजकर्णवत् । स्वप्नोपममिदं सर्वं, मत्वा धर्मं समाचर ॥ १ ॥ एकेऽद्य प्रातरपरे, पश्चादन्ये पुरः परे । सर्वे निःसीम्नि संसारे, यान्ति कः केन शोच्यते ॥ २ ॥ गतेनाऽपि न सम्बन्धो–न सुखेन भविष्यता । वर्त्तमानं क्षणातीतं, संगतिः कस्य केन वा ॥ ३ ॥ लब्धास्त्यक्ताश्च संसारे, यावन्तो बान्धवास्त्वया । न सन्ति खलु तावन्त्यो–गङ्गायामपि वालुकाः ॥ ४ ॥ मृत्युरासन्नतामेति, स्वायुर्यातिदिनेदिने । आघातं नीयमानस्य, वध्यस्येव पदे पदे ॥ ५ ॥ मूढाः श्रियं प्राप्य मुदं लभन्ते, विपत्तिमासाद्य विषादिनः स्युः । विवेकिनां नैव सुखाऽसुखानि, समानभावो हि सुखैकसाधनम् ॥ ६ ॥ हरिष्यमाणो बहुधा परस्वं, करिष्यमाणः सुतसंपदादि । धरिष्यमाणोऽरिशिरःसु पादं, न स्वं मरिष्यन्तमवैति कोऽपि ॥ ७ ॥ उत्तुङ्गवातायनगोपुराणि, गृहाणि वित्तानि दुरर्जितानि । क्षणादधःपातकराणि हन्त, चितातिथेरस्य निरर्थकानि ॥ ८ ॥ किञ्च—रेतःशोणितयोरियं परिणतिर्यद्वर्ष्म तत्राऽभव–न्मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य विश्रामभूः । जानन्नप्यवशी विवेकविरहान्मज्जन्विधाम्बुधौ, शृङ्गारीयति पुत्रकाम्यति बत चैत्रीयति स्त्रीयति ॥ ९ ॥

भोभव्याः ! अनित्येन शरीरेण नित्यसुखंसाधयत, प्रमादं मा कुरुत, पुनरिदंमानुष्यंदुर्लभं, तत्राऽपि सुगुर्वादियोगःसुदुर्लभः,

चिरार्जितसुकृतेनैव धर्मसाधनानि लभ्यन्ते, लब्ध्वाऽपि तानि मा विफलीकुरुत, इति सुधोपमांकेवलिदेशनांनिशम्य बहवो-भव्यजीवाःस्वजीवितंसफलयामासुः। ततोजङ्गमतीर्थीभूतश्चन्द्रकेवलीभूमिंपावयन्ननेकान्भव्यान्प्रतिबोधयामास, बालमध्यमोत्तमादिजीवान्यथायोग्यमुपदिशन् कतिचिच्चागम्यभावान्विशदीकृत्य ज्ञापयामास, एवंविहरन् क्रमेण स श्रीसिद्धाचलक्षेत्रमगमत्, अथ पावितात्मा स प्रभुध्याननिमग्नोभावनामभावयत्—पुराऽप्यहो ! तीर्थमिदं पवित्रं,पवित्रयन्मां हि महोपकारि। प्रान्तेऽपि चैतन्मम मुक्तिदायि, भविष्यति क्षेमपथं यियासोः ॥१॥ अत्रानन्ताऽनन्तमुनीन्द्राःसिद्धपदंप्राप्ताः, अस्य गिरिराजस्य स्मरणेन प्राणभृतां कर्मबन्धास्त्रुट्यन्तीत्यादिस्वरूपमनुभूय भवोद्विग्नःस तस्मिन्नेव स्थाने मासिकींसंलेखनांकृतवान्। वर्षसहस्रमेकंदीक्षापर्यायंपालयित्वा हायनानांत्रिंशत्सहस्राणिसर्वायुःप्रपाल्य प्रान्तेयोगनिरोधंकृत्वाचतुर्दशेऽयोगिगुणस्थाने पञ्चह्रस्वाक्षरोच्चारसमयप्रमाणंस्थित्वाऽघातिकर्मचतुष्टयंनिर्मूल्य लब्ध्वाऽनन्तवीर्याऽखेदाऽतीन्द्रियाक्षयतामेकसमयमात्रेण विहितोर्ध्वगमनःसिद्धस्थानंप्रपेदे। सर्वार्थसिद्धविमानोपरि द्वादशयोजनान्ते ईषत्प्राग्भाराऽभिधाना शिला वर्त्तते, तदुपर्येकयोजनंलोकान्तंचकास्ति, तत्र स्थितः स निराबाधतया चिरंप्रमोदते—यत्र स्थिताश्चिदानन्दा—राजन्ते सिद्धिगामिनः। यद्गत्वा न निवर्त्तन्ते,जराजन्मविवर्जितम् ॥ १ ॥ अथसुमतिशिवकुमारमुनिगुणावलीप्रेमलालक्ष्मीसाध्व्योऽपिक्रमेणक्षीणकर्माणःप्राप्तकेवलाःसिद्धस्थानमवापुः। शिवमालाप्रमुखसाध्वीपरिवारः सर्वार्थसिद्धविमानमवाप, ततश्च्युत्वा महाविदेहे मनुष्यत्वेनोत्पद्य सर्वास्ताः सिद्धिसुखंगमिष्यन्ति—सर्वेऽपि ते सिद्धपदानुभाजो—जाता जनिष्यन्ति च कर्मयोगात्। हेतुर्विभाव्योऽत्र विशुद्धशीलं, शीलप्रभावोऽस्ति वचोऽतिगम्यः ॥ १ ॥ शीलरत्नप्रभावेण तेषां कार्यसिद्धिरजनिष्ट, भो भव्याः ! चन्द्रराजवदन्योऽपि ब्रह्मव्रतंपालयन्मुक्तिसुखाद्विमुखो

न भवति, नवभिर्वृतिभिर्योदृढशीलोविमलगिरिंस्पृशति स चन्द्रवच्छान्तिसुधासेवी विजायते, शीलप्रभावश्चान्यत्राऽप्युक्तः।
सीतया दुरपवादभीतया, पावके स्वतनुराहुतीकृता। पावकस्तु जलतां जगाम य–त्तत्र शीलमहिमा विजृम्भितः ॥ १ ॥ तथा च—ऐश्वर्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमो–ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः। अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्वाच्यता, सर्वेषामपि सर्वकामगुणितं शीलं परं भूषणम् ॥ २ ॥ वेश्या रागवती सदा तदनुगा षड्भीरसैर्भोजनं, रम्यं धाम मनोरमं वपुरहो नव्यो वयःसंगमः। कालोऽयं जलदागमस्तदपि यः कामं जिगायादरात्, तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रप्रभुम् ॥ ३ ॥ श्रीमन्नेमिजिनो दिनोऽघतमसां जम्बूप्रभुः केवली, सम्यग्दर्शनवान् सुदर्शनगृही स स्थूलभद्रो मुनिः। साचङ्कारिसरस्वती च सुभगाः सीतासुभद्रादयः, शीलोदाहरणे जयन्ति जनितानन्दा जगत्यद्भुताः ॥ ४ ॥ प्रौढमहिमश्रीचन्द्रगुणवर्णनेन पवित्ररसनेन मया भव्यजनतारकाःशीलगुणा दृढीकृताः। सहृदयहृदयाश्चरित्रमिदमाकलय्य तुष्टिमन्तोभवन्तु। कुत्रचित्स्खलितार्थश्चेत्सुधीभिः समाधेयम्, कवियशोऽनभिलाषुकेण मया त्रपोपपादिबालचापल्यमिदं व्यधीयत, परं महतां गुणानुवादिनो मे महाँल्लाभोऽजनि–यतः—हृद्यं प्रबन्धमासाद्य, सज्जनाः सत्सु वत्सलाः। मोमुद्यन्ते गुणारामाः, सुप्रपामिव पक्षिणः ॥१॥ हसन्तु दुर्जना दोष–ग्राहिणो मम काक्षतिः ?। निर्मलं काव्यमेतद्धि, गुणिनां तुष्टिहेतवे ॥ २ ॥ चरित्रमेतच्चिरशर्मदायि, भव्यात्मनामस्तु सुचारु चान्द्रम्। वक्तुर्विशेषेण विशुद्धिहेतु–राचन्द्रं प्रविकासमीयात्॥३॥ शुभान्विते कर्मणि भावितात्मना, यथामति स्राग् यतनीयमन्वहम्। विराजते सद्गुणकीर्त्तनात्परो–न लज्जितव्यं निजदोषभीरुणा ॥४॥ " अपरिपक्वान्यक्काकारानपूपान्स्वादयतोऽपि देहिनः क्षुन्निवृत्तिर्भवत्येवेतिशम् "–नमोऽगनन्दावनिसंमितेऽब्दे (१९८०)

श्रीवैक्रमे श्रावणपौर्णमास्याम् । सम्पूर्णतांचन्द्रचरित्रमेत–ज्जगाम गीर्वाणगिरा निबद्धम् ॥ १ ॥

इतिश्रीगद्यपद्यात्मकेसंस्कृतप्रबन्धे चन्द्रराजचरित्रे शास्त्रविशारदजैनाचार्ययोगनिष्ठाध्यात्मज्ञानदिवाकरसकलतत्त्वोदधिपारगामि श्रीमद् बुद्धिसागरसूरीश्वरपादपङ्कजचञ्चरीकायमाण पसिद्धवक्तेत्यन्वर्थख्यातिमच्छ्रीमदजितसागरसूरिणा विनिर्मिते चन्द्रराजप्रकटन–वीरमतीवध–आभापुरीप्रयाण–संयमग्रहण–मोक्षपदलब्धिरूपाभिश्चतसृभिः कलाभिः सन्दृब्धे चतुर्थोल्लासे एकादशः सर्गः समाप्तः, प्रबन्धश्चायं संपूर्णतां गतः ॥ ॐ शान्तिः ३ ॥

## ॥ अथग्रन्थकारप्रशस्तिः ॥

यत्पादाम्बुजसेवनेन विबुधाः संसारपाथोनिधिं, तीर्त्वाऽऽनन्दपदं भजन्ति विपदं स्वप्नेऽपि नोजानते । दीव्यालङ्कृति-भासुराःसुरगणैरर्च्यार्श्च नित्योत्सुकै–स्त्रैलोक्याधिपतिं नमामि सततं श्रीवर्द्धमानं जिनम् ॥ १ ॥ यत्पादाम्बुजसेवको गण-भृतामाद्यः श्रियामास्पदं, श्रीमद्गौतमगोत्रको मुनिवरोऽभूदिन्द्रभूतिप्रभुः । लब्धीनां शिवसम्पदाश्च निखिलक्षेमप्रदः सेव-धि–र्यस्याऽखण्डवचोविलाससुलभःशुद्धागमो वर्त्तते ॥२॥ विजितसकलदोषः श्रीसुधर्मा गणीशो–ऽभवदनघविभूतिस्तीर्थकृद्-त्तपट्टः । शिवसुखमखिलानां भानावानां विधत्तां, स सुरनरवराणां वन्दनीयक्रमाब्जः ॥ ३ ॥ तत्पट्टपरम्परया, दशपूर्वधरो बभूव वज्रविभुः । जातिस्मृतिसद्विद्या–निरीहताढ्यो गुणालयः प्रवरः ॥ ४ ॥ श्रीवज्रशाखाधुर्या–ज्जज्ञे मुनिवज्रसेनतो विबु-

धात् । चान्द्रादिकुलोत्पत्तिर्भव्याम्बुजबोधनैकतिग्मांशोः ॥ ५ ॥ सच्छुक्लपक्षस्थितिरुज्ज्वलश्री-र्विध्वस्तदोषो गतनीलपङ्कः । सदोदितो नाशितमोहराशिः, श्रीचान्द्रवंशो विधुरन्य एव ॥ ६ ॥ ततः क्रमात् ख्यातगुणोऽभवज्जग-च्चन्द्रः सदाचाम्ल-तपोनुरक्तः । सूरीश्वरो लब्धगुरुप्रभाभरस्तस्मात्तपागच्छजनिर्बभूव ॥ ७ ॥ कल्याणराजिकलितोऽत्र तपोगणोऽयं,हेमाद्रिवद्दि-जयते स्थितिमाननल्पः । विश्वातिशायिविभवश्रमणानुयोगी, सद्धर्मशालिसुमनोभिरधिष्ठिताध्वा ॥ ८ ॥ तत्पट्टसन्ततिपरम्परया विधिज्ञः, श्रीहीरसूरिरभवत्क्षितिपप्रबोधी । सर्वत्र विश्वगुरुरित्यभिधां दधानो-ऽमारी प्रवर्त्तकवरो विशदप्रभावः ॥ ९ ॥ वाचकपदभूपयिता, सागरसहजो मुनीश्वरः श्रीमान् । तत्पट्टोदयभूधर-भानुविभां धारयन् वर्भौ जगति ॥ १० ॥ तत्पट्ट-पूर्वाचलसानुभानु-र्जितप्रवादिप्रकटप्रभावः । विशुद्धगीर्वाचकपुङ्गवोऽभू-त्सद्धर्मवादी जयसागराख्यः ॥ ११ ॥ तत्पट्टो-दयभूधरोष्णकिरणः संवेगरत्नाकरः, श्रीमद्वाचकमानसागरगणी सत्योपदेशाम्बुधिः । भव्यात्मप्रतिबोधनैक पटुधीर्धीमद्भिरा-सेवितः, सच्चारित्रपथक्रमप्रथयिता जज्ञे जगद्विश्रुतः ॥ १२ ॥ तदीयपट्टाम्बरभानुमाली, गुणातिशाली विजितान्तरारिः । श्री-समुद्धरन्भव्यगणान् गणीशो-भवाम्बुराशेर्जितसागरोऽभूत् ॥ १३ ॥ तत्पट्टामरनाथशैलशिखरं दीव्यश्रिया राजितः, श्रीमन्मङ्गलसागरो गणिवरोऽलञ्चक्रिवान्मेधया । भव्याम्भोजगणं स भानुविभया संबोधयन्भूतले, निर्बन्धं विहृतिं शुभोन्नति-करीं कर्त्तुं सदोद्योगवान् ॥ १४ ॥ तत्पट्टप्रवरश्रियं मुनिगणैः संवर्द्धयन्सर्वदा, सर्वज्ञोक्तसुधामयागमपटुः संविग्नशिष्यव्रजः । सर्वत्राऽप्रतिबद्धसङ्गतिरभूदुद्बोधयन्भाविकान्, सद्बोधाम्बुधिपद्मसागरगणिः सिद्धान्तवेद्यग्रणीः ॥ १५ ॥ तत्पट्टाद्रयसंपदं सुविशदां संवर्द्धयामासिवान्, श्रीसुज्ञानसरित्पतिर्जितमहावादिव्रजः संसदि । सद्विद्यामणिखानिरक्षतसुधीः शिष्यप्रशिष्य-

व्रतो-भव्याम्भोरुहराजिभानुरनिशं भास्वत्प्रभाभासुरः ॥ १६ ॥ यस्य शिष्योऽभवद्भूरि-प्रभावो **भावसागरः** । यदुपदेशतो आजन्मेदपाटनरेश्वरः ॥१७॥ **भीमसिंहाभिधो** जज्ञे, गुरुश्रद्धापरायणः । सोऽनेकसंघकार्याणि, विदधे भक्तिभावतः ॥१८॥ श्रीसंघस्याग्रहेणैव, तत्र यो मुनिपुङ्गवः । महोदयोदयपुरे-ऽजितनाथजिनेशितुः ॥ १९ ॥ पद्मनाथप्रभोश्चैव, प्रतिष्ठां सुखहेतवे । तथाञ्जनशलाकाञ्च, चकार विधिना शुभाम् ॥२०॥ तत्पट्टोदयसानुमद्दिनकरोऽदीनप्रभावोज्ज्वलः, संजज्ञेऽथ **सरूपसागरमुनि** र्वाचंयमानां धुरि । सद्बोधामृतवर्षणेन जनतां सन्तोषयन्सर्वदा, दध्रे ख्यातिमलौकिकीं भुवि जितक्रोधाद्यरिश्रेणिकः ॥ २१ ॥ तत्पट्टोरुसुमेरुसानुतरणिः क्षेमङ्करश्रीधरो, ज्ञानाब्धिः प्रवरप्रतापमहितो रेजे प्रभाभासुरः । कल्याणैकनिधिर्धिया विशदया सिद्धान्तपारंगमी, चारित्रं विमलं भजन्परजनाँस्तद्भाविनो व्यातनोत् ॥ २२ ॥ तत्पट्टश्रियमावभार सुमतिर्भव्याङ्गिनां संमतः, श्रेयःसन्ततिदायकः शुभरुचिः **श्रीमन्मयासागरः** । सिद्धान्तोदधिशीतभानुरनघो वैराग्यवल्लीघनो, जज्ञे ज्ञाननिधिर्जितेन्द्रियगणः सद्ध्याननिष्ठापरः ॥ २३ ॥ तत्पट्टमेरुशिखरे विमलप्रभावः, **श्रीनेमिसागरमुनिप्रवरो** रराज । शुद्धक्रियां प्रथयतिस्म समस्तसङ्घे, यः शुद्धशीलविभवः समतानिधानः ॥ २४ ॥ प्रतिग्रामपुरं यो हि, विहरन्विमलाशयः । अनेकभव्यजीवानां, बोधिबीजमदर्शयत् ॥२५॥ येषां चारित्ररत्नं बहुतरविमलं ज्ञानलक्ष्मीर्विभूषा, सद्भावः सत्क्रियायां विलसति रुचिरः शान्तभावः प्रधानः । सौम्याकारा सुमूर्त्तिर्जनहृदयमहामोददा संयतानां, सर्वेषां भावनीयाः शिवयुवतिवृताः क्षीणकर्मप्रभावाः ॥२६॥ पुरन्दराः सर्वमुनीश्वराणां, धुरन्धरा जैनमहोन्नतीनां, उद्धारकाः शुद्धतरक्रियाणा-माराधका ये च महाव्रतानाम् ॥ २७ ॥ तत्पट्टपूर्वाद्रिविभासमानो-भानुप्रभः **श्रीरविसागरोगुरुः** । वभौजितक्षीरनिधिप्रभावो-गुणैश्च गम्भीरतया स्वकीयैः ॥ २८ ॥ तत्पट्टप्रथित-

प्रभां सुललितं चारित्ररत्नं दधत्, सिद्धात्मा सुखसागरो मुनिवरो दध्रे क्रियाकौशलः। शुद्धाहारविहारबोधनपटुः प्रातः प्रगेयाभिधो–भव्यानां भवतारकः श्रुतवतां सम्यक्क्रियादर्शकः ॥२९॥ यो जैनसङ्घं विशदीचकार, समं सदाचारवृतोपदेशात्। प्रथीयसी यस्य विशुद्धकीर्त्ति–र्दिगन्तरे क्रीडति नर्त्तकीव ॥ ३० ॥ तत्पट्टोदयभूधरोच्चशिखरे भास्वत्प्रभाभासुरो–राजद्राजकलापबोधनपटुप्रज्ञः प्रमादोज्झितः। सिद्धान्तोदधिपारगः परमतप्रेक्षावतां पण्डितः, सूरिश्रीमद्बुद्धिसागरमहाचार्यः कृतार्थक्रियः ॥ ३१ ॥ नानादेशविहारकर्मठमतिर्यः पावयन्भूतलं. वाचस्पत्ययशोवितानमतुलं विस्तारयँस्तेजसा। विद्यारत्नसमुद्भवेन सकलान्वादिप्रबन्धाञ्जयन्। सार्वज्ञं विशदार्थतत्त्वनिचयं सत्यापयामासिवान् ॥ ३२ ॥ यो विद्वज्जनसंसदि प्रथितधीर्धीरः सतामग्रणी–र्धीरः स्वेतरतत्त्वयुक्तिमथने क्षीरोज्ज्वलत्कीर्त्तिकः। ग्रन्थानष्टशतं सुबोधविशदान्यो निर्ममे नूतनान्, भव्यानामुपकारकारकधिया योगीन्द्रसेव्यक्रमः ॥ ३३ ॥ येषां शिष्यगणो विराजति भववैराग्यरङ्गोत्सवः, क्षीणक्रोधरयः प्रकामपटुतां शास्त्रेषु संधारयन्। नानापत्तनसंस्थितिं क्रमविदां धूर्यः प्रकुर्वन्मुदा, भव्यानां भवभीतिभेदकवरं बोधं प्रदत्ते सदा ॥ ३४ ॥ यत्पट्टे सूरीन्दु–रजिताब्धिरशेषतत्त्वबोधज्ञः। कविकुलकलितख्यातिः प्रसिद्धवक्त्रादिमो विभात्येषः ॥ ३५ ॥ यः शिष्टार्थविचक्षणः शुभमतिः प्राचीनपाठं स्मरन्, शस्तं चान्द्रचरित्रमुत्कटगुणं लोकोपकारक्षमम्। निर्माय प्रतनुस्वकर्मकरणात्पारोक्ष्यभावोज्झितः, शश्वच्छान्तिसुखोज्ज्वलाक्षयगृहंश्रीसूरिरासेवते ॥ ३६ ॥ श्रेयश्चन्द्रचरित्रमुन्नतधिया निर्वाच्य सन्तः सदा, मिथ्यात्वप्रसरावरोधकवरं सम्यक्त्वसंपादकम्। मोदन्तां सुसमाहितोक्तिपटवः संवेगरङ्गान्विता,क्षन्तव्यं यदि धीधनैः स्खलनता जाता क्वचिन्मानवी ॥ ३७ ॥ पूज्यश्रीविजयान्तमोहनमुनिस्पष्टीकृतोर्वीपति–श्रीमच्चन्द्रनरेशरासरचनासारेण सिद्धाशयः।

जग्रन्थेऽजितसागरोमुनिवरश्चित्रं चरित्रं मुदे, भव्यानां वर्षासु राजनगरे, कृत्वा स्थितिं चान्द्रकम् ॥ ३८॥ यथामति मयाऽऽख्यातं, चन्द्रराजचरित्रकम् । पापपङ्कौघनिर्णाशे, निर्मलामृतसन्निभम् ॥ ३९ ॥ एषोऽर्थो विविधक्रमेण मुनिभिर्गीतोऽस्ति सद्बोधये, मुग्धानां जनभाषया बहुविधोऽप्यापि प्रथीयान्भुवि । गीर्वाणोत्तमवाग्विलासकरणं चैतन्मदीयं तथाऽ—प्यस्तु प्रीतिविधायकं शमरसं विद्वज्जनानां सदा ॥ ४० ॥ केचिद्धीविकला वदन्ति किमिदं प्राचीनमेतत्स्थितं, सर्वं सर्वजनप्रसिद्धमपरप्ररूयापने किं फलम् ? । जाड्यत्वं हि तदीयमुत्कटतरं संभाव्यते तेन वै, प्रज्ञावान्यतते शुभार्थविषये स्वाऽन्योपकारप्रियः ॥ ४१ ॥ तीर्थीभूतचरित्रमिष्टसुखदं श्रीचन्द्रराजीयकं, तीर्थाधीशचरित्रवद्गुरुगुणाम्भोजोष्णरश्मिप्रभम् । दुष्कर्मद्रुमराशिभञ्जनविधौ मत्तेभलीलां दध—न्मोक्षश्रीत्रिदशेशशर्मविभवं दत्ते नराणां सदा ॥ ४२ ॥ तपत्ययं यावदनल्पतेजा—विभावसुर्लोकसुखैकहेतुः । शशाङ्कमूर्त्तिश्च विभाति ताव—च्चान्द्रं चरित्रं जयतात्पृथिव्याम् ॥४३॥ जयताज्जैनधर्मोऽयं, श्रीसंघस्यास्तु मङ्गलम् । वक्तृश्रोतृजनानाञ्च, मङ्गलानि भवन्तु वै ॥ ४४ ॥

इतिश्रीचन्द्रराजचरित्रं समाप्तम्॥

